त्रिजगत्तारकतीर्थकरवचनपीयूषपीनश्रीमत्तपागच्छीयमहोपाध्यायश्रीधर्मसागरोपाध्यायप्रणीता
तपोगच्छीयपरमशुद्धसामाचारीसुरसौधानुपमाव्याबाधस्तम्भाभा

# श्रीप्रवचनपरीक्षा (श्रीहीरसूरीयाभिधा)

## कुपक्षकौशिकसहस्रकिरणः (ग्रन्थकृत्कृताऽभिधा) (उत्तरभागः)


मुद्रयित्री—मालवदेशान्तर्गतरत्नपुरीयश्रीऋषभदेवजीकेशरीमलजीत्यभिधाना श्वेताम्बरसंस्था

मुद्रकः—शा. फकीरचंद मगनलाल बदामी. धी 'जैन विजयानंद' प्रीन्टींग प्रेस, कणपीठ बजार-सुरत.

श्रीवीरसंवत् २४६३ विक्रमसंवत् १९९३ क्राइष्टसन् १९३७ प्रतयः ५०० पण्यं ४-०-०

# वाचकेभ्यो विज्ञप्तिः

महाशया ! विलोकनीयोऽयमासमाप्तेः श्रीजिनप्रणीतपदार्थानां यथावस्थितानां प्रतीत्यर्थं, न ह्यतथ्यपदार्थप्रतीतौ जैननामधारणमात्रेण मोक्षमार्गाराधनं कस्यापि कदापि जायते जातं वा, अत एव श्रीउमास्वातिभिः तत्त्वार्थश्रद्धानं सम्यग्दर्शनं श्रीहरिभद्रसूरिभिश्च तत्तत्थसद्दहाणं श्रीउत्तराध्ययनेष्वपि तहियाणं तु भावाणं इत्याद्युक्त्वा निर्बाधं निर्धारितं सम्यक्त्वस्य लक्षणं पदार्थानां यथार्थप्रतीतिरूपं,ततो विहाय पक्षपरिग्रहाग्रहं यथास्थितमेव तत्त्वं श्रद्धेयं सम्यक्त्वकामुकैः,न च पूर्वपक्षोत्तरपक्षयोः श्रवणमननाद्यन्तरा कदापि भवति भव्यं तत्त्वश्रद्धानं, पुस्तकारोहात् प्रागुत्पन्नानां प्रवचनविडंबकानां मतस्य निरासस्तु सूत्रनिर्युक्तिभाष्यकारादिभिर्विस्तरेण विहितः, परं तदनूत्पन्नानां सन्तानतां चाधुनातनेऽपि यथार्हतया प्रवचनपराभवपरायणबुद्धीनां निरासस्तु संपूर्णतयाऽत्रैवास्ति, ततो विलोकयन्तु विचक्षणा एनं ग्रन्थं विवेकवृद्ध्यर्थं, धर्मपरीक्षावसरे यथा व्युद्ग्राहितानां न श्रेयोलेशावाप्तिः तथा तत्त्वजिज्ञासूनां यथार्थप्रवचनविवेकावसरेऽपि न परीक्षाकर्तरि द्वेषलेशेऽपि कल्याणकणस्यापि प्राप्तिः, ततो विहाय तं वीतरागवचनानुसारिवक्तरि यथार्थमीक्षन्तामीक्षाप्रवणाः समीक्षका एनं,ग्रन्थस्य चैनस्य महत्तायां चेदिच्छा विलोकनीयः श्रीसिद्धचक्रगतः पृथग्मुद्रितश्च प्रवचनपरीक्षामहत्तेत्यभिधो निबन्धः, दृग्गोचरीकृत्य चैमौ यथार्थतत्त्वप्रतीतिपरायणा भवन्तु सन्त इत्यभिलापपूर्वकं वाचनायार्थ्यन्ते

आनन्दसागराः जामनगर वैशाखशुक्ला तृतीया

देवतोद्दिध्यावत्तीर्थसद्भावश्रीमत्तपोगणानुपमसौधानन्यस्तम्भोपम-
महामहोपाध्यायश्रीधर्मसागरोपज्ञा

# श्रीप्रवचनपरीक्षा (द्वितीयो विभागः)

अथोत्पत्तिकालक्रमेण प्राप्तं सार्द्धपौर्णिमीयकमाह—

अह सड्ढपुण्णिमीओ पुण्णिमपक्खाउ सुमतिसिंहाओ। छत्तीसुत्तरबारससएहिं जाओ अ विक्कमओ ॥१॥

'अथे'ति स्तनिकानन्तरं सार्द्धपौर्णिमीयकः पूर्णिमापक्षात् सुमतिसिंहात्-सुमतिसिंहनाम्न आचार्यात् विक्रमतः षट्त्रिंशदधिकद्वादशशतवर्षे गते १२३६ जातः-समुत्पन्नः, अत्र पूर्णिमापक्षाज्जात इत्यनेन निर्गतनिर्गतत्वमस्य सूचितं, यतो वृहद्गच्छात् पूर्णिमापक्षो निर्गतस्ततोऽयमिति,सुमतिसिंहादित्यनेन सार्द्धपौर्णिमीयकपक्षस्य प्रथमाचार्यः प्रदर्शितः, उत्तरार्द्धेन निर्गमकालोऽपीति गाथार्थः ॥१॥ अथ गाथासङ्केन तन्निर्गमव्यतिकरं दिदर्शयिषुः प्रथमगाथामाह—

सिरिहेमचंदसूरी दूसमसमयंमि केवली वुत्तो। परसमयंमि पसिद्धो सिद्धो सद्दाइसत्थेसु ॥ २ ॥

तस्सुवएसा जीवाजीवाइविसारओ दयापवरो। राया कुमारवालो जाओ परमारिहयरेहा ॥ ३ ॥

अह अण्णया कयाई कुमरनरिंदेण पुच्छिओ सूरी। पुण्णिमपक्खसरूवं परूविअं तेण तस्स पुरो ॥४॥
तत्तो रण्णा भणिअं सिद्धंतासायगो महापावो। मा चिट्ठउ मे रज्जे इअ चिंतिअ सूरि विण्णत्तो ॥ ५ ॥
सूरिभणिएण विहिणा निज्जुहिओ पुण्णिमो अ निअरज्जा। एवं दिवं गयंमि अ सूरिंमि दिवं गओ राया ॥६॥
रहचरिआए एगो समागओ सुमतिसिंहनामेणं। पत्तणनयरे दिट्ठो पुट्ठो लोएण कोऽसि तुमं ? ॥ ७ ॥
तेणुस्सुकेण भणिअं पुण्णिमिओ सड्ढपुव्वओ अहयं। जाया तन्नामेणं तस्संतइ सुड्ढवयणमिणं ॥ ८ ॥

श्रीहेमचन्द्रसूरिर्दुष्पमासमये केवली त्रिकोटीग्रन्थकर्त्ता कलिकालसर्वज्ञ इति जैनसमये पण्डितैरुक्तः, परसमये-नैयायिकान्यतीर्थिकशासने शब्दादिशास्त्रेषु-व्याकरणादिग्रन्थेषु सिद्ध इव सिद्ध इति प्रसिद्धः-ख्यातिमान्, अत एवाद्याप्यन्यतीर्थिका ब्राह्मणादयः शब्दनिष्पत्त्यादिविप्रतिपत्तौ यदाहु श्रीहेमसूरित्यादिवचोभिः सिद्धान्तयन्तीतिगाथार्थः ॥२॥ तस्योपदेशात्-श्रीहेमाचार्योपदेशाज्जीवाजीवादिषु नवसु तत्त्वेषु विशारदो-निपुणो दयाप्रवरः-सर्वप्राणिष्वनुकम्पाश्रेष्ठो राजा कुमारपालः परमार्हतरेखा-परमाः-प्रकृष्टा ये आर्हताः-श्रावकास्तेषु रेखा-रेखाबद्धः, अद्वितीय इत्यर्थः, आस्तां जीवमारिः, वचोमात्रेणापि मारिशब्दो न भणनीय इत्यनुकम्पापरायणोऽभूद्, एषा च स्वान्यसमयेषु प्रसिद्धिरद्यापि निश्चला इति, इतिगाथार्थः ॥३॥ अथान्यदा-एकदा प्रस्तावे कुमारनरेन्द्रेण पूर्णिमापक्षस्वरूपं-कोऽयं तीर्थाद्भिन्नः पूर्णिमापक्षः कीदृशश्चेत्यादि पूर्णिमापक्षव्यतिकरं सूरिः-श्रीहेमचन्द्रसूरिः पृष्टः-प्रश्नविषयी कृतः, तेन सूरिणा तस्य-राज्ञः पुरः स्वरूपं-पूर्णिमापक्षस्वरूपं प्ररूपितं, यथा-श्रीचन्द्रप्रभाचार्य १ श्रीमुनिचन्द्रसूरिः २ श्रीमानदेवसूरिः ३ श्रीशान्तिचन्द्रसूरिश्चेति ४ चत्वारोऽप्याचार्या एकगुरुशिष्याः, तेषु श्रीमुनिचन्द्रसूरिः संवेगवैराग्यादिगुणनिधिः सर्वलोक-

विख्यात इत्यादि यावन्मुनिचन्द्रसूरिमत्सरेण चन्द्रप्रभाचार्यः पूर्णिमापक्षं प्रादुष्कृतवानित्यादि द्वितीयविश्रामोक्तं सर्वमप्युक्तमिति-गाथार्थः ॥४॥ तत्स्वरूपं निशम्य राज्ञा भणितम्–अयं सिद्धान्ताशातको महापापः, ततो मे राज्ये मा तिष्ठतु इति चिन्तयित्वा सूरिर्विज्ञप्तः–एतादृशो मे राज्यात्कथं निष्काश्य इत्यादीतिगाथार्थः ॥५॥ सूरिभणितेन विधिना, तत्र विधिरेवं–प्रथमं श्रीसूरिणा भो पौर्णमीयक! पूर्णिमापाक्षिकं न सिद्धान्ते न वा परम्परायामिति, अत्र यदि तव समीहा स्यात् तदा विचारयाम इत्युक्ते भणितवान् "रूसउ कुमरनरिंदो अहवा रूसउ हेमसूरिंदो। रूसउ य वीरजिणिंदो तहावि मे पुण्णिमापक्खो॥१॥" इत्यनुचितवचसा विशेषतो रुष्टेन राज्ञा भणितं "साहूण चेइआण य पडिणीअं तह अवण्णवायं च। जिणपवयणस्स अहिअं सव्वत्थामेण वारेइ ॥१॥"त्ति भगवदुपदेशात् मया किं कर्त्तव्यमित्यादि, ततः श्रीसूरिणा प्रवचनोड्डाहं चेतस्यवधृत्य रोषादुपशमितेन राज्ञा निजराज्याद्–अष्टादशदेशेभ्यो निष्काशितः पूर्णिमीयकः, एवं कियता कालेन सूरौ–श्रीहेमचन्द्राचार्ये दिवं गते सति राजा–कुमारपालनामापि दिवं गत इतिगाथार्थः ॥६॥ इदानीं पत्तनादौ कीदृग् व्यतिकरोऽस्तीति विलोकननिमित्तं रहश्चर्यया–न्यग्वृत्त्या नाम्ना सुमतिसिंहाचार्यः पत्तने समागतः, तत्र दृष्टः सन् लोकेन पृष्टः–कोऽसि त्वमितिगाथार्थः ॥७॥ तेन–सुमतिसिंहाचार्येणोत्सुकेन–निर्भयतया सोत्साहोत्कर्षेण सार्द्धशब्दः पूर्वं यस्य स एवंविधः पौर्णिमीयकः–सार्द्धपौर्णिमीयकोऽहमिति भणितमित्यर्थः, तत आरभ्य तत्संततिस्तन्नाम्ना जातेतीदं वृद्धवचनमितिगाथार्थः ॥८॥ अथ केचित्तदीया वदन्ति यत्तदाह—

केइवि भणंति पुण्णिमसमुदाए सुमइसिंह आयरिओ। पगईए सोमालो तेणं सो साड्ढपुण्णिमिओ ॥९॥

केचित्पूर्णिमीयका भणन्ति–पूर्णिमासमुदाये सुमतिसिंहाचार्यः प्रकृत्या सुकुमारः, मृदुप्रकृतिक इत्यर्थः, तेन तदपत्यानां साधु-

पौर्णिमीयक इत्याख्या, केचिच्च तदीया एव जिनप्रतिमानां पुरस्तात् कर्पूरवासजलफलादिपूजानिषेधनेन साधुमार्गप्रवर्त्तनात् साधु-पौर्णिमीयक इत्यपि बोध्यमितिगाथार्थः ॥९॥ अथ तस्य प्ररूपणामाह—

कप्पूरवासजलफलदव्वेहिं न होइ दव्वजिणपूआ। सेसमुवएसपमुहं पुण्णिमसरिसं मुणेअव्वं ॥१०॥

कर्पूरवासजलफलद्रव्यैः द्रव्यजिनपूजा न भवति, कर्पूरेण-घनसारेण मिश्रितो यो वासः-चन्दनचूर्णं यद्वा कर्पूरश्च वासश्चेति द्वन्द्वः तेन ताभ्यां वा प्रातः श्राद्धैः पूजा क्रियते सा तेन प्रतिषिद्धा, तथा जलफलादीनां पुरो ढौकनेन याऽग्रपूजा क्रियते साऽपि तेन प्रतिषिद्धा, तत्राष्टप्रकारादिपूजासु वासादिभिः पूजा प्रतीतैव, यदुक्तं-"पंचोपचारजुत्ता पूआ अट्ठोवयारकलिआ य। रिद्धिविसेसेण पुणो नेआ सव्वोवयाराविं ॥१॥ तहिअं पंचुवयारा कुसुम१क्खय२गंध३धूव४दीवेहिं५। कुसुम १ क्खय २ गंध ३ पईव ४ धूव५नेवेज्ज६फल७जलेहि ८ पुणो ॥२॥ अट्ठविहकम्महणणी अट्ठुवयारा हवइ पूआ ॥३॥ षट्पदी, सव्वोवयारपूआ ण्हवणच्चणवत्थभूसणाईहिं। फलबलिदीवाईनट्टगीअआरत्तिआईहिं ॥२॥ इति बृहद्भाष्यादौ, तथा 'अरहंताणं भगवंताणं गंधमल्लपईवसम्मज्जणविलेवणविचित्तबलिवत्थधूवाइएहिं पूआसक्कारेहिं पइदिणमब्भच्चणं पकुव्वाणा तित्थुत्थप्पणं करेमो'त्ति श्रीमहानिशीथे तृतीयाध्ययने, इत्याद्यागमेषु कर्पूरवासजलफलप्रदीपादिद्रव्यैर्द्रव्यपूजायाः सद्भावात्, तथा परम्पराया अपि विद्यमानत्वाचाकिंचित्कर एवास्योपदेशः। शेषम्-एतत्प्ररूपणादतिरिक्तमुपदेशप्रमुखम्-उपदेशप्रवृत्त्यादिकं पूर्णिमासदृशं-पौर्णिमीयकमतसमानं ज्ञातव्यं, द्वितीयविश्रामे वर्णितो यो राकारक्तः पूर्णिमापाक्षिकादिवितथप्ररूपणाऽऽसक्तस्तन्निराकरणमत्रापि बोध्यमितिगाथार्थः ॥१०॥ अथ पञ्चमविश्रामोपसंहारमाह—

एवं कुवक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। चक्खुप्पहावरहिओ कहिओ सो सड्ढपुण्णिमिओ ॥११॥
नवहत्थका० ॥ १२ ॥ इअ सासण० ॥ १३ ॥
इअ कुवक्खकोसिअसहस्सकिरणंमि सड्ढपुण्णिमिअमयनिराकरणनामा छट्ठो विस्सामो सम्मत्तो ॥

व्याख्या प्राग्वत् ॥११॥ अथायं सार्द्धपौर्णिमीयकः कस्मिन् संवत्सरे कस्मिंश्च गुरौ विद्यमाने सत्यस्मिन् प्रकरणे भणित इति प्रदर्शनार्थं गाथामाह–प्राग्वत् ॥ १२–१३ ॥

इतिश्रीमत्तपागणनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणिविरचिते स्वोपज्ञकुपक्षकौशिक-सहस्रकिरणनाम्नि प्रकरणे सार्द्धपौर्णिमीयकमतनिराकरणनामा षष्ठो विश्रामो व्याख्यात इति ॥

अथ क्रमप्राप्तं त्रिस्तुतिकापरनामागमिकमतमाह—
अह आगमिअं कुमयं पायं थणिउव्व सव्वलोअमयं। पंचासुत्तरबारससएहिं वरिसेहिं विक्कमओ ॥१॥
'अथे'ति सार्द्धपौर्णिमीयकनिरूपणानन्तरमागमिकं कुमतं प्रायः स्तनिकवत्सर्वलोकमतं–सर्वजनप्रतीतं विक्रमतो–विक्रमसंवत्सरात्पञ्चाशदुत्तरद्वादशशतैर्वर्षैः १२५० जातमिति गम्यमितिगाथार्थः ॥१॥ अथ गाथात्रयेण तद्व्यतिकरमाह—
सीलगणदेवभद्दा नामेणं निग्गया य पुण्णिमओ। पल्लवपक्खे पत्ता तत्तोऽविअ निग्गया समए ॥२॥
सत्तुंजयस्स पासे मिलिआ सत्तह वुड्ढगणमुणिणो। गणनिग्गया य तेसिं सव्वेहिवि मिलिअ दुज्झायं ॥३॥

"सासणसुअदेविथुईपडिसेहपरायणं नवीणमयं। पयडिकयं पावुदया तत्थ जुइ विगप्पिआ एवं ॥४॥

नाम्ना शीलगणदेवभद्रौ पौर्णिमीयकात्-पूर्णिमाकुपक्षान्निर्गतौ पल्लवपक्षे-अंचलपक्षे प्राप्तौ, पौर्णिमीयकैर्निष्काशितौ स्तनिकपक्ष-निश्रां कृतवन्ताविल्यर्थः, तौ च तत्राधीत्य लब्धाचार्यपदौ ततो निर्गतौ समये-प्रस्तावे शत्रुञ्जयस्य पार्श्वे-शत्रुञ्जयपरिसरे तयोः वृद्धगणमुनयः सप्ताष्टौ वा गणनिर्गता मिलिताः, तैश्च सर्वैरपि मिलित्वा दुर्ध्यातं-दुष्टं पर्यालोचितं, यदि वयं किञ्चिन्नवीनं मतं प्ररूपयामः तदा शोभनमित्येवंरूपेण विचारितम्, अथ यथा विचारितं तदाह-शासनश्रुतदेवी-शासनदेवी श्रुतदेवी उपलक्षणात् क्षेत्रदेवता शासनसुरादयस्तेषां स्तुतिः-"सुअदेवया भगवई" इत्यादिरूपा तस्याः प्रतिषेधे परायणं-तत्परं नवीनं मतं, प्रकटीकृतम्, एतावता यथा ध्यातं तथैव जनानां पुरस्तात्प्ररूपितमित्यर्थः,तत्र युक्तिर्विकल्पिता एवं-वक्ष्यमाणलक्षणा इतिगाथात्रयार्थः॥२-३-४॥ अथ तस्य कुयुक्तिमाह--

तित्थयरो असमत्थो जेसुवि कज्जेसु तेसु को अण्णो। किं हुज्जावि समत्थो ? ता कह सुअदेवयवराई ?॥५॥

येषु कार्येषु तीर्थकरोऽसमर्थः-शक्तिरहितस्तेषु कृत्येषु किं कोऽयं-तीर्थकरादपरः समर्थो भवेद्?, अपितु न भवेत्, ता-तर्हि श्रुतदेवता वराकी कथं भवेत्?, तस्माद् ज्ञानाद्यर्थं तस्याः प्रार्थनमकिञ्चित्करमित्यर्थ इतिगाथार्थः ॥५॥ एतादृग्युक्तिवक्ता कीदृग् स्यादित्याह--

इच्चाइअजुत्तीहिं मूढो मूढाण चक्कवट्टिसमो। न मुणइ वत्थुसहावं दिणयरदीवाइआहरणा ॥६॥



इत्यादिकयुक्तिभिरर्थाद्ब्रुवाणो मूढो मूढानां मध्ये चक्रवर्तिसमो-मूर्खशेखरो वत्थुसभावं-वस्तुस्वरूपं जगदुदरवर्तिपदार्थ-

परिणतिं न जानाति, अयं भावः—अनन्तबलभृत्तीर्थकरो यद्यसमर्थस्तर्हि बहुमार्थितापि वराकी श्रुतदेवता कथं समर्था इति श्रुतदेवता-स्तुतिर्निासार्क सम्मतेत्यर्थः, तत्र वस्तुस्वरूपं न जानातीत्यत्र दृष्टान्तमाह—'दिनकरे'त्यादि, दिनकरदीपाद्युदाहरणाद्—अन्धकार-नाशने समर्थोऽपि दिनकरः—सूर्यः प्रदीपसाध्ये—भूमिगृहाद्यन्धकारनाशे न समर्थः, यः सामर्थ्यमधिकृत्याधिकः स सर्वत्रापि समर्थ एव स्याद् एवं नियमो नास्तीति दिनकरदीपदृष्टान्तेन श्रुतदेवतासाध्ये कार्येऽर्हन् समर्थ एव स्यादिति नियमाभावो दर्शितः, तथैव वस्तुस्वभावाद्, अत एव श्रीगौतमप्रबोधितोऽपि कर्षकः श्रीमहावीरदर्शनाद्दर्शनादिशून्यः संसारं भ्रान्त इत्यागमप्रसिद्धेरिति-गाथार्थः ॥६॥ अथ पुनरपि लोकसिद्धदृष्टान्तमाह—

**महफलओ सहगारो जंबूफलकारणंपि किं हुज्जा ?। कोहंडीफलहेऊ किं सहगारो समिद्धोऽवि ? ॥७॥**

महाफलदोऽपि कलिकाले कल्पद्रुमोपमया फलदाताऽपि सहकारः किं जम्बूफलकारणमपि भवेद् ?, अपि तु न भवेत्, यद्वस्तु महत् सन्महाफलकारणं तत्तुच्छफलकारणं भवत्येवेति नियमो नास्त्येवेति दर्शितं, किञ्चित्फलं महदपि तुच्छजन्यं महताऽपि जनयितुमशक्यमित्यत्र दृष्टान्तमाह—'कोहंडी'ति कूष्माण्डीफलहेतुः किं समृद्धोऽपि—वसन्ततौ पत्रमञ्जर्यादिसंयुक्तोऽपि सहकारः—आम्रवृक्षः किं स्याद् ?, अपितु न स्यात्, कूष्माण्डी नाम वल्लीविशेषः, सा च सहकारादिमहावृक्षापेक्षया तुच्छा स्त्रीरूपाऽपि यन्मह-त्फलं ददाति तत्सहकारादिना केनापि दातुं न शक्यते, तेन यत्फलं श्रुतदेवतया दीयते तत्फलं केनापि दातुमशक्यम्, अत एव श्रीहेमाचार्येण सरस्वती समाराधिता प्रवचनप्रभावनाहेतुः संपन्नेत्यग्रे दर्शयिष्यते इति गाथार्थः ॥७॥ अथास्तामन्यत्, तीर्थकरे विद्यमानेऽपि तीर्थकरासाध्यं तदतिरिक्तजनसाध्यं चेति दर्शयति—

संतंमि अ तित्थयरे गोअमपमुहावि साहुणो सव्वे। भिक्खट्ठावि पविट्ठा कुलेसु गाहावईणंपि ॥८॥

सति च-चोऽप्यर्थे सत्यपि तीर्थकरे-श्रीमहावीरनाम्नि विद्यमानेऽपि गौतमप्रमुखाः-साधवो भिक्षार्थमपि-अन्नपानादिनिमित्तं गृहपतीनां-गृहस्थानां कुलेषु प्रविष्टाः,चारित्राराधनहेतोरन्नपानादेर्दानशक्तिर्यथागार्यगारिणीनां न तथा तीर्थकृतामपि इतिदृष्टान्तेन यथा चारित्रावष्टम्भनसामर्थ्यं श्रुतदेवतादीनां न तथा तीर्थकृतामपीति,अनया दिशाऽनेके दृष्टान्ताः स्वयमभ्यूह्याः, यथा बहुमूल्येनापि रत्नेनासाध्यमपि कार्यं शीतत्राणादिकं वस्त्राद्यादिसाध्यं, घृतेनासाध्यमपि शौचकर्मादिकं पिपासोपशमनादिकं च जलसाध्यमित्यादि लोकसिद्धं लोकोत्तरेऽपि वैयावृत्त्याद्युपष्टम्भनादिना यथा साधवस्तीर्थप्रवृत्तिहेतवो न तथा तीर्थकृतोऽपीत्यादीतिगाथार्थः ॥ ८ ॥ अथ त्रिस्तुतिकः शङ्कते—

णणु सुअदेवीथुणणे भवविरहवराइपत्थणा तीए। णो जुत्ता जमसंतं वत्थुं किं कोऽवि दिज्जावि ? ॥९॥

ननु भोः श्रुतदेवतास्तवने 'आमूलालोलधूलीबहुलपरिमलालीढलोलालिमालाझङ्कारारावसाराऽमलदलकमलाऽगारभूमीनिवासे। छायासंभारसारे ! वरकमलकरे ! तारहाराभिरामे !, वाणी संदोहदेहे भवविरहवरं देहि मे देवि ! सार ॥१॥ मित्यादिरूपे भवविरहवरादिप्रार्थना तस्याः श्रुतदेवताया न युक्ता,यद्-यस्मात् कारणादसद्वस्तु-स्वसत्तायामविद्यमानं वस्तुजातं कोऽपि किं दद्यादपि ?, अपि तु न कोऽपि दद्याद्, अयं भावः-श्रुतदेवताया एव भवविरहाभावात् कथं सा भवविरहवरं दद्याद् ?, न हि स्वसत्तायामविद्यमानं वस्तुजातं दातुं कोऽप्यलं भवेत्, तस्मादकिञ्चित्करी श्रुतदेवतास्तुतिरिति गाथार्थः ॥९॥ अथ स्वसत्तायां विद्यमानमेव वस्तु दीयते नान्यदिति नियमाभावं दर्शयन् दूषयति—

नेवं निअमो जम्हा दिंति असंतंति नेव संतंपि। जिणपमुहा सुअणाणं केवलणाणं च आहरणं ॥१०॥

नैवं नियमः-सदेव दीयते नान्यदित्येवं नियमो नास्तीति, अत्र व्यभिचारस्थानमाह-'दिंति'त्ति जिनप्रमुखाः-जिनेन्द्राचार्यादयोऽसदपि-स्वसत्तायामविद्यमानमपि ददति, सदपि विद्यमानमपि च न ददति, तत्किमुदाहरणमित्याह-श्रुतज्ञानं केवलज्ञानं चोदाहरणम्, अयं भावः-जिनेन्द्राणां स्वसत्तायां श्रुतज्ञानं नास्ति तदपि 'उप्पन्नेइ वे'त्यादिमातृकापदेन तेऽर्हंतो द्वादशाङ्गीमपि भावश्रुतं प्रयच्छन्ति, अत एव शक्रस्तवे 'चक्खुदयाण'मित्यर्हतां विशेषणं, न चार्हतां श्रुतज्ञानं सत्तायां भविष्यतीति शङ्कनीयं, छाद्मस्थिके ज्ञाने नष्ट एव केवलोत्पत्तेः, यदागमः-"उप्पण्णंमि अणंते नहंमि उ छाउमत्थिए णाणे"त्ति, अस्ति च केवलज्ञानं तदंशमपि न प्रयच्छन्ति, विद्यमानस्यापि तस्य दानाशक्तेः, अत एव मत्यादिज्ञानचतुष्टयस्य नोद्देशादिकं, श्रुतज्ञानस्य तु तस्य सत्त्वात्, यदागमः-"चत्तारि णाणाइं ठप्पाइं ठवणिज्जाइं, णो उद्दिसज्जंति यावत् सुअणाणस्स उद्देसो समुद्देसो अणुण्णा अणुओगो पवत्तइ"त्ति, तथा अकेवलिनोऽपि गौतमादयः स्वशिष्यान् प्रति हेतुमात्रभवनेन केवलज्ञानदायिनो, न तथा लब्ध्यादीनामपीत्येवमुदाहरणेन यद्यपि श्रुतदेवताया भवविरहो नास्ति तथापि तादृग्वस्तुस्वभावाद् दद्याद्वा भवविरहहेतुत्वात् कारणे कार्योपचाराद्भवविरहरूपाणि ज्ञानादीनि तेषां दात्री भवत्येव, ननु श्रीहेमाचार्यादिदृष्टान्तेन श्रुतज्ञानदातृत्वं भवतु, एवं दर्शनस्यापि नासंभवो, यतो देवादिभ्योऽपि सम्यक्त्वलाभश्रवणात्, परं चारित्रं तु ततो न भवत्येवेतिचेन्मैवं, हेतुमात्रेण मेतार्यादीनामागमे प्रतीतत्वात्, शासनदेव्यादिभ्यो रजोहरणादिलिङ्गलाभात् प्रत्येकबुद्धादीनामपि द्रव्यचारित्रलाभस्याविरोधात्, तेन तद्वरप्रार्थनं नायुक्तमितिगाथार्थः ॥१०॥ न चैवं सर्वथा नियमाभाव एव, किंतु कश्चिन्नियमोऽपीत्याह—

जो पुण कत्थवि नियमो दीसइ दव्वंमि न उण भावेऽवि। अण्णह पडिमापमुहाऽऽराहणमवि निप्फलं पावे॥११॥

यः पुनः कुत्रापि नियमो दृश्यते स द्रव्ये–द्रव्यविषयोऽवगन्तव्यो, द्रव्यं हि कनकादिलक्षणमन्नादिलक्षणं वा दीयमानं विद्यमानमेव–स्वसत्तायां वर्त्तमानमेव दीयते, न पुनरसत्, 'उप्पन्नेइ वा' इत्यादि मातृकापदरूपं यद्द्रव्यश्रुतं तद्गणधरेभ्यो विद्यमानं सदेव दीयते इति न व्यभिचारः, ननु तीर्थकरशासनदेवताभ्यां दीयमाने द्रव्यलिङ्गे व्यभिचारो, यतस्तयोरविद्यमानमेव द्रव्यलिङ्गं परेभ्यो दीयते इति चेत्सत्यं, तयोस्तथाविधकल्पत्वात्, तथाविधव्यतिकरातिरिक्तस्थले व्याप्तेर्नियमात्, यद्वा यद्यपि तीर्थकृच्छ्रुतदेवताभ्यां रजोहरणादिकं लिङ्गत्वेन चारित्रबुद्ध्या स्वयं गृहीतं नास्ति तथापि द्रव्यत्वेन सद्भूतमेव दीयते, न पुनरसदपि, तस्माद्द्रव्यमन्तरेण द्रव्योत्पत्तिदानाद्यसंभवात् द्रव्यविषयो नियमोऽव्यभिचारेण सिद्ध्यति, न पुनर्भावेऽपि–भावविषयोऽपि नियमः, न हि देयस्य भावस्य सद्भावो दातुरपि युज्यते, श्रुतज्ञानमाश्रित्य तीर्थकृत्येव व्यभिचारः प्रागेव दर्शितः, अन्यथा यदि भावोऽप्यात्मनि सन्नेव दीयते इति नियमः स्यात्तर्हि प्रतिमाप्रमुखाराधनं–जिनप्रतिमाद्याराधनं निष्फलं प्राप्नुयाद्, यतः सम्यग्दृष्टिपरिगृहीता जिनप्रतिमा भावग्रामतया भणिता, आदिशब्दात् सारूपिकादयोऽपि ग्राह्याः, यदागमः–"तित्थयरो १ जिण २ चउदस ३ भिण्णे ४ संविग्ग ५ तह असंविग्गे ६। सारूविअ७ वय८ दंसण ९ पडिमाओ १० भावगामा उ" ॥१॥ इतिश्रीबृहत्कल्पभाष्ये, तद्वृत्त्यैकदेशो यथा–तीर्थकरा–अर्हन्तः जिनाः–सामान्यकेवलिनः अवधिमनःपर्यायजिना वा चतुर्दशपूर्विणो दशपूर्विणश्च प्रतीताः 'भिण्ण'त्ति असंपूर्णदशपूर्वधारिणः संविग्नाः–उद्यतविहारिण असंविग्नाः–तद्विपरीताः सारूपिका नाम श्वेतवाससः क्षुरमुण्डितशिरसो भिक्षाटनोपजीविनः पश्चात्कृतविशेषाः 'वय'त्ति प्रतिपन्नाणुव्रताः श्रावकाः 'दंसण'त्ति दर्शनश्रावकाः अविरतसम्यग्दृष्टय इत्यर्थः प्रतिमाः–

अर्हद्बिम्बानि, एषः सर्वोऽपि भावग्रामः, एतेषां दर्शनादिना ज्ञानादिप्रवृत्तिसद्भावात्, अत्र परः प्राह–ननु युक्तं तीर्थकरादीनां ज्ञानादिभावरत्नत्रयसंपत्समन्वितानां भावग्रामत्वं, ये पुनरसंविग्नास्तेषां कथमिव भावग्रामत्वमुपपद्यते?, नैष दोषः, तेषामपि यथावस्थितप्ररूपणाकारिणां पार्श्वतो यथोक्तधर्ममाकर्ण्य सम्यग्दर्शनलाभ उदयते, अतस्तेषामपि भावग्रामत्वमुपपद्यते, कृतं प्रसङ्गेनेत्यादि बृह० वृ०, अथ प्रतिमानां सर्वथा ज्ञानादिशून्यत्वेऽपि परेषां ज्ञानादिहेतुत्वाद्, एवं सारूपिका अपि, अविरतदेशविरतास्तु श्रावकाः स्वयं चारित्रपरिणामरहिता अपि सदुपदेशेन परेषां तत्परिणामहेतवो भवन्ति, एवं श्रुतदेवताऽपि स्वयं अतथाभूताऽपि चारित्राद्युपष्टम्भहेतुत्वेन तस्याः तथाविधप्रार्थनाऽपि फलवत्येवेतिगाथार्थः ॥११॥ अथ जगत्प्रवृत्तिहेतुवस्तुस्वरूपप्ररूपणाय गाथायुग्ममाह—

दव्वाउ दव्वभावा नय भावा किंचि हुज्ज दव्वाइ। तेणेव जगपवित्ती कारणविसया फलद्वीणं ॥१२॥
फलजणयं खलु कारणमिह दिट्ठं तंपि नेव फलजुत्तं। साहुसरीरा मोक्खो न सरीरं मोक्खसंजुत्तं ॥१३॥

द्रव्यात् कनकादेर्द्रव्यं–कनककुण्डलादिकं द्रव्यं भावश्च–तथाविधजीवादेर्नानापरिणामविशेषः तावुभावपि भवतः, न च भावात् किंचिद्द्रव्यादि भवेत्, नहि तथाविधपरिणामात् किंचित्कनकादिकं संपद्यते, न वा स्वकीयपरिणाममात्रात् परकीयपरिणामोत्पत्तिः स्यात्, तेनैव कारणेन जगत्प्रवृत्तिः फलार्थिनां कारणविषया भवति, कारणं खलु इह जगति फलजनकं दृष्टमपि पुनस्तत्कारणं फलयुक्तं नैव–नास्त्येव, कारणं खलु इह जगति फलजनकं स्यात्, न पुनः फलयुक्तमपीतिभावः, फलयुक्तत्वे हि युगपद् द्वयोरुत्पत्तिः प्रसज्येत, तथा च कारणं कार्यात्पूर्वभावि पश्चाद्भावि च कार्यमिति सर्वजनप्रतीतिबाधा स्यात्, तत्र दृष्टान्तमाह–'साहु'त्ति साधुशरीरात्मोक्षः–सर्वकर्मक्षयलक्षणसिद्धिः स्याद्, यदागमः–"अहो जिणेहिं असावज्जा, वित्ती साहूण देसिआ। मुक्खसाहणहेउस्स

साधुदेहस्स धारणा ॥१॥ इति (५-१०१*) न च तत् शरीरं मोक्षसंयुक्तम्, एतावता मोक्षवियुक्तमपि मोक्षसाधनं, तथा श्रुतदेवताऽपि, शरीरादिवत्तस्या अपि धर्मसान्निध्यदानसंभवादिति गाथायुग्मार्थः ॥ १२ ॥ १३ ॥ अथोक्तयुक्तेः परमार्थमाह—

एवं कारणनिअयं कज्जं पुण कारणाइं णाणाइं। तेणप्पमहविगप्पो गोवाणवि हासहेउत्ति ॥ १४ ॥

एवं–प्रागुक्तप्रकारेण कार्यं कारणनियतम्–अमुकमेतादृशं कार्यममुकेनैव कारणेन जन्यं, कारणं चैतादृशममुकस्यैव कार्यस्य जनकमित्येवंरूपेणान्योऽन्यव्याप्तिमद्भवति, तानि च कारणानि नाना–विचित्रप्रकाराणि कर्तृकरणादीनि, तानि च कानिचिन्महान्त्यपि स्वानियतानामल्पानामपि कार्याणां कर्तॄणि न संभवन्ति, यथा प्रदीपापेक्षया महानपि सूर्यः प्रदीपप्रकाश्यं भूमिगृहं न प्रकाशयति, तथाऽर्हदमाध्यमपि कार्यं श्रुतदेवतासाध्यम्, अतस्तदर्थेच्छुना तत्स्तुतिः कर्त्तव्येति न दोषः, यत एवं तेन कारणेनाल्पमहद्विकल्पः–इदं महदिदं चाल्पमित्यादिकल्पना गोपानामपि हास्यहेतुः, यतस्तेऽप्युक्तयुक्त्या निर्णेतुं शक्ता इतिगाथार्थः ॥ १४ ॥ अथान्यथा प्रकारेण युक्तिमाह—

अण्णह अरहंताई पंच पया तत्थ एगमेव पयं। जुत्तं जइ असमत्थो अरिहंतो किन्नु सेसेहिं ? ॥ १५ ॥

अन्यथा–महान् पुरुषः स्वापेक्षया तुच्छपुरुषसाध्यं कार्यं करोत्येवेति यदि तर्हि अर्हदादीनि पञ्च पदानि, प्राकृतत्वात्पुंस्त्वं, तेष्वेकमेव पदं युक्तं,"नमो अरिहंताणं नमो सिद्धाणं नमो आयरिआणं नमो उवज्झायाणं नमो लोए सव्वसाहूणं" इति पंचानां पदानां मध्ये नमो अरिहंताणमित्येकमेव पदं युक्तं त्रिस्तुतिकाभिप्रायेण, यद्यर्हन्नसमर्थः नु इति वितर्के शेषैराचार्यादिभिः किं स्यात् ?, न किमपीत्यर्थः, तेन तन्मते नमस्कारोऽपि 'नमो अरिहंताण'मित्येकपदात्मक एव युक्तः, यद्याचार्यादिसाध्यं कार्यं तीर्थकरेणासाध्यं

तर्हि चिरं जीव आयातोऽसि स्वयमेवासदुक्तमार्गेण, श्रुतदेवतायामपि तथा श्रद्धेयमितिगाथार्थः॥१५॥ अथ येनाराधिता श्रुतदेवता सर्वजनप्रतीता फलदायिनी संवृत्ता तद्व्यतिकरं गाथात्रयेणाह—

तेणेव वीसठाणाराहणमरहंतगुत्तसुनिमित्तं। भणिअं तत्थवि पवयणपहावणा साऽवि कह हुज्जा?॥१६॥
इअ चिंतापरतंतो जिणभत्तो हेमचंदसूरिवरो। आराहिअ सुअदेविं जाओ कालिकालसव्वण्णू॥ १७॥
राया कुमारपालो निम्मविओ तेण परमसंविग्गो। अज्जवि कित्तिपयाया पवयणपासायसिहरंमि॥१८॥

येन कारणेन तीर्थकृदसाध्यमपि कियत्कार्यं श्रुतदेवतासाध्यं तेनैव कारणेन विंशतिः स्थानकानि अर्हत् १ सिद्ध २ संघ ३-आचार्य ४ स्थविर ५ उपाध्याय ६ साधु ७ ज्ञान ८ दर्शन ९ विनय १० चारित्र ११ ब्रह्मचर्य १२ शुभध्यान १३ तपः १४सुपात्रदान-१५ अर्हदादिवैयावृत्त्य १६ समाधि १७ अपूर्वश्रुत १८ श्रुतभक्ति १९ प्रवचनप्रभावना २० रूपाणि तेषामाराधनं—यथोचितविधिना यथाशक्ति तद्भक्तिकरणं अर्हद्गोत्रस्य—तीर्थकरनाम्नः सु—शोभनं प्रधानं निमित्तं—कारणं भणितं, वीरेणेति गम्यं, तत्रापि प्रवचनप्रभावना गरीयसी, यतो वस्तुगत्या सर्वाण्यपि स्थानानि तत्रान्तर्भवतीति, सापि प्रवचनप्रभावना कथं भवेत्?—केन प्रकारेण स्यादित्यमुना प्रकारेण चिन्तापरतन्त्रः—एवं चिन्तान्वितो जिनभक्तः—तीर्थकराज्ञातत्परो हेमचन्द्रसूरिवरः—श्रीहेमचन्द्रसूरिः श्रुतदेवीमाराध्य कलिकालसर्वज्ञो जातः, कलिकालसर्वज्ञ इति विरुदमुद्वहति स, तेन च कुमारपालो नाम राजा परमसंविग्नो निर्म्मापितः, प्रतिबोध्य परमार्हतीकृत इत्यर्थः, प्रागुक्तप्रकारेण कीर्त्तिपताका अद्यापि-सम्प्रत्यपि प्रवचनप्रासादशिखरे—जिनशासनलक्षणप्रासादमस्तके वर्त्तते इतिगाथात्रयेण श्रीहेमाचार्येणाराधिता श्रुतदेवता फलवती संपन्नेति दर्शितमिति गाथात्रयार्थः॥१६-१७-१८॥ अथ पुनरपि त्रिस्तुतिकः शङ्कते—

नणु साहूणमजुत्तं आराहण मंतदेवयाईणं। जं सड्ढाणवि समए पडिसिद्धं जक्खनिस्साई ॥ १९ ॥

मन्त्रदेवतादीनामाराधनं साधूनामयुक्तं, यद्-यस्मात्समये-सिद्धान्ते अर्थाद्भगवत्यां श्राद्धानामपि-श्रावकाणामपि यक्षनिश्रादि-यक्षनागादिनिश्रया धर्मकरणं प्रतिषिद्धं, यदि श्रावका अपि यक्षादिनिश्रारहिता अर्हत्प्ररूपितं मार्गं सम्यगाराधयन्ति तर्हि कथं साधवस्तन्निश्रया धर्मं कुर्वन्तीतिभावात्मकः पूर्वपक्ष इतिगाथार्थः ॥ १९ ॥ अथ त्रिस्तुतिकस्य सिद्धान्तपरमार्थानभिज्ञत्वमाविष्कर्तुमुपहासेनैव सिद्धान्तयति—

इअ चे किं तइअंगं पडिवक्खं किंच सूरिहरिभद्दो। सिरिभद्दबाहुपमुहा अबुहा जं तेहिं तं भणिअं ॥२०॥

इति चेद्-प्रागुक्तं यदि तर्हि तृतीयांगं-श्रीस्थानांगं किं प्रतिपक्षं-द्वेपि वर्त्तते येन तत्राराधनं भणितं, तथाहि "आयरिअउवज्झायाणं गणंसि पंच अतिसेसा पण्णत्ता, तं०-आयरिअउवज्झाए अंतो उवस्सगस्स पाए निगिज्झिअ २ पप्फोडेमाणे वा पमज्जेमाणे वा नातिक्कमंति १ आयरिअउवज्झाए अंतो उवस्सगस्स उच्चारपासवणं विगिंचमाणे वा विसोहेमाणे वा णातिक्कमंति २ आयरिअउवज्झाए पभू इच्छा विआवडिअं करेज्जा, इच्छा नो करेज्जा ३ आयरिअउवज्झाए अंतो उवस्सगस्स एगरायं दुरायं वा वसमाणेणाइक्कमंति ४ आयरिअउवज्झाए बाहिं उवस्सगस्स एगरायं दुरायं वा वसमाणे णातिक्कमंति ५" श्रीस्थानांगे (४३८), तद्वृत्त्येकदेशो यथा-अन्तरुपाश्रये एका चासौ रात्रिश्चेत्येकरात्रं द्वयो रात्र्योः समाहारो द्विरात्रं तद्वा विद्यादिसाधनार्थमेकाक्येकान्ते वसन्नातिक्रामति, तत्र तस्य वक्ष्यमाणदोषासंभवाद्, अन्यस्य तु तद्भावादितिचतुर्थः, एवं पंचमोऽपीत्यादि" श्रीस्थानांगवृत्तौ, अत्र विद्यादिसाधनं भणितं, आदिशब्दात् मन्त्रादितदधिष्ठातृदेवादिग्रहः, एतत्सूत्रं तु त्रिस्तुतिकस्य तव मते भगवत्या सह विरोधि कथं

युक्तिमदिति विचार्य, किंच-अथवा सूरिहरिभद्रः-श्रीहरिभद्रसूरिः भद्रबाहुप्रमुखाः-चकारो गम्यः श्रीभद्रबाहुप्रभृतयश्च अबुधाः-अपण्डिताः त्वदभिप्रायविचारशून्याः आसन्निति क्रियाध्याहारः, यद्-यस्मात्तैस्तद्भणितं-श्रुतदेवताद्याराधनं भणितं, तथाहि-श्रीहरिभद्रसूरिणा तु 'संसारदावानलदाहनीरं० १ भावाव० २ बोधा० ३ आमूलालो० ४ इतिस्तुतिः कृता, ननु श्रीहरिभद्रस्य कृतिरियं कथं निर्णीतिरितिचेदुच्यते, विरहशब्दलाञ्छितत्वाद्, यावती कृतिर्विरहशब्दलाञ्छिता तावती श्रीहरिभद्रसूरेरेव बोध्या, पंचाशकवृत्तौ तथैव भणितत्वात्, श्रीभद्रबाहवो यथा-"दुन्नि अ हुंति चरित्ते दंसणणाणे अ इक्क इक्को अ। सुअखित्तदेवयाए थुइ अंते पंचमंगलयं ॥१॥ इतिश्रीआवश्यकनिर्युक्तौ,तथा तत्रैव "चाउम्मासिअवरिसे उस्सग्गो खित्तदेवयाए उ। पक्खिअ सिज्जसुरीए करिंति चउमासिएऽवेगे ॥१॥ इतिश्रीआ० (२३६ भा०) एवमन्येऽपि शोभनमुनिप्रभृतयः स्तुतीः कुर्वाणाः शासनदेवतादीनां स्तुतिं कृतवन्तः, श्रीभद्रबाहुभिस्तु श्रुतदेवतादिस्तुतिकरणमच्छिन्नपरम्परागतमिति दर्शितमित्यत्र त्वदुद्भावितभगवतीसम्मत्या सह कथं संगतिरिति पृष्टेऽन्यतरस्य त्यागे स्वीकारे वोभयथाऽपि निजगलपाशकल्पस्त्रिस्तुतिकविकल्पः सिद्धः, नचायं दोषो भवतामप्यापद्यते इति वाच्यं, वक्ष्यमाणगत्याऽस्माकं तद्दोपगन्धस्याप्यभावादिति गाथार्थः ॥ २० ॥ अथ श्रुतदेवता वराकीति वक्ता त्रिस्तुतिकः कीदृशोऽवगन्तव्य इत्याह—

जीइ सहायत्तणओ पहावगा पवयणस्स संजाया। तंपि भणेइ वराइं वरायमुहरीवि उम्मत्तो ॥ २१ ॥

यस्याः श्रुतदेवतायाः सहाय्यत्वात्-साहाय्यात् प्रवचनस्य-जिनशासनस्य प्रभावकाः-श्रीहेमाचार्यादयः संजाताः-सम्यग् सर्वजनविख्याता आसन्, तामपि श्रुतदेवतां वराकीं वराकमुखर्यपि त्रिस्तुतिकः उन्मत्तो-वातादिरोगपरायत्तस्तथाविधदेवतायत्तो

वा भणति, वराकेषु मुखर्यपि य उन्मत्तो न स्यात्स न तथा भणति, यस्तु उन्मत्तोऽपि वराकोऽपि मुखरी न स्यात्सोऽपि न तथा वक्तेत्युभयोरपि विशेषणयोः सार्थक्यमितिगाथार्थः॥२१॥ अथ मिथ्याभिप्रायोद्भावितां भगवतीसम्मतिं सम्यगभिप्रायशिखरमारोपयन् गाथानवकं विभणिषुः प्रथमगाथामाह—

जं जक्खाइसहायाभावो भणिओ अ सावयाणंपि। तं धम्मंमि दढत्तं निदंसिउं दंसिआ समए ॥२२॥

यद्यक्षादिसहायाभावो–यक्षकिंनरनागादिसान्निध्याभावः श्रावकाणामपि धर्मे–जिनोक्तमार्गे दृढत्वं–दार्ढ्यं निदर्शयितुं–दृष्टान्तीकर्तुं समये–सिद्धान्ते दर्शितमित्यक्षरार्थः, भावार्थस्त्वयं–यदि यक्षादयो धर्मसान्निध्यं न करिष्यन्ति तर्हि अस्माभिर्धर्मो मोक्ष्यते इत्यभिप्रायेण धर्मकरणं न युक्तं, किंतु सम्यग्दृष्टयो देवा धर्मं कुर्वन्तामस्माकं यदि धर्मे सान्निध्यं कुर्वन्ति तदा शोभनं, नो चेत् स्वयमेव यथाशक्ति धर्मं करिष्याम एव, सान्निध्याभावे यद्युपसर्गादिकं भविष्यति तर्हि सम्यक् सहमानानामस्माकं बह्वी निर्जरेति, यथा 'अलब्धे तपसो वृद्धिर्लब्धे च देहधारण'मित्यादि, न चैवं यदेव बहुनिर्जराहेतुस्तदेवोचितं धर्मार्थिनां सेवितुमिति वाच्यं, प्रव्रज्याप्रतिपत्तेरारम्यानशनस्यैव च कर्तव्यतापत्तेः, अतो यत्किंचित् तद्विकल्पितमितिगाथार्थः ॥२२॥ अथ दृष्टान्तमाह—

जह जिअपरीसहा खलु अरिहंता साहुणो अ(व)भुंजंता। निच्चं तुववासजुआ भण्णइ न विरोहगंधोऽवि ॥२३॥

यथेत्युदाहरणोपन्यासे 'जितपरीषहाः' जिताः क्षुत्पिपासादिलक्षणाः परीषहा यैस्ते जितपरीषहाः, खलुरवधारणे जितपरीषहा एवार्हन्तः साधवश्च भुञ्जते,वा–अथवा आज्ञया तीर्थकराज्ञया भुञ्जानः अपि गम्यो भुञ्जानः अप्युपवासी–अनशनी भण्यते,पुनरप्युपवासं करोति, उपवासमप्युपवासं करोतीत्यक्षरार्थः, भावार्थस्त्वयं–यदि जितक्षुत् कथं भोजनाभिलाषी ?, यदि भोजनाभिलाषी कथं जितक्षु-

द्भण्यते ?, इत्येवंरूपेण कुपाक्षिकाभिप्रायेण विरोधः संपद्यते, परं स विरोधः सम्यग्दृशां न स्यादेव, यतोऽनेषणीयाहारपरित्यागी क्षुत्परीषहजेता भण्यते, स च जिनाज्ञया भुञ्जानोऽभुंजानो वेत्युभयथापि समान एवेति कुतो विरोधगन्धोऽपि?, दार्ष्टान्तिकयोजना त्वेवं-यदि यक्षादयो मह्यं धनादिकं पुत्रादिकं च ददति तदाऽहं जिनोक्तं धर्मं करोमीत्यादिरूपेण यक्षादिनिश्रा भण्यते, सा च धर्मार्थिनां न युक्ता, जिनैरननुज्ञातत्वात्, तस्मादनेषणीयाहारकल्पा तथाविधयक्षादिनिश्रा तया रहितः शुद्धाहारग्रहणकल्पं जिनाज्ञया प्रवचनाद्यर्थं सम्यग्दृशां श्रुतदेवताशासनदेवतादीनामाराधनं कुर्वन्नपि यक्षादिनिश्रारहितो भण्यते, अतः कुतो विरोधगन्धोऽपि ?, अथ पुनरपि दृष्टान्तो,यथा आज्ञया-अर्हदुपदेशेन भुञ्जानोऽपि साधुरुपवासी भण्यते, यदागमः-"निरवज्जाहारेणं साहूणं निच्चमेव उववासो"त्ति तथा जिनाज्ञया श्रुतदेवताद्याराधनं कुर्वन्नपि यक्षादिनिश्रारहितो भवति, पुनरपि प्रकारान्तरेण दृष्टान्तमाह-यथा निरवद्याहारग्रहणेनोपवासी सन्नपि तद्विरोध्याहारत्यागरूपः पुनरप्युपवासमुत्तरगुणवृद्धिहेतवे करोति, यदागमः-"उत्तरगुणवड्ढिकए तहविअ उववासमिच्छंति"त्ति तथा यक्षादिनिश्रारहितोऽपि श्रुतदेवतादिसाध्यप्रवचनोत्सप्पर्णादिहेतवे तदाराधनं युक्तमेवेति दृष्टान्तत्रयेण सम्यग्दृशां विरोधाभावो दर्शित इतिगाथार्थः ॥२३॥ अथ प्रकारान्तरेणापि दृष्टान्तो यथा—

अहवा रयहरणाइअउवगरणे धम्मसाहणे संते । मुणिणो अकिंचणा ते भणिआ वीरेण धीरेण ॥२४॥
तह जक्खाइसहायाभावे धम्मेऽवि हुंतु दढचित्ता । आणाए सुअदेवीपमुहाण सहायमिच्छंति ॥२५॥

अथवेति प्राग्वत् रजोहरणादिकोपकरणे-रजोहरणमुखवस्त्रिकाकल्पत्रिकचोलपट्टकमात्रकलक्षणानि सप्त सप्त च पात्रसंबन्धीनीति चतुर्दशोपकरणसमुदाये धर्मसाधने-स्थविरकल्पिकानां चारित्रलक्षणधर्मसाधनहेतौ सत्यपि-विद्यमानेऽपि ते मुनयोऽकिञ्चनाः-न

विपने किञ्चनं येषां तेऽकिञ्चनाः भणिताः, केन ?–धीरेण–केवलज्ञानबलवता वीरेण–श्रीमहावीरतीर्थकृतेति दृष्टान्त इतिगाथार्थः ॥२४॥ अथ दार्ष्टान्तिकमाह–तथा प्रागुक्तदृष्टान्तेन धर्मे–जिनोक्तमार्गे दृढचित्ताः भवन्तो यक्षादिसहायाभावेऽपि आज्ञया श्रुतदेवीप्रमुखाणां सहायमिच्छन्ति, अयं भावः–उपकरणानामिवाज्ञया श्रुतदेव्यादिसहायतामिच्छतामपि साध्वादीनामकिञ्चनत्वमिव यक्षादिसहायाभाव एवेतिगाथार्थः ॥२५॥ अथ प्रकारान्तरेणापि कथञ्चिद्युक्तिभेदमाह—

इहलोइअट्ठतुट्ठा किंचिवि नेच्छंति जक्खपमुहेहिं । तेणं वा तन्निस्सारहिआ भणिआ य धम्मरया ॥२६॥

इहलौकिका अर्थाः–धनधान्यपुत्रकलत्राद्यस्तेषु तुष्टाः–पूर्णतया निःस्पृहतया वा संतोषभाजोऽनिच्छव इत्यर्थः, संसारस्वरूपसम्यक्परिज्ञानादनन्तशोऽप्राप्ता इमे संयोगा इत्येवमनासक्ताः किंचिदपि ऐहिकार्थं वस्तुजातं यक्षप्रमुखेभ्यो नेच्छन्ति तेन वा–अथवा तन्निश्रारहिता–यक्षादिनिश्रारहिता धर्मरताः–जिनधर्मपरायणा भणिता इतिगाथार्थः ॥२६॥ अथ यक्षादिनिश्रानिषेधेन न श्रुतदेवतादिस्तुत्यादिनिषेध इत्याह—

सुअखित्तदेवयाईउस्सग्गो नेव तत्थ पडिसिद्धो । जण्णं तं जिणआणा आणारहिअंमि सो निअमो ॥२७॥

तेणं पवयणअट्ठा सम्मद्दिट्ठीण देवयाईणं । आराहणमविरुद्धं जह सत्तमनिण्हगट्ठाए ॥२८॥

तत्र यक्षादिनिश्राया अभावे श्रुतक्षेत्रदेवताद्युत्सर्गो नैव प्रतिषिद्धः, तत्र हेतुमाह–"जण्णं"ति यत्–यस्मात् णमितिवाक्यालङ्कारे जिनाज्ञा–तीर्थकरस्याज्ञा, प्रवचने चाज्ञाया एव प्राधान्यं, यतः कारणाद् आज्ञा हि धर्मशरीरे जीवकल्पा, नहि जीवविप्रमुक्तं सुन्दरमपि शरीरं कलकाद्याभरणपरिधापनार्हं संभवति, तस्माद्धर्मचिकीर्षुणा यक्षादिनिश्रारहित्यमिति, स नियम आज्ञारहिते–जिनाज्ञाव्यतिरि-

त्कस्थले वोध्यः, जिनाज्ञा न नैहिकार्थं, किन्तु धर्मार्थं, तच प्रवचनहितं श्रुतदेवताद्याराधनम्, अन्यथाऽर्हदाज्ञाया असंभवादिति गाथार्थः ॥२७॥ अथ यत्सादाज्ञाव्यतिरिक्तस्थले नियमः-'तेणं'ति तेन कारणेन सम्यग्दृष्टीनां देवतादीनामाराधनं-स्तुत्यादिकरणेन तुष्टिजननं न विरुद्धम्-अविरुद्धं, युक्तमित्यर्थः, यथा सप्तमो निह्नवो-गोष्ठामाहिलो जीवस्य कञ्चुकन्यायेन कर्मवन्धं प्ररूपयन् तीर्थनिवारितोऽपि न तिष्ठति तदा तीर्थेन गोष्ठामाहिलस्वरूपपरिज्ञानाय शासनसुरीमाराध्य महाविदेहे तीर्थंकरसमीपे प्रेषिता, तया च तीर्थकृत् पृष्टः-किं गोष्ठामाहिलः सम्यग्वादी उत दुर्बलिकापुष्पमित्रप्रमुखः सङ्घो वेत्युक्ते तीर्थकृतोक्तं-गोष्ठामाहिलो मिथ्यावादी सप्तमो निह्नव इत्यादि सर्वजनप्रतीतमितिगाथार्थः ॥२८॥ अथ श्रुतदेवतादिदृष्टान्तेन स्वमत्या यथा तथा यक्षाद्याराधनतत्परः कीदृग् स्यादित्याह—

आणाभिण्णट्ठाणे इच्छंता जक्खपमुहसाहज्जे । पायं धम्मपभट्ठा णो धम्माराहगा हुंति ॥२९॥

आज्ञाभिन्नस्थाने-जिनाज्ञाव्यतिरिक्तस्थले यक्षादिसाहाय्यमिच्छन्तः प्रायः धनपुत्राद्यर्थं तदाराधनतत्परस्तदपूर्तौ प्रायो धर्मप्रभ्रष्टाः-धर्ममार्गपराङ्मुखा धर्माराधका नो भवन्ति तेन धर्मार्थिनां यक्षादिसांनिध्यमकिंचित्करम्, अत एव देवाद्युपसर्गेऽपि श्रावका अप्यचलाः प्रवचने निर्दिष्टा इतिगाथार्थः ॥२९॥ नन्वेवं श्रुतदेवताद्याराधनमप्ययुक्तं भविष्यतीति पराशङ्कामपाकर्तुमाह—

नय किंचि पडिसिद्धं सव्वं सव्वप्पयारओ समए । उस्सग्गाइविवक्खा दक्खा कहमण्णहा होइ ? ॥३०॥

न न समये-जिनशासने सर्वं वस्तु प्रतिषेधार्हं सर्वप्रकारेण-सर्वथा प्रतिषिद्धमस्ति,अन्यथा यदि सर्वथा प्रतिषिद्धं स्यात्तर्हि उत्सर्गादिविवक्षा-उत्सर्गापवादविवक्षा उत्सर्गपदे तावदित्थमित्थं चापवादपदे इत्यादिविवक्षा दक्षा-निपुणा कथं भवति ?, यदुत्सर्गेणा-

मिहितं तदपवादतोऽन्यथैव स्याद्, उत्सर्गापवादौ च तीर्थकृद्भिर्भणिताविति गाथार्थः ॥२०॥ अथोक्ते सम्मतिं सूत्र एव निर्दिशति, यतः

तम्हा सव्वाणुण्णा सव्वनिसेहो अ पवयणे नत्थि। आयं वयं तुलिज्जा लाहाकंखिव्व वाणिओ ॥२१॥

एतद्वृत्तिका यथा, यत एवं तस्मात् स्थितमेतत्–सर्वप्रकारैरनुज्ञा यदुतेदं कर्तव्यमेवेति सर्वानुज्ञा, तथा सर्वनिषेधो यदुतेदं न कर्त्तव्यमेवेति प्रवचने–सर्वज्ञागमे नास्ति, चशब्दस्येहावधारणार्थत्वेन संबन्धात् नास्त्येव, सर्वकर्त्तव्यानां द्रव्यक्षेत्रकालभावाद्यपेक्षया विधानान्निषेधाच्च, द्रव्यादीनां च वैचित्र्येण क्वचिद्विषये विधेयस्यापि निषेधावसरः स्यात्, निषिद्धस्यापि च विधानमापद्यते, तदुक्तम्–"उत्पद्यते हि साऽवस्था, देशकालामयान् प्रति। यस्यामकार्यं कार्यं स्यात्, कर्मकार्यं च वर्जयेत् ॥१॥" क इवेत्याह–लाभाकाङ्क्षीव वाणिजको, यथाऽसावायव्ययतुलनया बहुलाभे प्रवर्त्तते, तथा लाभेन प्रवर्त्तेतेत्यर्थः, केवलं प्रवर्त्तमानेन रागद्वेषपरिहारेण सम्यगात्मा योजनीयो, न शाठ्यादपुष्टालम्बनं विधेयमित्याहेत्यादि श्रीउपदेशमालागाथार्थः ॥२१॥ अथ किं संपन्नमित्याह—

तेणं भगवइठाणयअविरोहो होइ सम्मदिट्ठीणं। तित्थुइओ खलु तित्था वज्झो वज्झाण वज्झाउ ॥२२॥

तेन–प्रागुक्तयुक्त्यादिदर्शनविधिना भगवतीस्थानाङ्गाविरोधः–भगवत्यां श्रावकाणामपि यक्षादिनिश्राराहित्यं भणितं स्थानाङ्गे चाचार्योपाध्यायानामपि मन्त्राद्याराधनं भणितम्, उपलक्षणाच्छ्रीभद्रबाहुस्वामिना च श्रुतक्षेत्रदेवतादिस्तुतिदानं भणितं, कृतं च श्रीहरिभद्रसूरिभिः संसारदावादिस्तुतिकरणेन, इत्येवंरूपेण भगवतीस्थानांगयोर्यो विरोधस्तदभावोऽविरोधो भवति, केषां ?–सम्यग्दृष्टीनां, मिथ्यादृशां कुपाक्षिकाणां तु सर्वत्रापि विरोध एव प्रतिभासते, तेषां तथास्वभावात्, अत एव त्रिस्तुतिकः–आगमिकापरनामा खलु–स्ववधारणे त्रिस्तुतिक एव 'बाह्यानां बाह्यात् बाह्यो'–बाह्यानां–तीर्थबहिर्भूतानां पौर्णिमीयकानां मध्यात् बाह्यः–स्तनिकस्तस्मादपि बाह्य-

त्रिस्तुतिकः तीर्थबाह्यबाह्यबाह्य इत्यर्थः इतिगाथार्थः ॥३२॥ अथातिदेशमाह—

एवं खलु तित्थुइओ मूलुस्सुत्तेण वण्णिओ इह्यं। सेसमुवएसपमुहं पुण्णिमसरिसं मुणेअव्वं ॥३३॥

एवं कु० ३४। नवह०। ३५। इअसा० ॥३६॥

एवमुक्तप्रकारेण त्रिस्तुतिको मूलोत्सूत्रेण-मतप्रवर्त्तनहेतुभूतेन श्रुतदेवतास्तुतिनिषेधेन वर्णितः, शेषमुपदेशप्रमुखं पूर्णिमापक्षसदृशमिति गाथार्थः ॥३३॥ अथ सप्तमविश्रामोपसंहारमाह-'एवं कु०' व्याख्या प्राग्वत् ॥ ३४ ॥ 'नवहत्थ०' व्याख्या प्राग्वत् ॥३५॥ 'इय सा०' व्याख्या प्राग्वत् ॥३६॥

इय कुवक्खकोसिअसहस्सकिरणंमि पवयणपरिक्खापरनामंमि आगमिअमतनिराकरणनामा सत्तमो विस्सामो

इतिश्रीमत्तपागणनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणिविरचिते कुपक्षकौशिकसहस्रकिरणे श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि त्रिस्तुतिकमतनिराकरणनामा सप्तमो विश्रामः ॥

अथ क्रमप्राप्तं लुम्पाकमतमाह—

अह पडिमा पडिवक्खं कुमयं उवएसवेसमहिगिच्च। जह जायं तह वोच्छं कुच्छाणवि कुच्छणिज्जंति ॥ १ ॥

अथेति-पाशगमिकमतनिरूपणानन्तरं सप्तमं प्रतिमाप्रतिपक्षं-जिनप्रतिमाद्वेषि कुमतं, तच्च सर्वजनप्रसिद्धं लुम्पाकमतमेव, अन्य-

र्था तु सर्वाण्यपि कुमतानि प्रतिमाद्वेषीण्येव सन्ति, तीर्थद्वेषेण तीर्थसंम्बन्धिषु सर्वेष्वपि वस्तुषु द्वेपस्यैव भावात्, परमेतत् केपांचित्स-म्यग्दृशामेव ज्ञानगोचरीभवति, नान्येषां सर्वेषामपीति, लुम्पाकस्तु मिथ्यादृशामपि जिनप्रतिमाद्वेषीति प्रतीतिविषय एवेति प्रतिमाप्रति-पक्षमिति भणितम्, उपदेशवेषं-उपदेशो जिनप्रतिमापूजा तावद्धिंसात्मिकेत्यादिरूपेण भाषणं वेपश्च-नेपथ्यः कथंचित्साधुवेषार्द्धरूप-स्ततः समाहारे उपदेशवेषं तदधिकृत्य-तदाश्रित्य यथा जातं तथा वक्ष्ये,कीदृशं तत् कुमतं ?-तुच्छानामपि, आसतां चर्मकारतैलादयो म्लेच्छानामपि जुगुप्सनीयं-कुत्साविषयं, तेऽपि तन्मतं कुत्सितकुलेषु कुत्सिताहारपानीयादिग्रहणदर्शनात् जुगुप्सन्ति खिंसन्ति चेति जुगुप्सनीयमितिगाथार्थः ॥१॥ अथोपदेशकालाद्याह—

**विक्कमओ अट्ठुत्तरपन्नरससएहि पावउवएसो। लुंपगलिहगो मूलं तस्सवि तस्सेवमुप्पत्ती ॥ २ ॥**

विक्रमतः-श्रीविक्रमसंवत्सरादष्टोत्तरपञ्चदशशतैः-अष्टाधिकपञ्चदशशतसंवत्सरैर्गतैः १५०८ पापोपदेशः-प्रतिमापूजादिनि-षेधरूपस्तस्यापि-उपदेशस्यापि मूलम्-आदिकारणं लुम्पकलेखकः-लुम्पक इति मातापितृदत्तं नाम लेखक इति लिखनकर्मणा जीविका-कर्त्तेति दर्शितं, तस्य लुम्पकलेखकस्योत्पत्तिरेवं-वक्ष्यमाणप्रकारेणेतिगाथार्थः ॥२॥ अथोत्पत्तिं दिदर्शयिषुः प्रथमं व्यतिकरमाह—

**नय तित्थाउ अणंतरपरंपरानिग्गयंपि कुमयमिणं। किंतु अकम्हा मिच्छादिट्ठिसगासा सयंभूअं ॥३॥**

न च तीर्थाद्-अच्छिन्नपरम्परागतसाध्व्यादिसमुदायादनन्तरपरम्परानिर्गतमिदं कुमतम् अव्यवधानव्यवधानाभ्यां निर्गतं-पृथग्भूतं, अपि विसये, इदं लुम्पकमतं भवति, नहि लुम्पककुमतं तीर्थादनन्तरं साक्षाद्राकारक्तवन्निर्गतं, न वा स्तनिकादिवत्परम्परानिर्गतं,किंतु अकस्माद्-असंभावितकारणाद् मिथ्यादृष्टिसकाशात् स्वयंभूतं-स्वयमेव समुत्पन्नं,यद्यपि निर्निमित्तकं किमपि न स्यात्,तथाप्यसंभावित-

कारणादुत्पन्नं हि वस्तु निर्निमित्तकमेवोच्यते, यथाऽयमकाले मृत इत्यत्र कालमन्तरेण मरणासंभवेऽपि अतर्कितकाले मृतो ह्यकाल-मृत एव भण्यते इतिगाथार्थः ॥३॥ अथ व्यतिकरं दर्शयित्वाऽन्वयमाह—

इह एगो नामेणं लुंपगलिहगोऽवि गुज्जरत्ताए। लोहेणंतरपत्तं छड्डिअ सिद्धंतमा लिहई ॥४॥

इह–भरतक्षेत्रे नाम्ना लुम्पकलेखको गूर्जरत्रायां धरित्र्यां 'लोभेनान्तरपत्रम्' अन्तरेऽन्तरे–मध्यभागे मध्यभागे पत्रमुपलक्षणात् पत्रे पत्राण्यालापकोद्देशादिकं च छर्दयित्वा–परित्यज्य २ सिद्धान्तं लिखति, सेति गम्यं,लिखति स,आः खेदे, पापात्मा पापाभीरुरि-त्यर्थ इति गाथार्थः ॥४॥ अथैवं सति किं जातमित्याह—

मुणिवयणचोअणाए रुसिओ ऊससिअ भणइ दुव्वयणं। तुम्हं भिक्खुच्छेअं करेमि ता होमि जाओम्मि ॥५॥

मुनिवचनचोदनया–अहो पापात्मा कथं सिद्धान्तं न्यूनीकरोषीत्येवंरूपेण साधुप्रेरणया रुष्ट उच्छ्वस्य–दुःखगर्भितमुच्छ्वासं विमुच्य भणति–ब्रूते,किं?–दुर्वचनं–दुष्टवचनं,तदुल्लेखमाह–यदि युष्माकं भिक्षोच्छेदः–भिक्षादौर्लभ्यं करोमि 'ता' त''म्मि'ति अहं जातो-भवामि, अन्यथा मम जन्म निष्फलमित्यभिप्राय इति गाथार्थः ॥५॥ अथ ततोऽपि किं कृतवानित्याह—

इअ कयपइण्णचिंतापरेण पावेण तेण पयडिकयं। कुमयं निअनामेणं पावाणं पावकम्मुदया॥ ६ ॥

इति–प्रागुक्तप्रकारेण कृता या प्रतिज्ञा सेति कृतप्रतिज्ञा तस्याश्चिन्ता–चिन्तनमहोरात्रं तदभिप्रायप्रवर्त्तनं तत्र परस्तत्परस्तेन पापेन–पापात्मना तेन लेखकेन निजनाम्ना–लुम्पाक इति जनोक्त्या कुमतं प्रकटीकृतं, एतादृशं कुतो जातमित्याह–'पावाणं'ति पापानां–पापभाजामनन्तसंसारिणां प्राणिनां पापकर्मोदयादनन्तसंसारहेतुबीजभूताशुभकर्मोदयादितिगाथार्थः ॥६॥ अथ तस्योपदेशमूलमाह—

पडिमापूआदोसं भासइ हिंसाइ मुहरमुहवयणो। जीवदया खलु धम्मो जिणभणिउत्ति मुहमंगलिओ ॥७॥

हिंसया पृथिवीजलकुसुमादिजन्तुप्रभवया प्रतिमायाः पूजादोषं-पूजायां पापं भाषते, किंलक्षणः सन्?-मुखरमुखवचनः सन्, मुखरस्येव मुखे वचनं यस्य स मुखरमुखवचनः, पाषाणनिष्पन्नायां प्रतिमायां पूजया किं स्यात्?, प्रतिमा हि चेतनारहिता किं पूजादिकं जानातीत्याहानार्यवचन इत्यर्थः, अथ केवलानार्यवचनेन जनो नाभिमुखीस्यादतस्तदभिमुखीकरणाय यद् ब्रूते तदाह-जीवेत्यादि, जिनभणितः-अर्हद्भाषितः खलु-निश्चितं जीवदया धर्मो भवति, यदागमः-"सव्वे पाणा सव्वे भूआ सव्वे जीवा सव्वे सत्ता न हंतव्वा" इत्यादिप्रवचनवचनेनेति, मुखमांगलिकः-मुखेनैतावदेव मंगलं ब्रूते इति मुखमांगलिकः, पारमार्थिकविचारशून्योऽप्येतावन्मात्रमेव मुग्धजनपाशकल्पं ब्रूते इति, प्रतिमायां मुखरीभवन्नपि जीवदया धर्मो जिनभाषित एतावन्मात्रेण मुग्धजनप्रतारक इत्यर्थः ॥७॥ अत्र तदानीं तस्य सहायकः कोऽप्यासीत् न वेत्याकाङ्क्षायामाह—

तस्सवि एगो मंती नामेण लखमसीति सम्मिलिओ। दोवि उवएसमित्ता कडुउव्व पव्वट्टिआ पावा ॥८॥

तस्यापि आस्तामन्यस्याकिञ्चित्करस्य लुम्पकलेखकस्याप्येको मन्त्री-राजमान्योऽमात्यो नाम्ना लखमसीति सम्मिलितः-सम्यग् मिलितः,अभ्यन्तरीभूतो मिलित इत्यर्थः,द्वावपि पापौ-पापात्मानौ उपदेशमात्रात्-केवलोपदेशदानादेव,न पुनः किञ्चिचारित्राभासानुष्ठानेनापि, प्रवर्त्तितौ, किंवत्?-कडुकवत्, यथा कडुकनामा गृहस्थो वक्ष्यमाणलक्षणः स्वयं साधुदोषमुद्भावयन् मुग्धजनविप्रतारणे प्रवृत्तस्तथाऽमू अपि स्वयं साध्वादिवेषशून्यावपि साधुदोषं प्रतिमादोषं चोद्भावयन्तावेव प्रवृत्तावित्यर्थः इति गाथार्थः ॥ ८ ॥ अथैवं कियत्कालं प्रवृत्तिरासीदित्याह—

पणवीसं वासाइं लिंगीहिं विरहिअंपि वुड्डिगयं। तेतीसुत्तरपनरससएहिं वरिसेहिं वेसहरा ॥९॥

पञ्चविंशतीर्वर्षाणि यावल्लिंगिभिर्विरहितमपि–वेषधरैः शून्यमपि वृद्धिगतं–वृद्धिं प्राप्तमित्यर्थः, स कोऽपि भस्मराशिग्रहावस्थावच्छिन्नः कालविशेषः परिणतो येन तत आरभ्य वर्षशतमध्ये बहूनि कुमतानि प्रादुर्भूतानि,यथा विक्रमतः सं० १२५९ वर्षे राकारक्तो निर्गतस्तत आरभ्य वर्षशतमध्ये त्रिस्तुतिकपर्यन्तानि बहूनि मतानि प्रवचनपीडाकारीणि समुत्पन्नानि, यदि लोकानुभावात् कालविशेषपरिणतिर्नोच्यते तर्हि कथमेतादृशं नाम्नापि कुत्सितं गृहस्थलिङ्गधारिणो निर्नामकलुम्पाकपुरुषादपि प्रवृत्तं सत् सत्यपि बलवति तीर्थे वृद्धिं याति, अवश्यभाविनो वस्तुनः स्थगितिर्बलवताऽपि कर्तुमशक्येतिभावः, अथ वेषधरोत्पत्तिकालमाह–'तेत्तीसुत्तरे'त्यादि, त्रयस्त्रिंशदुत्तरपञ्चदशशतवर्षैः–१५३३ त्रयस्त्रिंशदधिकपञ्चदशशतैर्वर्षैः क्वचिच्च सं० १५३१ वर्षे वेषधराः लुम्पकोपदेशरुचिषु जनेषु लिङ्गिनः प्रादुरासन्निति गाथार्थः ॥९॥ अथ वेषधरेष्वपि प्रथमो वेषधरः किंनामा कथं कीदृग्वेषं परिहितवानित्याह—

तेसुवि भाणगनामा पढमो मूढोवि तंमि वेसहरो। सयमेव गहिअवेसं वेसोऽविअ साहुवेसद्धं ॥ १० ॥

तेष्वपि–लुम्पकवेषधरेष्वपि भाणकनामा–शिवपुरीसमीपवर्त्यरघट्टपाटकवास्तव्यप्राग्वाटज्ञातीयो भाणउ इति लोकोक्त्या, भाणकाख्यो हि पत्तने स्वयमेव वेषं गृहीत्वा 'तंमि' लुम्पकमते मूढोऽपि–मूर्खोऽपि प्रथमो वेषधरोऽभूत्,वेषोऽपि च नान्यतीर्थिको नापि जैनतीर्थिकः, किंतु साधुवेषार्द्धे–जैनसाधोर्यो वेषस्तस्यार्द्धं, किंचिदपि कथंचित्साधुवेषानुकृतिमात्ररूप इत्यर्थः, तत्कथमितिचेच्छृणु-कटिदवरकनिबद्धपरिहितचोलपट्टको रजोहरणमुखवस्त्रिकासमन्वितः प्रावृतकल्पकस्कन्धोपरिकृतौर्णिको गृहीतवामकरदण्डकः परम्परायातविधिविद्धोभयकर्णकश्च पुरुषः साधुवेषधारी भण्यते, तस्य यो वेषः स संपूर्णो वेषो भवति, सोऽपि, 'मम वेसं समप्पेहे'-

त्यादिविधिपुरस्सरं परम्परायातसूरिभिर्दत्तो, न पुनः स्वयमुपात्तः, एवंविधो वेषो लुम्पकवेषधरस्य नास्त्येव, यतो रजोहरणोऽपि नाममात्रेण, न पुनः परम्परायातपट्टकनिबद्धफलिकानिपद्याद्वयपरिकलित इत्यादि, तच्च सर्वजनप्रतीतमितिगाथार्थः ॥१०॥

अथ वेषाद्धं तस्य किं सूचकमस्तीत्याह—

**वेसद्धं पुण तित्थाफासस्सवि होइ चिन्धमिह पयडं। जह निवणुगारकलिओ नडो च राया व रयपव्वे ॥११॥**

वेषार्द्धं पुनः प्रकटमिह—जगति चिह्नं, कस्य ?—'तीर्थास्पर्शस्य' तीर्थस्य—श्रीवीरतीर्थकृद्व्यवस्थापिताच्छिन्नसाध्व्यादिसमुदायलक्षणस्य न विद्यते स्पर्शः—साक्षात्परम्परया वा संबन्धो यस्य स तीर्थास्पर्शस्तस्य, यस्तु साक्षात्परम्परया वा तीर्थस्पर्शी स्यात् तस्यान्यत्प्ररूपणादिकमन्यथाऽस्तु, परं वेषस्तु प्रायः पूर्णो भवति, यथा राकारक्तादीनां, यद्यपि कटिदवरकादिपरित्यागेन कथञ्चिद्भेदस्तीर्थस्पर्शिनामपि दृश्यते तथापि बाह्यदृशां न तथा प्रतीतिविषयीभवतीति न दोषः, तत्र दृष्टान्तमाह—यथा 'नृपानुकारकलितः' वेषादिना राजचेष्टाकारी नटो—नृत्यकर्त्ता आत्मसम्बन्धिनो जनान् राज्योपयोगिप्रकृतियुवराजामात्यादिजनतया विकल्प्य कृत्वा च छत्रादिचिह्नानि ततः स्वयं राजानुकृतिं कुर्वाणोऽपि कथंचित्किंचिदेवानुकृतिं करोति, न पुनः पूर्णां, स्वर्णादिसम्यगाभरणादिविभूषितनेपथ्याभावाद्राजकुलानुत्पन्नत्वाद्राज्यशोभाकृत्त्वाभावाच्च, न वा स राजापि भण्यते, उक्तहेतुत्रयादेव, तथा नटवत् कथंचित्किंचिन्मात्रसाधुवेषानुकृतिमानपि लुम्पकमते प्रथमवेषधरो भाणकाख्यो निजजनान् तीर्थोपयोगिसाधुसाध्वीश्रावकश्राविकादितया विकल्प्य प्रवर्त्तमानो न साधुर्न वा साधुवेषधरः स्यात्, किंतु उक्तप्रकारेण यदि संपूर्णसाधुवेषी स्यात्तदा साधुवेषधरो भण्यते, सोऽपि श्रीसुधर्मस्वामिनोऽच्छिन्नपरम्परायाततीर्थपूजालक्षणराज्यश्रीभोक्ता स्याच्चदा साधुरपि व्यवहारतो भण्यते, स च तीर्थान्तर्वर्त्त्येव स्यात्,

न पुनस्तीर्थस्पर्शी लुम्पकमतसंबन्धी न वा तीर्थबाह्यो राकारक्तादिरपि, तेषामास्तां तीर्थपूजा, किंतु सिद्धान्तोक्तमार्गानुयायिनो वयमिति पूत्कुर्वाणा अपि तीर्थबाह्या इमे इत्येवंरूपेण तीर्थतिरस्कारविषया इति नृपानुकृतिकारनटवत् साध्वनुकृतिकरो लुम्पकवेषधरो दर्शितः। पुनरपि दृष्टान्तमाह–'राया' वत्ति वा–अथवा प्रकारान्तरेण दृष्टान्तो यथा रजःपर्वणि राजेव, यथा रजःपर्वणि राजा, स च वाहनारूढश्छत्रादिचिह्नवान् परिकरसमन्वितोऽपि नाम्नाऽपि राजेति ख्यातिं वहमानो राजानुकृतिमान् भवति, परं तत्रानुकृतेर्वाहनमात्रेण साम्येऽपि राज्ञोऽश्वो रजःपर्व्वराजस्य तु गर्दभः एवं छत्रादिष्वपि भावनीयं, एवं लुम्पकवेषधरोऽपि तीर्थवर्त्तिसाधुवेषसाम्यभाग् बोध्य इतिगाथार्थः ॥११॥ अथोत्पत्तिव्यतिकरस्योपसंहारमाह—

इअ पडिमारूप्पत्ती उवएसा वेसओ अ दोभेआ। लिहगा तित्थसद्धाभासो इअराऽखिलाभासो ॥१२॥

इति–अमुना प्रकारेण प्रागुक्तव्यतिकरेण 'प्रतिमार्युत्पत्तिः' प्रतिमाया–जिनप्रतिमाया अरिः–वैरी प्रतिमारिस्तस्योत्पत्तिः द्विभेदा द्वौ भेदौ यस्याः सा, कुत ?–उपदेशाद्–उपदेशमधिकृत्य, वेषतो–वेषमधिकृत्य, चेति समुच्चये, लुम्पकलेखकादुपदेशमधिकृत्य लुम्पकमतोत्पत्तिः, भाणकाख्याद् वणिजो वेषमधिकृत्य चोत्पत्तिरिति द्विप्रकारा लुम्पकमतोत्पत्तिर्भणितेति बोध्यम्, उवदेशवेषाभ्यां कार्यभेदमाह–लेखकात्तीर्थस्यार्द्धाभासः–श्रावकश्राविकालक्षणस्तीर्थाभासः समुत्पन्न इत्यर्थः, इतरात्–भाणकाख्यवेषधराद् अखिलाभासः–पूर्णाभासः–पूर्णतीर्थाभासः समुत्पन्नः, साधुसाध्वीश्रावकश्राविकालक्षणः पूर्णस्तीर्थाभास इतिगाथार्थः ॥१२॥ अथ कालानुभावेन यदेतत्कुमतं तत्कीदृशं श्रद्धेयमित्याह—

एअं खलु अच्छेरं तित्थाफासीवि तित्थआभासो। जाओ जणविक्खाओ जमणंता कालओ भावी ॥१३॥

एतत्-लुम्पकमतं खलु-निश्चितमाश्चर्यं, किं?-यत्तीर्थास्पर्श्यपि लुम्पकसमुदायस्तीर्थाभासो जातः, तीर्थस्पर्शी हि राकारक्तादि-स्तीर्थाभासो भवति तन्नाश्चर्यं, यतस्तीर्थस्य साक्षात्परम्परया वा स्पर्शनावशाचीर्थक्रियाभ्यासात् तदनुकृतिः संभवति, तद्वशाच्च तदा-भासत्वमुपपद्यते, परं लुम्पाकमतस्य समुदायो सर्वजनाविख्यातस्तीर्थाभासो जातस्तदाश्चर्यम्, आश्चर्यमपि कुत इत्याह-यद्-यस्मात्का-रणादेतादृशमनन्तकालभावीतिगाथार्थः ॥१३॥ अथाश्चर्यस्वरूपमाह—

अच्छेरं पुण एवं अस्संभवि संभवेइ जं लोए। कालेण अणंतेणवि जह मरुदेवीइ सिद्धत्तं ॥१४॥

आश्चर्यं पुनरेवं यल्लोकेऽनन्तेनापि कालेनासंभवि संभवेत्, दृष्टान्तमाह-यथा मरुदेव्याः सिद्धत्वं, मरुदेवी श्रीऋषभजिन-जननी अनादिवनस्पतिभ्य उद्धृत्य सिद्धा तदनन्तकालभावित्वादाश्चर्यमितिवल्लुम्पकमतप्रवृत्तिरप्याश्चर्यमितिगाथार्थः ॥१४॥ अथा-श्चर्याणि तु दशैवागमे भणितानि, तेषामाधिक्यं च न युज्यते इति पराशङ्कामपाकर्तुमाह—

उवसग्गगब्भहरणप्पमुहा अच्छेरगावि दस समए। भणिआ तत्थवि दसपयमुवलक्खणपरमिहं भणिअं ॥१५॥

'उपसर्गगर्भहरणप्रमुखा' उपसर्गाः १ गर्भहरणं २ स्त्रीतीर्थं ३ अभाविता पर्षत् ४ कृष्णस्यावरकङ्कागमनं ५ चन्द्रसूर्ययोरव-तरणं ६ हरिवंशकुलोत्पत्तिः ७ चमरोत्पातः ८ अष्टशतसिद्धाः ९ असंयतपूजा १० इति, यदागमः—"उवसग्ग १ गब्भहरणं २ इत्थी तित्थं ३ अभाविआ परिसा ४। कण्हस्स अवरकंका ५ अवयरणं चंदसूराणं ६ ॥१॥ हरिवंसकुलुप्पत्ती ७ चमरुप्पाओ अ ८ अट्ठसयसिद्धा ९। अस्संजयाण पूआ १० दसवि अणंतेण कालेणं ॥२॥ (१०–१६७*)(पंच ९२३प्रव. ५८८)इति समये–जैनसिद्धान्ते दश भणिताः, तत्रापि दशपदमुपलक्षणपरम्, अन्येषामप्याश्चर्याणामिह प्रवचने सूचकं भणितं, यथा—"सत्त पवयणनिण्हगा" इत्यत्र

सप्तपदमन्येषामप्युपलक्षकं, तच्च प्राग् प्रथमविश्रामे दर्शितं, न च सप्तपदमुपलक्षकं बहुषु ग्रन्थेषूक्तं, परं दशपदं तु क्वापि नोक्तमिति वाच्यं, तस्यापि श्रीहरिभद्रसूरिणा पञ्चवस्तुके भणितत्वात्, ननु लुम्पकमते प्रथमो वेषधरो भाणको जात इत्येवमिदानीं तदीया न भणन्ति तत्कथमिति चेदुच्यते–अन्यायोत्पन्ना हि पित्रादिकमपलपन्त्येव, कथमन्यथा के यूयमित्यादिवचोभिः प्रेरिताः सन्तः लुम्पाक इति प्रसिद्धनामाप्यपलप्य वयं जैनमतय इति भणन्ति, यथा आञ्चलिका वयं विधिपक्षीया इत्यादिनो भवन्ति, किंच–कः केन प्रकारेण कं नामग्राहं गुरुं भणति ?, यतो जिनप्रतिमापूजायां दोषस्य वक्ता तावत्तथाविधमार्गकृत्योऽश्रुतधर्मा लुम्पकनामा सामान्यगृहस्थः, सोऽपि लौकिकमिथ्यादृष्टिमार्गपतितः,एवंविधोऽपि लेखक इत्येवंरूपेणाकिञ्चित्करनिर्नामकपुरुषमूलकलुम्पकमार्गो म्लेच्छादिजातीयानामपि निन्दनीयः, तमपि मार्गमवलम्ब्य तथाविधक्लिष्टकर्मोदयाद्भाणकनामा गृहस्थः स्वयमेवोक्तरूपं वेषं परिधाय लुम्पकमते साधुव्यपदेशविषयः संपन्नः, कश्चनापि प्रव्राजनाचार्यं गुरुत्वेन वक्तुमशक्तो लुम्पकापेक्षयाऽधिकजातस्तथाविधमुपदेशमधिकृत्य तन्मूलभूतमपि लुम्पकं लज्जया धर्माचार्यत्वेन न ब्रूते, तच्च युक्तमेव, यतस्तया ब्रुवाणोऽपि कदाचित् केनचिदुदीरितो भो भाणक ! एतादृशोपदेशरूपो मार्गो लुम्पकेन कस्य पार्श्वे श्रुतः ?, तदानीं जारगर्भः पितरमिव कं गुरुं दर्शयतीति स्वयमेव पर्यालोच्यं, अत एव लुम्पकोपदिष्टमार्गमाश्रिता अपि लुम्पकमपलप्यास्मदीयो मार्गः श्रीवीरजिनेन प्रकाशित इत्येवंरूपेण श्रीवीरं दर्शयन्ति, यत्तु वेषधरमपि भाणकं न भणन्ति तत्रेदमवगन्तव्यं, तथाहि–लुम्पको वेषधरस्तावत् द्विधा–गुर्जरत्रीया नागपुरीयाश्च, तत्र गुर्जरत्रीयाणां प्रथमो वेषधरो रूपर्षिः, तेन स्वयमेव तथाविधो वेषः परिहितः, नागपुरीयाणां तु भाणकर्षिरुक्तलक्षणः स्वयमेव वेषं परि-

१ नणु नेअमिह पढिय सत्त उवलक्खणं तु एयाइं। अच्छेरगभूयपि य भणियं नेयपि अणवरयं ॥९२८॥ गाथायां स्पष्टतयोक्तत्वात्

हितवान्, तत्पट्टव्यतिकरस्त्वेवं-सं० १५२३ वर्षे कश्चिच्च सं० १५३१ वर्षे शिवपुरीपाश्वऽरघट्टपाटकवास्तव्यः प्राग्वाटज्ञातीयो भाणकनामा वणिग् स्वयमेव वेषं गृहीतवान् १, भाणकेन च स्वस्तरिकसा० तोलाख्यस्य भ्राता सा० मादाख्यः प्रव्राजितः, अन्येऽपि हृदयशून्याः चूनाप्रभृतयो वेषधरा वेषधारिण्यश्च प्रव्राजिताः, परं पट्टधरस्तु मादाख्यो जातः २ पूनाख्येन लोढागोत्रसंबंध्योकेशज्ञातीयो भीमाख्यः प्रव्राजितः, स च ऋषिमादाख्यस्य पट्टधरः ३ ऋषिमादाख्येन भूताख्यः प्रव्राजितः, स स ऋषिभीमाख्यस्य पट्टधरः ४ उत्तरस्यां दिशि नराउदग्रामवास्तव्यः सूराणागोत्रसंबन्धीओकेशज्ञातीयो मांडरसाही सा० जगमालनामा भीमर्षिणा प्रव्राजितो भूतर्षेः पट्टधरः ५ ततश्च वैद्यगोत्रसंबध्योकेशज्ञातीयो रूपाख्यः पत्तने सं० १५६८ वर्षे स्वयमेव भाणकवद्वेषं परिहितवान्, तथा जगमालर्षिपार्श्वे सूराणागोत्रौकेशज्ञातीयो रूपचंद्राख्यो नागपुरे सं० १५८० वर्षे भाणकवत्स्वयं प्रव्रज्य स्वयमेव नागपुरीयलुम्पकमूलं संपन्नः, तस्य च सं० १५८४ वर्षे नागपुरीयलुम्पक इति ख्यातिः, तन्निदानं त्वेवं-नागपुरीयरूपचंद्रर्षिसंबन्धिभिर्नियतादिप्ररूपणा काचपिच्चयव्यपदेशेन भेदे जातेऽयं गूर्जरत्रीयरूपर्षिस्तदपत्यानां च गूर्जरत्रीयलुम्पका इति ख्यातिः संपन्ना, तद्वशादितरेषां नागपुरीया इति ख्यातिः, यथा पूर्णिमापक्षप्रवृत्तौ तदितराणां चातुर्दशीयका इति ख्यातिः,ततश्च गुर्जरत्रीयरूपर्षिणा सुरतमं(वं)दिरे सं० १५७८ वर्षे उकेशज्ञातीयाय जीवाख्याय प्रव्रज्या दत्ता, स च तत्पट्टधरः सन् भाणकापेक्षयाऽष्टमो भवति, रूपर्ष्यपेक्षया तु द्वितीयः, न च तस्य भाणकापेक्षा न युक्तेति शङ्कनीयं, तस्य निश्रयैव स्वयं वेषपरिधानात्,निश्रामन्तरेणापि परिहितवेषो भाणकाख्योऽमीषां मूलाचार्यः संपन्नस्तर्हि निश्रया वेषपरिधानेन पट्टधरभवने किमाश्चर्यमितिबोध्यं, वस्तुगत्या तु भाणकस्याच्छिन्नसंतानभूता गूर्जरत्रीया, नागपुरीयास्तु रूपचन्द्रर्षेरेवेति तात्पर्यं, जीवर्षिणाऽपि देवपत्तनवास्तव्यो केशवसिंगाख्यः सं०

१५८७ वर्षे पत्तनपार्श्ववर्त्तिकतवपुरे प्रव्राज्य निजपट्टे स्थापितः, स च संप्रत्यप्यस्तीत्येवं व्यतिकरे प्रायस्तदीयानामपि बहूनां सम्यग्परिज्ञानाभावात् परिज्ञाने वा प्रयोजनाभावात् प्राय उत्तरोत्तरभाविनामधिकजातत्वाल्लज्जाहेतुर्निर्मूलप्रवृत्तिमल्लुम्पकभाणकाभिधानमनभिधानं वा नाश्चर्यकरमिति बोध्यमिति गाथार्थः ॥ १५ ॥ अथ पुनरप्याश्चर्यं समर्थयितुं गाथादशशतकं विभणिषुः प्रथमगाथामाह—

अण्णह संपइरायप्पमुहेहिँ कराविआ य जिणभवणा । पच्चक्खं दीसंता कह लोविज्जंति पावेहिं? ॥१६॥

अन्यथा-यद्याश्चर्यं न स्यात्तर्हि सम्प्रतिराजप्रमुखैः-दशपूर्वधरश्रीआर्यसुहस्तिसूरिप्रतिबोधितसंप्रतिराजाऽद्यापि प्रसिद्धः तदादिभिः, आदिशब्दादामराजश्रीकुमारपालराजादयो ग्राह्याः, तैः कारिता ये जिनभवनाः, भवनशब्दः पुंनपुंसकः, प्रत्यक्षं दृश्यमानाः-सम्प्रति विद्यमानाः, न पुनरतीतादिकालव्यवहिताः परोक्षा इत्यर्थः, ते पापैर्लुम्पाकैः कथं लोप्यन्ते-निषेधोपदेशद्वारा पराक्रियन्ते?, यद्येतन्मतमाश्चर्यभूतं न स्यात्तर्हि तथाविधाः प्रासादा लोपयितुमशक्या इतिगाथार्थः ॥१६॥ अथोक्तसमर्थनाय हेतुमाह—

आगमओ बलवंता आगमववहारिधम्मउवएसा । सावयणिम्मविआ जिणपासाया पच्चयट्ठाए ॥१७॥

आगमतो-जिनोक्तसिद्धान्तादपिगम्यः सिद्धातादप्यागमव्यवहारिणां-अवधिमनःपर्यायकेवलिनो नवदशचतुर्दशपूर्वविदश्चेति षट् पुरुषास्तेषां यो धर्मोपदेशः-जिनभवनादिनिर्मापणं द्रव्यस्तवो भावस्तवहेतुत्वात् श्रावकाणां युक्त एव, यदागमः-"अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो । संसारपयणुकरणे दव्वथए कूवदिट्ठंतो ॥१॥ श्री आव० नि०(१९६ भा०)तथा "तित्थयरे १ जिण २ चउदस ३ भिण्णे ४ संविग्ग ५ तह असंविग्गे ६ । सारूविअ ७ वय ८ दंसण ९ पडिमाओ १० भावगामाउ-

॥१॥''त्ति श्रीबृह० प्रागुक्तं, तत्र प्रतिमा सम्यक्त्वादिहेतुः इत्येवंरूपेणोपदेशवचनरचना,तसाच्छ्रावकैर्निर्मापिताः श्रावकनिर्मापिताः प्रासादा उपलक्षणात् प्रतिमाप्रतिष्ठादयो बलवन्तः, किमर्थं ?–'प्रत्ययार्थं' प्रतिवाद्युद्भावितविप्रतिपत्तौ निश्चयकरणार्थं, न पुनः सर्वत्रापि, अयं भावः–जिनप्रासादप्रतिमादयः सम्यक्त्वादिप्राप्तिहेतवो भवन्तीत्यत्र किं प्रमाणं प्रत्यक्षमागमो वेत्यादिविचारणायामागमापेक्षया प्रत्यक्षं बलवत्, प्रासादादयस्तु प्रत्यक्षं प्रत्यक्षप्रमाणविषयत्वात्, तथाहि–'आप्तोक्तिः समयागमा'विति वचनादाप्तवचनं हि सिद्धान्तः, तत्रागमव्यवहारिणः पूर्वोक्ताः षट् पुरुषा नियमेनाप्ताः, शेषास्तु भाज्याः, तत्र श्रीआर्यसुहस्तिसूरिस्तावद्दशपूर्वधरस्तत्प्रतिबोधितेन संप्रतिराज्ञा(जेन)प्रासादप्रतिमाप्रतिष्ठापूजादिकं कारयता कुर्वता च श्रीआर्यसुहस्तिसूरिधर्मोपदेशवचः सफलीकृतं, बहुवित्तव्ययसाध्यस्य जिनप्रतिमाप्रासादादेः कृत्यस्य गुरूपदेशमन्तरेणासंभवात्,प्रवचने धर्मकृत्यस्याज्ञयैव सफलत्वाद्,आज्ञामन्तरेणापि जिनप्रतिमाप्रतिष्ठानिषेधकगुरुप्रतिबोधितश्रावककारितजिनप्रासादप्रतिमादेरसंभवात्, नहि लुम्पकमतीयेन केनापि क्वापि जिनप्रासादादिकं विधाप्यमानं दृष्टं श्रुतं वा, तथा च श्रीसुहस्तीसूरिवचः सिद्धान्तः, तच्च फलवद्भवति वा नवा, परं श्रीसंप्रतिराज्ञा तु तद्विहितमेव, अतः सम्यक्त्वादिहेतुतया जिनप्रासादादिकं चक्षुरादिप्रत्यक्षप्रमाणविषयः सिद्धान्तापेक्षया बलवदेवेतिगाथार्थः ॥१७॥ अथ प्रकारान्तरेणापि बलवत्त्वमाह—

मइदोसा सद्दत्थं होइ समत्थोऽवि अण्णहा वोत्तुं। जह चेइअसद्दत्थं साहुत्ति भणइ मइमूढो ॥१८॥

मतेर्दोषो–मिथ्यात्वं तद्वशाच्छब्दार्थमन्यथा वक्तुं समर्थो भवति, यथा मतिमूढो लुम्पकश्चैत्यशब्दार्थं साधुरिति भणति, चैत्यशब्देन साधुर्भण्यते इत्यन्यथा ब्रुवाणस्य लुम्पकस्याशुचिलिप्तं लपनं कः पाणिना पिदधातीत्यर्थः, इतिगाथार्थः ॥१८॥ अथ सिद्धान्त

प्रतिमाया बलवत्ता

इव प्रतिमायामन्यथा प्रवर्त्तयितुमशक्त इति दर्शयति—

नामजुओ सिद्धंतो नामागारेहिं होइ जिणपडिमा। तम्हा खलु सिद्धंता जिणपडिमा होइ बलवंती ॥१९॥

सिद्धान्तो नामयुक्तो भवति 'समणस्स भगवओ महावीरस्से'त्यादिरूपेण यन्महावीर इति नाम तेनैव युक्तः सिद्धान्तः स्यात्, सिद्धान्ते वस्तुवाचकशब्दानामेवोपलब्धेरित्यर्थः, जिनप्रतिमा तुरित्यध्याहार्यः जिनप्रतिमा तु नामाकाराभ्यां, युक्तेत्यत्रापि संबन्धनीयं भवति, तस्मात् खलु-निश्चितं सिद्धान्ताज्जिनप्रतिमा बलवती भवति, जिनप्रतिमाऽऽराधनशङ्कानिराकृतये इति सर्वत्रापि योजनीयम्, अन्यथा वस्तुव्यवस्थाभङ्गप्रसङ्ग इतिगाथार्थः ॥१९॥ अथाकारमात्राधिक्येन बलवत्त्वं कथमित्याह—

जह वयणा वयणठिआ लिहिआगारेण वयणमिह बलवं। लिहिएण य लोविज्जइ भासिअवयणंति जगवाओ ।२०।

यथा वदनस्थितात्-मुखमात्रस्थितात् मुखेनैवोच्चार्यमाणाद्वचनाल्लिखिताकारेण-अकारादिवर्णानां पुस्तकादौ लिप्या इह-जगति वचनं बलवद्, अत एव लिखितेन च भाषितवचनं लोप्यते इतिजगत्प्रवादः, अयं भावः-इयं श्रीऋषभजिनप्रतिमेयं च श्रीवीरस्येत्यादिरूपेण नामाङ्किता जिनप्रतिमा भवन्ति, तथा लाञ्छनवर्णाकृत्यादिसमन्विताश्च, न चैवं सिद्धान्तः, अत एव प्रतिमादर्शनात् सिद्धान्तवाक्यरचना भवति, न पुनः सिद्धान्तवाक्यात् प्रतिमाकृतिनिर्मापणमपि, तस्मादेव जम्बूद्वीपाद्याकृतिमत्पट्टकादीनां सार्थक्यमितिगाथार्थः ॥२०॥ अथानन्यगत्याऽपि लुम्पकमतोत्पत्तावाश्चर्यं दर्शयति—

बलवंतबिंबलोवे बलवंतं कारणंपि कप्पिज्जं। तं खलु अच्छेराओ नन्नं सन्नीण मइविसओ ॥ २१ ॥

बलवद्बिम्बलोपे-प्रागुक्तवक्ष्यमाणयुक्त्या सिद्धान्तापेक्षया बलवत्या अपि जिनप्रतिमाया लोपे कारणमपि बलवत् कल्प्यं,

बलवत्कारणमन्तरेण बलवत्कार्यानुपपत्तेः, नहि तृणसामग्र्या तरुर्जन्यते, तत्कारणं खल्वत्रधारणे आश्चर्यान्नान्यत् संज्ञिनां-सम्यग्दृशां मतिविषयो-ज्ञानगोचरः स्यात्, किंत्वाश्चर्यमेव तत्कारणमनन्यगत्या सिद्धमितिगाथार्थः ॥२१॥ ननु सिद्धान्तादपि प्रतिमानां बलवत्त्वं कथमिति पराशङ्कायां गतिमाह—

बलवत्तं साविक्खं साविक्खं चेव दुब्बलत्तंपि। पभणिस्सं पडिमाणं तस्सुवएसाहिगारंमि ॥ २२ ॥

प्रतिमानां सिद्धान्तापेक्षया बलवत्त्वं सापेक्षं, दुर्बलत्वमपि सापेक्षमेव, 'प्रभणिष्यामि' प्रकर्षेण-दृष्टान्तबाहुल्येन भणिष्यामि, कस्मिन् ?-तस्योपदेशाधिकारे-लुम्पकस्योपदेशोऽग्रे वर्णयिष्यते तत्र तन्निराकरणप्रसङ्गगतं वक्ष्यामीतिगाथार्थः ॥२२॥ अथ पुनरप्याश्चर्यं द्रढयति—

तत्तोऽवि अ बलवंते तित्थे संतंमि नत्थि सिद्धंते। जिणपडिमाइ अचित्तं बुवंतो दंतवंतमुहो ॥ २३ ॥

ततोऽपि-जिनप्रतिमाया अपि च पुनरर्थे बलवति तीर्थे सति-विद्यमाने,सिद्धान्ताज्जिनप्रतिमा बलवती, ततोऽपि तीर्थं बलवद्, तीर्थकरनमस्करणीयत्वाद्, धर्मदेशनायां नमस्तीर्थायेति भणित्वा धर्ममुपदिशति जिनेन्द्रोऽपि, यदागमः-"तित्थपणामं काउं कहेइ साहारणेण सद्देणं। सव्वेसिं सन्नीणं जोअणनीहारिणा भयवं॥१॥"ति (श्रीआव०नि० ५६६) न चैवं नमः सिद्धान्ताय जिनप्रतिमायै वेति, तस्मात्तीर्थं सर्वेभ्योऽपि बलवद्, अत एव तीर्थाभ्युपगतपर्युषणाचतुर्थीमनङ्गीकुर्वन्नर्हदादीनां सर्वेषामप्याशातनाकारी तीर्थबाह्यो नियमादनन्तसंसारीत्यादिवचोभिर्भणितोऽपि सिद्धान्तसम्मत्या समर्थितः स्वोपज्ञपर्युषणादशशतकवृत्तावपि,एवं च सर्वबलसंपन्ने तीर्थे विद्यमानेऽपि सिद्धान्ते भणितं नास्तीत्याद्युपदेशं ददत् सर्वजनसमक्षं प्रलपन् लुम्पको दन्तवन्मुखो-दशनसंयुक्तानन

इति चित्रम्–आश्चर्यमनन्तकालभावीत्यर्थः, नह्येवमुपदेशं ददतो लुम्पकस्य मुखाद्बलवता तीर्थेन दन्ता नोद्ध्रियन्ते, अपि तूद्ध्रियन्त एव, तच्च साम्प्रतं न दृश्यते, प्रत्युत कैश्चिदज्ञानवशाज्जैनशासनसंबन्धितया व्यवह्रियते, एतच्चाश्चर्यादप्याश्चर्यं, महापापमित्यर्थः ॥२३॥ अथैवमाश्चर्यं दर्शयित्वा चतुर्भिः प्रकारैर्लुम्पकस्वरूपं चर्च्यते—

अह लुंपगस्सरूवं १ तप्पइपत्तीवि २ तस्स उवएसो ३। सिद्धंतेति ४ चउक्कं विआरणिज्जं कमेणेवं ॥२४॥

'अथे'त्याश्चर्यसमर्थनानन्तरं लुम्पकस्वरूपं १ तत्पथप्राप्तिः २ अपि पुनस्तस्योपदेशः ३ सिद्धान्त ४ श्चेति चतुष्कं क्रमेणैवं–वक्ष्यमाणयुक्तिप्रकारेण विचारणीयं धर्मपरमार्थज्ञैर्लुम्पकेन सहेति गम्यमितिद्वारगाथार्थः॥२४॥अथ लुम्पकस्वरूपपरिज्ञानार्थं प्रश्नमाह–

णणु पुच्छामो अम्हे तुम्हे जिणधम्मिआ व सिवधम्मा ?। अहवा दोहिवि भिण्णा वत्तव्वा वा अवत्तव्वा ?।२५।

ननु वयं पृच्छामो–यूयं जैनधर्मिका उत शैवधर्मिका वा अथवा द्वाभ्यामपि भिन्नाः ?,एवंविधा अपि वक्तव्या–वाचां गोचरा वा–अथवा अवक्तव्या-वक्तुमशक्या इतिविकल्पाः प्रष्टव्या इति गाथार्थः ॥२५॥ अथ प्रथमविकल्पोऽसंभवीत्याह—

जिणधम्मिआ य तित्थे अच्छिन्ने हुंति सूरिसंताणा। तं तुम्हाणवि वायामित्तेणवि मत्थए सूलं ॥ २६ ॥

जैनधर्मः–आर्हतशासनं तद्विद्यते श्रद्धानादिरूपतयेति जैनधर्मिकाः ते चाच्छिन्ने–सततप्रवृत्तिमति तीर्थे सूरिसंतानाद्–आचार्यसन्ततेः स्युः, हेत्वर्थे पञ्चमीति आचार्यसन्ततिमन्तरेण न भवन्तीत्यर्थः, तद्युष्माकमपि–लुम्पकानामपि अपिशब्दाद्राकाञ्चलिकादयो ग्राह्याः, तेषामप्याचार्यपरम्पराया अनङ्गीकारात्, तदङ्गीकारे चतुर्दशीमुखवस्त्रिकाद्यङ्गीकारापत्तेः, वाङ्मात्रेणापि भवतां किं नाम्न्याचार्यपरंपरेति केनचिदुक्ते मस्तके शूलमिवानिष्टं भवति, अत एव लुम्पकेन नास्माकमाचार्यपरम्परा प्रमाणमित्युद्घोष्यते, किं

च-अत्रापि प्रष्टव्यं-भो भवतां लुम्पकमतपरम्परा सम्मता असम्मता वा ?, आद्ये श्रीसुधर्मस्वामिनोऽच्छिन्नागतया परम्परया किमपराद्धं ?, यतस्तां परम्परां परित्यज्य लुम्पकमतपरम्पराऽभ्युपगम्यते, एवं च सति स्वमुखेनैव जैनप्रवचनाद्बाह्यत्वमप्यात्मन उद्घोपितम्, अथ लुम्पकमतपरम्परापि न सम्मतेति द्वितीयपक्षश्चेत् सम्मतमेव ब्रूपे, परमध्यक्षमेव मृषाभापित्वं लक्ष्यते, नो चेल्लुम्पकमतपरम्परात्यागे जिनप्रतिमाया अवश्यमेव स्वीकारापत्तेः कथं जिनप्रतिमा नाराध्यते ?, तस्मात्परम्पराऽस्माकं न प्रमाणमिति वदता लुम्पकमतपरम्पराङ्गीकारे च माता मे वन्ध्येति न्यायोऽभ्युपगत इतिगाथार्थः॥२६॥ अथ शैवधर्मित्वमपि लुम्पकस्य नास्तीति दर्शयति—

सिवधम्मिआ य हरिहरबंभाईणं हवंति भत्तिजुआ। तंपि अणिट्ठं तुम्हं तम्हा तइए अवत्तव्वा ॥२७॥

शैवधार्मिका हरिहरब्रह्मादीनां भक्तियुता भवन्ति, तदपि युष्माकमनिष्टं, तस्मात्कारणात् तृतीये-जैनशैवधर्मव्यतिरिक्ते विकल्पे अवक्तव्या भवन्तो, न पुनर्वक्तव्या इति पारिशेष्यात्संपन्नमितिगाथार्थः ॥२७॥ अथ यत एवं ततः किमागतमित्याह—

तेणमवलाववयणं जुत्तं तुम्हाण धम्मदायाणं। उवएसवेसमूलाणं(ण हु)लुंपगभाणगाणंपि ॥ २८ ॥

येन कारणेन न जैना न च शैवाः, किंतु ताभ्यां व्यतिरिक्तास्तत्राप्यवक्तव्या-न पुनरमुकनाम्नेति वक्तुं शक्यास्तेन कारणेनापलापवचनं युक्तं,केषां ?-युष्माकं धर्मदायकयोः-प्रतिमानिन्दात्मकमार्गदात्रोः, किंनाम्नोः ?-लुम्पकभाणकयोः-लुम्पकभाणकनाम्नोः, किंलक्षणयोः ?-उपदेशवेषमूलयोः, अपिर्व्यवहितः संबध्यते, उपदेशवेषमूलयोरपि उपदेशमूलं लुम्पको वेषमूलं च भाणक इति द्वयोरपि नामाप्यपलप्य वयं श्रीसुधर्मस्वामिनोऽपत्यानीति प्रत्यक्षमृषाभापिणः, नह्यच्छिन्नशिष्यप्रशिष्यादिसंबन्धमन्तरेण कोऽपि कस्याप्यपत्यं भवितुमर्हति, एतच्च लोकेऽपि प्रतीतमेव, न हि कोऽपि कस्यापि कुलाचारमङ्गीकृत्यापि तद्गृहे वसमानोऽपि तत्कुलानु-

लुम्पकस्वरूपं

त्पन्नस्तत्संतानीभूय प्रवर्त्तमानो दृश्यंते, तथा प्रवृत्तौ च जगद्व्यवस्थाविप्लवः प्रसज्येत, तस्मात् लुम्पकभाणकापत्यत्वमात्मनः ख्यापयन् सम्यग्वादी स्याद्, अन्यथा मृषाभाषी लोकव्यवहारबाह्यश्च,नहि लोकेऽपि नीचचाण्डालादिकुलोत्पन्नोऽपि स्वपित्रादिकमपलप्य कुलीनं महर्द्धिकं वा पित्रादिकं ब्रूते, अयं च लुम्पकभाणकावपलप्य सुधर्मादिकं पितृत्वेन ब्रुवाणस्ततोऽपि नीच इति बोध्यमितिगाथार्थः ॥ २८ ॥ अथ लुम्पकस्वरूपं कीदृक् सिद्धमित्याह—

एवं गुणनिप्फण्णं नामं तुम्हाण तुम्ह वयणेणं। अव्वत्तावत्तव्वा तुम्हे सेसा अवत्तव्वा ॥ २९ ॥

एवं–प्रागुक्तस्वरूपेण युष्माकं वचनेनैव युष्माकं गुणनिष्पन्नं नाम अव्यक्तावक्तव्या यूयमिति सिद्धं, तत्राव्यक्ता जैनशैवबाह्या उत्सूत्रभाषिणो भण्यन्ते, तेष्वपि लुम्पका अवक्तव्या–अमुकस्यापत्यानि वयमिति नाममात्रेणापि वक्तुमशक्ताः, शेषास्तु राकारक्तादयो नाममात्रेणामुकस्यापत्यानि वयमिति ब्रुवाणा अव्यक्ता एवेत्यपरैः सह भेद इतिगाथार्थः ॥२९॥ इतिगाथापद्वेन लुम्पकस्वरूपं दर्शितमिति ॥ इति लुम्पकस्वरूपं ॥ लुम्पकमते धर्मप्राप्तिस्वरूपं विकल्प्य दूषयितुं प्रश्नयन्नाह—

णणु तुम्हाणं धम्मो सुअधम्मो किमुअ दिट्ठधम्मो वा ?। पढमो सुअधम्माओ गुरुओ नय असुअधम्माणवि ।३०।

ननु भो लुम्पका ! युष्माकं धर्मो–जिनप्रतिमोत्थापनादिरूपः श्रुतधर्मः किमुत दृष्टधर्मो वेति विकल्पद्वयी प्रश्नविषयीकार्या, तत्र श्रुतः–कस्यापि गुरोः समीपे श्रवणगोचरीकृत एवंविधो यो धर्मः स श्रुतधर्मः, गुरुवचनं श्रुत्वा ज्ञात इत्यर्थः, दृष्टधर्मस्तु यद्यपि न भवत्येव तथापि पुस्तकं दृष्ट्वाऽस्माभिर्धर्मोऽवगत इति लुम्पकमताभिप्रायेण द्वितीयविकल्प उद्भावित इति, विकल्पद्वये प्रश्निते प्रथमविकल्पस्य श्रुतधर्मस्य स्वरूपमाह–प्रथमः–श्रुतधर्मो गुरुतो–गुरोः सकाशाद्भवति, गुरुवचनं श्रुत्वैव भवतीत्यर्थः, तत्र गुरुरपि

कीदृशः स्यादिति गुरोरपि विशेषणमाह–'श्रुतधर्मेण(र्मतः)' श्रुतो धर्मो येन स श्रुतधर्मा येन गुरुणाऽपि निजगुरुपार्श्वे धर्मः श्रुतो भवति तस्मादेव श्रुतधर्मः स्यात्, न चाश्रुतधर्मादपि, येन धर्मः श्रुतो न स्यात्तस्य पार्श्वे धर्मं श्रुत्वा श्रुतधर्मो न स्यात्, धर्मश्रावणेऽनादिप्रवाहपतितस्य श्रुतधर्मस्य कारणत्वाद्, अत एवाश्रुतधर्माणस्तीर्थकृतो न भवन्ति, भवन्ति चाच्छिन्नपरंपरागतश्रुतधर्मप्रवृत्त्यर्थमवधिमन्तोऽपि जातिस्मरणादिभाजः, यदागमः–'जाईसरो उ भयवं अप्परिवडिएहिं तिहिं उ नाणेहिं' (आव० १९२) तीर्थकृतां हि नियमेन परेभ्यो धर्मदेशकत्वं स्यात्, यदागमः–"तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं"ति (आव० १८३) तथा 'धम्मदेसयाण'मित्यादि सर्वजनप्रतीतमितिगाथार्थः ॥३०॥ अथाश्रुतधर्मणो गुरोः सकाशात् श्रुतधर्मो न भवतीत्यत्र हेतुमाह—

**जमसुचाकेवलिणो धम्मुवएसं न दिंति न य धम्मं। सुचाकेवलिणो पुण दिसंति धम्मोवएसाइ ॥३१॥**

यद्–यस्मात्कारणादश्रुत्वाकेवलिनो धर्मोपदेशं न ददति, न च धर्मं–चारित्रलक्षणं ददति, यदागमः–"असुच्चाणं भंते! इत्यादियावत् केवलवरनाणदंसणे समुप्पज्जति, से णं भंते! केवलिपण्णत्तं धम्मं आघवेज्ज वा पण्णवेज्ज वा परूवेज्ज वा?, गोअमा! णो इणट्ठे समट्ठे, नन्नत्थ एगनाएण वा एगवागरणेण वा, से णं भंते! पव्वावेज वा मुंडावेज्ज वा?,णो इणट्ठे समट्ठे, उवएसं पुण करिज्जा, से णं भंते! सिज्झति जाव अंतं करेति भगवत्यां शतक ९ उ० ३१ (३६४–५) एतद्वृत्त्येकदेशो यथा 'आघविज्ज'त्ति आग्राहयेत् शिष्यान् अर्घापयेत् वा–प्रतिपादनतः पूजां प्रापयेत् 'पण्णवेज्ज'त्ति प्रज्ञापयेत् भेदभणतो बोधयेद्वा 'परूवेज्ज'त्ति उपपत्तिकथनतः 'नन्नत्थ एगनाएण व'त्ति नेति योऽयं निषेधः सोऽन्यत्रैकज्ञातात्, एकमुदाहरणं वर्जयित्वेत्यर्थः, तथाविधकल्पत्वादस्येति, "एगवागरेण वत्ति" एकव्याकरणाद्, एकोत्तरादित्यर्थः,'पव्वाविज्ज'त्ति प्रव्राजयेत् रजोहरणादिद्रव्यलिङ्गदानतः 'मुंडावेज्ज'त्ति मुण्डयेत्

शिरोलुञ्चनतः, 'उवएसं पुण करेज'त्ति अमुष्य पार्श्वे प्रव्रजेत्यादिकमुपदेशं कुर्यादित्यादि,ये तु धर्मं श्रुत्वा केवलिनो जातास्ते श्रुत्वा-केवलिनो भण्यन्ते, ते पुनर्धर्मोपदेशादि–धर्मोपदेशमादिशब्दाच्चारित्रादि धर्मदानं च कुर्वन्ति, यदागमः–"सुचाणं भंते ! इत्यादि-यावत् से णं भंते ! केवलिपण्णत्तं धम्मं आघविज्ञा पण्णविज्ञा परूविज्ञा वा ?, हंता गोअमा !, आघवेज्ञा पण्णवेज्ञा परूवेज्ञा वा, से णं भंते ! पव्वावेज्ञा वा मुंडाविज्ञा वा ?, हंता पव्वाविज्ञा वा मुंडाविज्ञा वा, तस्स णं भंते ! सीसावि पव्वाविज्ञ वा मुंडाविज्ञ वा ?,हंता गो० ! पव्वाविज्ञ वा मुंडाविज्ञ वा,से णं भंते ! सिज्झइ" इत्यादि भग० शतक ९ उ०३१(२६६–७)एतेन 'सयंसंबुद्धाण'-मितिवचनात् श्रुतधर्मस्याच्छिन्नपरम्परागमत्वमेवेति नियमो नास्तीति पराशङ्कापि न्युदस्ता, एतत्पदमिहजन्मनि परोपदेशनिरपेक्षत्व-सूचकं. प्राग्जन्मसंबन्धिनोऽच्छिन्नस्य श्रुतधर्मस्य विद्यमानत्वात् , तथा प्रथमबोधिकालेऽपि तीर्थकृज्जीवाः गुरूपदेशेन धर्मावाप्तिमन्तो-ऽपि सुखबोधिभाक्त्वात् स्वयंसंबुद्धा इत्युपचर्यन्ते, यथा पच्यते ओदनः स्वयमेवेति, न पुनः प्राग्जन्मन्यपि सर्वथा परोपदेशाभाव एव, महावीरजीवस्य नयसारजन्मनि गुरूपदेशेनैव बोधिलाभात् ,यदागमः-"दाणन्न पंथनयणं अणुकंप गुरूण कहण सम्मत्तं । सोहम्मे उववण्णो पलिआउ सुरो महिड्डिओ ॥१॥त्ति (आव० २ भा०) ननु श्रुतधर्मस्यानादिमत्त्वमवधिमत्त्वेऽपि संभवति कथं जातिसरणादि ग्रहणं फलवदिति चेदुच्यते, नरकादुत्पन्नस्य तीर्थकृतस्तथाविधावधिज्ञानाभावाज्जातिसरणेनैव श्रुतधर्मस्याच्छिन्नपरम्परेति, अत एवागमोऽपि "जाईसरो अ भयवं अप्पडिवडिएहिं तीहि णाणेहि"न्ति प्राग् प्रदर्शितमितिगाथार्थः ॥ ३१ ॥ अथोक्तलक्षणो धर्मो लुम्पकमतेऽन्येषामपि कुपाक्षिकाणां च मतेषु नास्तीति दर्शयति—

**इअ पंचमंगभणिअं लुंपगमूलंमि तुम्ह धम्मंमि । नो संभविज्ज एवं सेसाण कुवक्खिआणंपि ॥३२॥**

इति-अमुना प्रकारेण भगवत्यङ्गभणितं-सम्मतितया दर्शितं यद्भगवतीवचनं भो लुम्पका! लुम्पकमूले-युष्माकं धर्मे न संभवेद्, यतो लुम्पकलेखकेन प्रतिमापूजादिपातकलक्षणो धर्मः कस्यापि जैनस्य पार्श्वे श्रुतो नास्ति, किंतु स्वयमेव तन्मूलीभूतः, अत एव लुम्पकधर्मस्यादिकर्तृत्वेन तत्तीर्थकृदपि लुम्पक एव, नान्यः कश्चिद्, एवं शेषाणामपि कुपाक्षिकाणां दिगम्बरराकारक्तौष्ट्रिकाञ्चलि-कसार्द्धपौर्णमीयकागमिकपाशवन्ध्यादीनामपि बोध्यं, तत्तन्मतानां शिवभूतिचन्द्रप्रभजिनदत्तनरसिंहादिभ्यः प्रथमतः प्रवृत्तत्वात्, तत्तीर्थ-कृतोऽपि शिवभूत्यादय एव, न पुनः श्रीवीरादयः, एतेन येषां श्रीभगवत्यङ्गं प्रमाणं तैरेते शिवभूत्यादिसन्तानीया निजनिजमार्ग-मुपदिशन्तः प्रथमवृष्टयुत्पन्नाः सम्मूर्च्छिमदर्दुरा इव पूत्कुर्वाणा अवगन्तव्या इति दर्शितमितिगाथार्थः ॥३२॥ अथ लुम्पकाभिमतं दृष्टधर्मं दूषयितुमाह—

जइ तुहऽहिमओ धम्मो दिट्ठो सिद्धंतपुत्थए अत्थि। ता तइवि पुत्थयं खलु अण्णेसिं दंसणिज्जंति ॥३३॥

ननु भो लुम्पक! यदि तव सिद्धान्तपुस्तके दृष्टो धर्मोऽभिमतः-सम्मतोऽस्ति 'ता' तर्हि त्वयाऽप्यन्येषां धर्मबुभुत्सया त्वद-भिमुखानां पुस्तकं-खलुरवधारणे पुस्तकमेव दर्शनीयं, त्वयाऽपि तथत्वोपलब्धेरितिगाथार्थः ॥३३॥ अथ लुम्पकमते यदकल्प्यं तदाह—

नय वायामित्तेणवि कप्पइ वोत्तुंपि कस्सई पुरओ। जइ ते धम्मो पुत्था कहं न अण्णेसिमवि हुज्जा? ॥३४॥

न च कस्यचित्पुंसो वाङ्मात्रेणापि वक्तुं कल्पते त्वया, इदं सिद्धान्तपुस्तकं दृष्ट्वा धर्मः श्रद्धेयः कर्त्तव्यश्चेत्यपि वक्तुं न युज्यते, इत्थमपि त्वया क्वाप्यश्रवणात्, भो लुम्पक! यदि तव तथोपदेशमन्तरेण केवलपुस्तकाद्धर्मःकथमन्येषामपि पुस्तकान्न भवेद्?, अपि तु भवेदेवेति वाचा त्वया मौनमेव कर्त्तव्यतया संपन्नं, न ह्यश्रुतधर्मा कस्यापि धर्मं श्रावयतीति तात्पर्यं संपन्नमितिगाथार्थः ॥३४॥

अथ श्रुतधर्मेण पुरुषेणान्येषामपि धर्मः श्राव्यो नान्येनेत्यत्र दृष्टान्तमाह—

गब्भयइत्थी गब्भं धरेइ नन्नावि सुंदरीव सुरी। थणपाणं जीइ कयं सा सावचंपि कारिज्जा ॥३५॥

'गर्भजस्त्री'या स्वयं गर्भे उत्पन्ना सा गर्भजस्त्री गर्भं धरति, कुत्सितापि मानुषी तिर्यश्ची वा गर्भं धरति, नान्यापि अगर्भजापि, वा इवार्थे, इव–यथा सुन्दरी–मनोज्ञा सुरी–देवाङ्गना, अपिर्गम्यः, सुन्दर्यपि देवाङ्गना यथा गर्भं न धरति, स्वयं गर्भेऽनुत्पन्नत्वादित्यर्थः, पुनरपि दृष्टान्तमाह–'थणपाणं'ति यया स्त्रिया स्तन्यपानं–निजमातृस्तन्यपयःपानं कृतं स्यात् सा स्वापत्यमपि–निजपुत्रपुत्रीलक्षणमपि कारयति, स्तन्यपानमित्यत्रापि संबध्यते, न पुनरन्यापि यथा पक्षिणी, तया च स्वयं निजमातुः स्तन्यपयःपानं कृतं नास्त्यतः स्वापत्यमपि न कारयतीतिगाथार्थः ॥३५॥ अथ दार्ष्टान्तिकयोजनामाह—

एवमणाइपवाहप्पडिओ जिणभासिओ हु सुअधम्मो। जो सउवएसविसओ नन्नोत्ति अ सासई मेरा ॥३६॥

'एवं' प्रागुक्तदृष्टान्ताभ्यामनादिप्रवाहपतितः–अनादिपरम्परामार्गगतो यो जिनभाषितो–हुरेवार्थे जिनभाषित एव धर्मो दुर्गतिपतत्प्राणिधरणसमर्थः सदुपदेशविषयः–परेभ्य उपदेशनीयो, नान्योऽश्रुतधर्मोऽपि, चोऽप्यर्थे, इयं शाश्वती मर्यादा–जगत्स्थितिर्बलीयसापि लङ्घयितुमशक्या, न चेयं मर्यादा जैनधर्मातिरिक्तधर्मेऽपि शङ्कनीया, जैनप्रवचनातिरिक्तानां सर्वेषामपि नाममात्रेण धर्मत्वेऽपि वस्तुगत्या न धर्मत्वं, किंत्वधर्मत्वमेव, अधर्मस्तु जीवमात्रं प्रत्युपदेशमन्तरेणाप्यनादिप्रवाहपतितः स्वयंसिद्ध एव, यथा लुम्पकलेखकस्य जिनप्रतिमोत्थापनादिलक्षणो ह्यधर्म उपदेशमन्तरेणापि स्वयं सिद्धः, एवमन्येषामपि कुपाक्षिकाणां मार्गा उपदेशमन्तरेणैव सिद्धाः, या तु तदनुजानां तथाविधोपदेशापेक्षा सा ह्यकिञ्चित्करयेव, यतो यदि लुम्पकमतीयानामेतदुन्मार्ग-

श्रयणं नाभविष्यत्तर्हि तथाविधजीवयोग्यतावशान्नामान्तरेण प्रकारान्तरेण च तथाविधान्यान्योन्मार्गाश्रयणमवश्यं अभविष्यद्, उन्मार्गाणां च संख्यातीतत्वाद्, यदागमः-"जावइआ वयणपहा तावइआ चेव हुंति नयवाया। जावइआ नयवाया वयणपहा तत्तिआ चेव ॥१॥"त्ति (स्थानाङ्गे ३९० पत्रे अनुयोगे २६७ पत्रे) सर्वेषामप्यधर्मत्वेन साम्यात् कदाचित् कस्यचित्कश्चिदुन्मार्गलक्षणोऽधर्मो भवत्येव, जैनधर्मप्राप्तिमन्तरेणाभिग्रहिकमिथ्यात्वाद्यधर्मस्याकालमविरहात्, जैनधर्मस्य च नानात्वाभावात्, प्रतिजीवं सादिमत्त्वादुपदेशकपुरुषसंततिपरम्परापेक्षयाऽनादिमत्वाच्च जैनमार्गे एवेयं मर्यादा, लौकिकद्रव्यमार्गेऽपि जिगमिषितग्रामादिदिगभिमुखयायी यो रथ्यादिमार्गः स दिगपेक्षया एक एव स्यात्, शेषास्तु नवापि नवदिगभिमुखयायिनो रथ्यादय उन्मार्गा एव, ते च बहव एव भवन्ति, तत्रापि मार्गस्यैवोपदेशापेक्षा, नोन्मार्गाणामपि, मार्गाप्राप्तौ हि अन्यतरस्योन्मार्गस्य प्राप्तेः स्वयं सिद्धत्वात्, ननु जैनमार्गेऽपि नानात्वं दृश्यते तत्कथमिति चेन्मैवं, जैनधर्मस्य नानारूपत्वाभावात्, जैनधर्मं हि क्षायिकभाववर्तिन एवार्हन्त उपदिशन्ति, क्षायिकभावे च नास्ति विकल्पः, यदागमः-"खयंमि अविगप्पमाहंसु"त्ति, जिनकल्पिकस्थविरकल्पिकोत्सर्गापवादादिकं यं कञ्चन मार्गं येन येन स्वरूपेण श्रीऋषभादिजिनाः भाषन्ते तेनैव श्रीवीरोऽपि, येन स्वरूपेण श्रीवीरो भगवान् भाषते तेनैव स्वरूपेण श्रीऋषभाद्योऽपि, भिन्नप्ररूपणामूलयो रागद्वेषयोरभावात्, ये तु जैननाममात्रधारिणः राकारक्तादयस्ते तु जैना एव न भवन्ति, किंतु जैनशैवव्यतिरिक्ता अव्यक्ता एव भण्यन्ते, तच्च प्रथमविश्रामेऽनेकग्रन्थसम्मत्या दर्शितं, किंच-दुष्षमाकाले मुग्धजनानामेतेऽपि जैना इति भ्रान्त्युत्पादका मा भवन्त्वित्यभिप्रायेणैवैतद्ग्रन्थस्य प्रारम्भः फलवानितिगाथार्थः ॥२३॥ अथ पुस्तकधर्मा धर्मोपदेशं ददत् कीदृग् स्यादिति दृष्टान्तमाह—

**एवं जो पुत्थाओ लहिउं धम्मंपि देइ उवएसं। सो मच्छिआसरूवो हंसीजणओ सयंजाओ ॥३८॥**

एवं सत्यपि यः पुस्तकाद्धर्मं लब्ध्वा उपदेशं ददाति–धर्ममुपदिशति स 'मक्षिकास्वरूपः' मक्षिका–चतुरिन्द्रियजीवविशेषः सर्वजनप्रतीतस्तादृशं स्वरूपं यस्यैवंविधः सन् 'हंसीजनको' हंसीति जनप्रसिद्धा पक्षिणीविशेषस्तस्या जनकः स्वयंजातः, एतावता पुस्तकादवाप्तधर्मो मक्षिकाकल्पः श्रुतधर्मा तु हंसीकल्प इत्यन्योऽन्यं जन्यजनकाभावो जगत्स्थितिसिद्धः, स एवाश्चर्यभूतः संपन्नः, न चैवमश्रुत्वाकेवल्यपि मक्षिकाकल्पः इति शङ्कनीयं, तस्य मया पुस्तकाद्धर्मोऽवाप्त इति वक्तृत्वाभावात्, तेनाश्रुत्वाकेवलिनो हि (न)दृष्टान्तः, (किंतु) गब्भयइत्थीत्ति गाथायां (उक्तः) सुन्दरीसुरी दृष्टान्तो बोध्य इतिगाथार्थः॥३७॥ अथ पुस्तकधर्माणमतिप्रसङ्गेन दूषयितुं गाथायुग्माह–

**नणु जिणपडिमापुत्थयमजीवरूवाइं दोऽवि जायाइं। पुत्थाओ जिणधम्मो लद्धो किं ते न पडिमाओ?॥३८॥**
**तत्थवि किंचिनिमित्तं भणिअव्वं भणइ लुंपगो एवं। वाइअपुत्था अत्थो लब्भइ न जिणिंदपडिमाओ ॥३९॥**

ननु भो लुम्पक! जिनप्रतिमा पुस्तकं चः समुच्चयार्थे गम्य इति द्वे अजीवरूपे जाते स्तः, पुस्तकाज्जिनधर्मो लब्धः किं ते–त्वया न प्रतिमातः ?, अजीवरूपे तव मते जिनेन्द्रप्रतिमा नाद्रियते तर्हि पुस्तकादप्यजीवात्कथं धर्मप्राप्तिः ?, यदि पुस्तकाद्धर्मप्राप्तिः सुतरां जिनेन्द्रप्रतिमाया अपि, एवं प्रतिबन्द्यां सत्यामपि यदि पुस्तकाद्धर्मप्राप्तिः स्वीक्रियते न जिनप्रतिमायास्तत्रापि किंचिन्निमित्तं भणितव्यं, किं कारणमिति वक्तव्यमित्युक्ते लुम्पको भणत्येवं–वाचितपुस्तकादर्थो लभ्यते न जिनेन्द्रप्रतिमात इत्युत्तरार्द्धेन लुम्पकोत्तरमितिगाथायुग्मार्थः ॥ ३८-३९ ॥

वचन-परीक्षा ८ विश्रामे ॥४४॥

लुम्पक-स्वरूपं

वायणकला सहोत्था पुरिसायत्ता य किंच तुब्भ मए ?। एवं सिद्धंतत्थे पुच्छेअव्वंपि तित्थं णं ॥४०॥

भो लुम्पक! वाचनकला–पुस्तकवाचनशक्तिस्तव मते सहोत्था लुम्पकमते यदा मतिस्तदानीं तत्क्षणादेव वाचनकला स्याद्, एवं किं वा चः समुच्चये पुरुषायत्ता–गुर्वायत्ता, एवम्–अमुना प्रकारेण सिद्धान्तार्थेऽपि तीर्थे नः प्रष्टव्यं, सिद्धान्तार्थावगमशक्तिरपि सहोत्था उत पुरुषायत्तेति विकल्पद्वयी तीर्थेन तीर्थान्तर्वर्त्तिना येन केनापि निपुणेन प्रष्टव्यमितिगाथार्थः ॥ ४० ॥ अथोक्तविकल्पद्वययुग्मे प्रथमविकल्पावेव विकल्पयन्नाह—

दोण्हंपि दो विगप्पा पढमा किं ते मयस्स अइसयओ। अहवावि जगसहावो जं उभयं होइ सहसिद्धं ॥४१॥

'द्वयोरपि' विकल्पद्वययुग्मयोः वाचनकला सहोत्था उत पुरुषायत्ता चेति विकल्पद्वयं प्रथमं, द्वितीयं च सिद्धान्तार्थावगमशक्तिः सहोत्था उत पुरुषायत्ता वेत्येतयोर्द्वययुग्मयोर्मध्ये प्रथमौ विकल्पौ–वाचनकला सिद्धान्तार्थावगमशक्तिश्चेतिरूपौ किं ते–तव मतस्यातिशयात्–अतिशयविशेषादथवा जगत्स्वभावः यदुभयमपि तव मते सहसिद्धं भवतीतिगाथार्थः ॥४१॥ अथोपहासेन दूषयन्नाह—

एसो खलऽइसओ ते मयंमि जुत्तो अ जेण साहुत्ति। वुचइ चिइसद्देणं मुद्दा तित्थाउ बज्झस्स ॥४१॥

एष तव मते खलु–निश्चितमतिशयो युक्तो, येन तीर्थाद्बाह्यस्य मुद्रा–चिह्नं चैत्यशब्देन साधुरित्युच्यते इत्युपहासं, यतश्चैत्यशब्देन साधुरिति केनापि तीर्थवर्त्तिना पण्डितेन क्वाप्यागमे भणितं नास्ति, प्रत्युत चैत्यशब्देन जिनप्रतिमा जीवाभिगमे भणितेति पुरो वक्ष्यते, अयं चान्यथा ब्रुवाणोऽतिशयवानेव, तस्माद्वस्तुगत्याऽयं खलातिशयो बोध्यः, खलो–दुर्जनस्तद्वदयमतिशयः खलातिशयस्तवैव युक्तो, नान्येषां, ह्रस्वत्वं च प्राकृते बाहुलकत्वादितिगाथार्थः ॥४२॥ अथ जगत्स्थितिमिष्टापत्त्या दूषयितुमाह—

*जइ जगठिईवि एसा जुत्ता एआरिसं जया कुमयं। उप्पज्जइ एआरिसवायणपमुहेहिं संजुत्तं ॥ ४३ ॥*

यदि जगत्स्थितिरप्येषा यल्लुंपकमते तथा वाचनशक्तिरर्थकरणशक्तिश्चेति सा युक्ता यदैतादृशं कुमतमुत्पद्यते तदैतादृशवचन-प्रमुखैः संयुक्तमेवोत्पद्यते, अयं भावः—यदा कदाचित्तथाविधलोकानामशुभकर्मोदयादनन्तेनापि कालेनैतादृशं कुमतमुत्पद्यते तदा लुम्पकवद्वाचनशक्तिरर्थकरणशक्तिश्च जगत्स्थित्योत्पद्यत एव, अन्यथा स्वय गृहस्थेन सताऽङ्गादिपाठवाचनं चैत्यादिशब्दानां साध्वा-द्यर्थकरणं वाऽसंभव्येव, नह्येतादृशं महापातकमङ्गीकृत्य कोऽपि ब्रुवाणः संभवेदितिगाथार्थः ॥४३॥ अथ पुरुषायत्तां तां ब्रुवाणस्य लुम्पकस्य किं स्यादित्याह—

*अह जइ दोण्हंपंता दोवि विगप्पा पुरिसपरतंता। ता अच्छिन्ने तित्थे आयरिअपरंपरा सिद्धा ॥४४॥*

अथ यदि द्वयोरपि युग्मयोरन्त्यौ द्वावपि विकल्पौ—वाचनपद्धतिरर्थावाप्तिश्चेति पुरुषपरतन्त्रौ—पुरुषायत्तौ 'ता' तर्हि अच्छिन्ने तीर्थे आचार्यपरम्परा सिद्धा, आचार्यपरम्परामन्तरेण पुरुषपारतन्त्र्यासंभवादितिगाथार्थः ॥४४। अथानन्यगत्या सिद्धायामप्याचार्य-परम्परायां लुम्पकस्य किं संपन्नमित्याह—

*एअं तुब्भ अणिट्ठं दिट्ठं तुह वयणओवि विण्णायं। तम्हा तुह पहलाहो पुत्थाओ अलिअवयणमिणं ॥४५॥*

एतत्प्रागुक्तमाचार्यपरम्परादिकं तव—लुम्पकस्यानिष्टं दृष्टं साक्षात्सर्वजनैरपि, अपि पुनस्तव वचनाद्विज्ञातं, पृष्टोऽपृष्टो वा त्वं स्वयमेव वदसि यदस्माभिराचार्यपरम्परा नाभ्युपगम्यते,तस्मात्कारणात् तव पथलाभः—त्वत्पथावाप्तिः पुस्तकाद् ,इदमलीकवचनं—यत्त्वं वदसि मयाऽयं मार्गः पुस्तकादवाप्त इत्यलीकवचनमितिगाथार्थः ॥४५॥ अथ पुस्तकेनैव पुस्तकाभिमानं निरस्यन् गाथायुग्माह—

कत्थवि पुत्थे लिहिअं दीसइ पुत्थाउ लब्भई धम्मो। अम्हेऽवि सद्दहामो कहंचि सच्चंपि तुह वयणं ॥४६॥
नेवं कत्थवि लिहिअं लिहिअं पडिमाउ लब्भई धम्मो। जह वुड्ढकप्पभासे सिद्धंते भासिअं एवं ॥४७॥ युग्मं॥

पुस्तकादपि–सिद्धान्तपुस्तकादपि धर्मो लभ्यते इति यदि कुत्रापि पुस्तके लिखितं दृश्यते यदितर्हिशब्दयोरध्याहारोऽधिकारवशाद्गम्यः तर्हि वयं श्रद्धामस्तव वचनं कथंचित्सत्यमपि, सर्वथा सत्यं तु प्रवचनबाह्यानां न स्यादेवेति कथंचिदुक्तं,केनापि प्रकारेण कचिदंशे सत्यमित्यर्थः, नैवं कुत्रापि लिखितं–कापि पुस्तके पुस्तकाद्धर्मो लभ्यते इति लिखितं नास्ति, किंतु लिखितं प्रतिमातो धर्मो लभ्यते, जिनप्रतिमादर्शनाद्धर्मो लभ्यत इति पुस्तके लिखितमस्तीत्यर्थः, न चैतद्वाङ्मात्रेणेति सम्मतिमाह–'जह वुड्ढ'त्ति यथा बृहत्कल्पभाष्ये सिद्धान्ते भाषितं, भाष्यादेः सिद्धान्तत्वमग्रे लुम्पकमुखेनैवाभ्युपगमयिष्यतेऽतो भाष्यस्यापि सिद्धान्त इति विशेषणं, तच्च कथं भाषितम् ?, एवम्–अनन्तरं वक्ष्यमाणमिति गाथायुग्मार्थः ॥४६-४७॥ अथ बृहत्कल्पभाष्यमेवाह—

तित्थयरा १ जिण २ चउदस ३ भिण्णे ४ संविग्ग ५ तह असंविग्गे ६।
सारूविअ ७ वय ८ दंसण ९ पडिमाओ १० भावगामाओ ॥ ४८ ॥

एतट्टीका यथा–भावग्रामस्तु नोआगमतो ज्ञानादिकं–ज्ञानदर्शनचारित्रसमवायरूपं, यतो वा तेषां ज्ञानादीनामुत्पत्तिर्भवति ते भावग्रामतया ज्ञातव्याः, के पुनस्ते ?, उच्यते ?–'तित्थयरा०' तीर्थंकराः–अर्हन्तः जिनाः–सामान्यकेवलिनः अवधिमनःपर्यवजिना वा चतुर्दशपूर्विणो दशपूर्विणश्च प्रतीताः 'भिन्न'त्ति असंपूर्णदशपूर्वधारिणः संविग्नाः–उद्यतविहारिणः असंविग्नाः–तद्विपरीताः सारूपिका नाम श्वेतवाससः क्षुरमुण्डितशिरसो भिक्षाटनोपजीविनः पश्चात्कृतविशेषाः 'वय'त्ति प्रतिपन्नाणुव्रताः श्रावकाः 'दंसण'त्ति

दर्शनश्रावकाः-अविरतसम्यग्दृष्टय इत्यर्थः, प्रतिमा-अर्हद्बिम्बानि, एष सर्वोऽपि भावग्रामः, एतेषां दर्शनादिना ज्ञानादिप्रसूतिसद्भावाद्, अत्र परः प्राह-ननु युक्तं तीर्थकरादीनां ज्ञानादिसंपत्समन्वितानां भावग्रामत्वं, ये पुनरसंविग्नास्तेषां कथमिव भावग्रामत्वमिति चेत् अभावितमतीनां केषांचिद्दर्शनादपि सम्यक्त्वोत्पत्तेस्तेषामपि भावग्रामत्वमुपपद्यते एवेति कृतं प्रसङ्गेन ॥४८॥ अथ तीर्थकरपदं विशेषतो भावयति—

चरणकरणसंपन्ना परीसहपरायगा महाभागा। तित्थयरा भगवंतो भावेण उ एस गामविही ॥४९॥

एतद्वृत्तिर्यथा चरणकरणसंपन्नाः परीषहपराजेतारो महाभागास्तीर्थकरा भगवन्तो दर्शनमात्रादेव भव्यानां सम्यग्दर्शनादिबोधिबीजप्रसूतिहेतवो भावग्रामतया प्रतिपत्तव्याः, एवं जिनादिष्वपि भावनीयं, एषः-सर्वोऽपि भावग्रामविधिर्मन्तव्यः ॥४९॥ अथ प्रतिमामधिकृत्य भावनामाह—

जा सम्मभाविआओ पडिमा इअरा न भावगामो उ। भावो जइ नत्थि तहिं नणु कारणकज्जउवयारो ॥५०॥

याः सम्यग्भाविताः-सम्यग्दृष्टिपरिगृहीताः प्रतिमास्ता भावग्राम उच्यते, न इतराः-मिथ्यादृष्टिपरिगृहीताः, आह-सम्यग्भाविता अपि प्रतिमास्तावद् ज्ञानादिभावशून्यास्ततो यदि ज्ञानादिरूपो भावः तत्र नास्ति ततस्ताः कथं भावग्रामो भवितुमर्हन्ति ?, उच्यते, ता अपि दृष्ट्वा भव्यजीवस्यार्द्रकुमारादेरिव सम्यग्दर्शनाद्युदीयमानमुपलभ्यते ततः कारणे कार्योपचार इतिकृत्वा ता अपि भावग्रामो भण्यन्ते ॥ अत्र परः प्राह—

एवं खु भावगामो निण्हगमाईवि जइ मई तुब्भं। एअमवत्तं को णु हु अन्विवरीओ वदिज्जाहि ? ॥५१॥

यथा सम्यग्भावितानां प्रतिमानां कारणे कार्योपचाराद्भावग्रामत्वं युष्माकं मतम्–अभिप्रेतमेवमेव निह्नवादयोऽपि भावग्राम एव भवतां प्राप्नुवन्ति, तेषामपि दर्शनेन कस्यचित्सम्यग्दर्शनोत्पादात्, सूरिराह–एतत्–त्वदुक्तमवाच्यं वचनं भवन्तमसमंजसप्रलापिनं विना को नु अविपरीतः–सम्यग्वस्तुतत्त्ववेदी वदेद् ?, अपि तु नैवेत्यभिप्रायः ॥५१॥ अथैवं कुत इत्याह—

**जइविहु सम्मुप्पाओ कासइ दट्ठूण निण्हए हुज्जा। मिच्छत्तहयमईआ तहावि ते वज्जणिज्जा उ ॥५२॥**

यद्यपि निह्नवानपि दृष्ट्वा कस्यचित्सम्यग्दर्शनोत्पादो भवेत् तथापि ते मिथ्यात्वम्–अतत्त्वे तत्त्वाभिनिवेशस्तेन हता–दूषिता स्मृतिः–सर्वज्ञवचनसंस्कारलक्षणा दुर्वातेन शस्यवद् येषां ते मिथ्यात्वहतस्मृतिकाः, एवंविधाश्च बह्वीभिरसद्भावनोद्भावनाभिरस्तोकचेतांसि विपरिणामयन्तः पूर्वलब्धमपि बीजमात्मनोऽपरेषां चोपघ्नतो दूरं दूरेण वर्जनीया इति, यतश्चैवमतो नैते भावग्रामतया भवितुमर्हन्तीति प्रकृतम् ॥ ५२ ॥ इतिश्रीबृहत्कल्पभाष्यवृत्तौ द्वितीयखण्डे पत्रे २२६, द्वितीयखण्डसर्वपत्राणि ३५९ ॥ अत्र पुस्तकं पुरस्कृत्य ब्रुवाणस्य लुम्पकस्य स्वरूपमाह—

**पुत्थयमच्छइ भारं दाऊण य पुत्थयंपि सत्थहयं। कुव्वंतो निअअम्मं भज्जं कुज्जावि निल्लज्जो ॥५३॥**

पुस्तकमस्तके भारं दत्त्वा–सिद्धान्तपुस्तके तावदित्थमेव लिखितमतोऽस्माभिरेवमुच्यते इत्येवंरूपेण पुस्तके भारमारोप्य पुस्तकमपि शस्त्रहतं–शस्त्रेण हतमिव चैतन्यरहितमिव कुर्वन्–पुस्तकलिखितमुपेक्ष्य स्वेच्छया विपरीतं वदन् निर्लज्जो–लज्जारहितो, लज्जा हि मनुष्यधर्मस्तेन रहितः पशुरिव निजाम्बा–स्वमातरं भार्यां कुर्यात्, पशूनां हि बाल्यभावातिक्रमे जननीतरयोरविशेषस्तथाऽस्यापि संजातं, कथमन्यथा पुस्तकं शरणीकृत्य पुस्तकलिखिताद्विपरीतं भाषेतेतिगाथार्थः । ५३॥ अथ सिद्धान्ते किमस्ति ?, लुम्पकस्तु किं वदतीति ज्ञापनाय गाथायुग्ममाह—

सिद्धंतो सुत्ताइं वित्तिप्पमुहाइं नेव सिद्धंतो। जिणपूआइ अहम्मो आयरिअपरंपरा असुहा ॥५४॥
इच्चाइअ सिद्धंते कत्थवि नत्थेव किंतु विवरीअं। उभयं चिअ विवरीअं भासंतो भाससावि न किं ॥५५॥ युग्मं ॥

सूत्राणि—अङ्गोपाङ्गादीनि सिद्धान्तः, एवकारः सर्वत्र संबध्यते, केवलसूत्राण्येव सिद्धान्तः, वृत्तिप्रमुखाणि—वृत्तिनिर्युक्तिभाष्यादीनि सिद्धान्तो नैव—न भवत्येव, जिनपूजादि, आदिशब्दात् प्रासादादीनां परिग्रहः,च समुच्चये गम्यः, अधर्मो—धर्मो न भवत्येव, आचार्यपरम्परा चाशुभा—अनुचितैवेत्यादि सिद्धान्ते कुत्रापि—क्वापि नास्त्येव, किंतु विपरीतं, वृत्त्यादिसंयुक्तमेव सूत्रं सिद्धान्तोऽन्यथा मिथ्यात्वहेतुत्वान्मिथ्याश्रुतमेव, निर्युक्त्याद्यपि सिद्धान्त एव, जिनपूजादि धर्म एव, आचार्यपरम्परामन्तरेण धर्म एव न भवतीत्याद्युभयमपि विपरीतं भाषमाणः—यत् सिद्धान्ते विद्यते तन्नास्ति यच्च नास्ति तदस्तीति ब्रुवाणो लुम्पकः किं न भससात् ?, कालानुभावाद्भससान्न भवतीत्यर्थः, यच्चोभयविपरीतभाषणं तल्लुम्पकमतेऽग्रे तदुपदेशसिद्धान्तविचारावसरे स्वत एव व्यक्तीभविष्यतीति गाथायुग्मार्थः ॥५४-५५॥ अथ यदुक्तं भससादिति तत्र हेतावुक्तेऽपि हेत्वन्तरमाह—

जं लोइअलोउत्तरमग्गा भट्ठो उ उभयभट्ठत्ति। लोअववहारयज्झो वज्झो निअमेण तित्थावि ॥५६॥

लौकिकलोकोत्तरमार्गभ्रष्टो—लौकिकलोकोत्तरव्यवहारशून्य उभयभ्रष्टः—ऐहिकपारत्रिकसुखपरिभ्रष्ट इति—अमुना प्रकारेण लोकव्यवहारबाह्यः सन् तीर्थादपि नियमेन बाह्य एव, अयं भावः—लोकव्यवहारस्तावल्लोकविरुद्धकृत्यानां परिहारेणैव स्यात्, लोकविरुद्धकृत्यानि त्वस्य लुम्पकस्यालङ्कारभूतानि, यत आस्तां निन्दनीयकुलादिष्वनुचितान्नपानादिग्रहणं, ये माणकाद्याः प्राचीनवेषधरा आसन् ते बहिर्भूमौ गताः शौचाचारमपि चीवरखण्डैः प्रश्रवणपाषाणखण्डैश्च कृतवन्तः, अत एवाद्याप्यहो लुम्पकाः जुगुप्सनीयाः

पानीयशौचविरहिता अस्पृश्या इति कीर्त्तिपताका सर्वजनप्रतीता, एवं लोकव्यवहारबाह्यास्ते प्रवचनव्यवहारादप्यतिबाह्याः, नहि जैनप्रवचने किमपि तदस्ति यत्कस्यापि निन्दास्पदं स्यात्, ननु आधुनिका लुम्पकास्तु जलेनैव शौचाचारं कुर्वाणा दृश्यन्ते तत्कथमिति चेदुच्यते, भाणकादिजीर्णवेषधरापेक्षया;,आधुनिकास्तु केवलं लुम्पकमतीया द्रव्यलिङ्गिन एव बोध्याः, यत एतेषां शौचाचारो जलेनेति विचारो दूरे, वस्त्राण्यपि संप्रति तथा दृश्यन्ते यथा श्वेतवाससां द्रव्यलिङ्गिनामपि न भवन्ति, परं 'या कुप्रवृत्तिः प्रथमं प्रवृत्ते'ति वचनात्तद्वृद्धेभ्यः प्रथमप्रवृत्तेः कीर्त्तिस्सा तत्पितृभिरपि परार्कर्तुमशक्येतिगाथार्थः ॥२७॥ अथ पुस्तकधर्माङ्गीकारेऽपि लोकव्यवहारबाह्यत्वं दृष्टान्तेन समर्थयति—

**रायजुवरायपमुहा लिहिअं लहिऊण सेसघरसारं। परिवज्जंता कुसला किमेवमिह पुत्थया धम्मी?॥५७॥**

राजयुवराजप्रमुखाः लिखितं लब्ध्वा शेषगृहसारं त्यजन्तः किं कुशला भवन्ति?, राज्ञो युवराजस्यादिशब्दात् श्रेष्ठीभ्यादयो ग्राह्यास्तेषां च किंचिद्-वित्तादिकं क्वचिल्लिखितं भवति तल्लिखितं दृष्ट्वा राजादयस्तावन्मात्रं रक्षित्वा शेषं गृहसारं लिखनाभावादन्यायादागतं भविष्यतीति शङ्कया परित्यजन्तः किं कुशला-निपुणाः स्युः?, अपि न स्युः, एवं दृष्टान्तेन पुस्तकाद्धर्मी बोध्यः, नहि लोकेऽपि यावद्गृहोपस्करादिकं सर्वमपि लिखितमेव स्यात्, किंतु किञ्चित्तथाविधविवादोत्पत्तिशङ्कया विस्मृतिभीत्या वा लिखितं स्याद्, एवं धर्मशास्त्रेष्वपि बोध्यं, तथा च पुस्तकमात्रलिखितमङ्गीकृत्य शेषधर्मकृत्यं परिहरन् महामूर्खोऽवगन्तव्य इति गाथार्थः ॥५१॥ अथ सामान्यतो लिखनस्वरूपमाह—

**अणुभूआणं देसो भासाविसओऽवि तस्सवि अ देसो। लेहणविसओ हुज्जा लोइअववहारुदाहरणा ॥५८॥**

अनुभूतानां–स्पर्शादीन्द्रियजन्यज्ञानविषयीभूतानां पदार्थानां मध्ये देशः–तत्संबन्ध्येकदेशो भाषाविषयो भवति, नहि याव-दनुभूयते तावद्वक्तुं शक्यते इत्यर्थः, तस्यापि च–भाषाविषयस्यापि च देशो लिखनविषयो भवेत्, प्राकृतत्वादित्थं, यावद्भाष्यते तन्मध्यादेकदेशो लिखितुं शक्यते, लौकिकव्यवहारोदाहरणात्–लौकिकव्यवहारे–क्रयविक्रयादौ यावन्ति वचनानि येन प्रकारेणो-च्यन्ते न तावन्ति वचनानि तेन प्रकारेण लिख्यन्तेऽपि, किंतु तात्पर्यमात्रं पिण्डीकृत्य किंचिन्मात्रं लिख्यते, यथाऽमुकमेतावन्मात्रं त्वया देयं मया च लभ्यमिति, न पुनः पूर्वं त्वयेत्थं भणितं मया चेत्थं प्रत्युत्तरितमित्यादि, न चैतावता प्रागुक्तमनुक्तायते लभ्य-देयादि, तात्पर्यं तु पूर्वोक्तवचनैरेव संपन्नमिति प्रागुक्तमलिखितमपि प्रमाणमेव, तथैव वचनप्रवृत्त्या तात्पर्योत्पत्तेः, तथा वचन-प्रवृत्तिरपि तत्तद्व्यापारनिपुणानां कुलक्रमायातैव स्यात्, न पुनः क्वापि दस्तर्यादौ लिखिताऽपीति गाथार्थः ॥ ५८ ॥ अथ प्रकृते दार्ष्टान्तिकं योजयति—

एवं जिणणायाणं भासाविसओ अणंतमो भागो। तस्सवि अप्पो भागो रइओ अंगाइपमुहेसु ॥५९॥

एवं–प्रागुक्तदृष्टान्तेन जिनज्ञातानां पदार्थानामनन्ततमो भागो भाषाविषयो–गौतमादीनां पुरस्ताद्भाषिता येऽर्थास्ते ज्ञातानामनन्ततमोऽप्यंशोऽनन्तभागीकृतो बोध्यः, तस्याप्यल्पो भागोऽङ्गादिषु रचितः, सोऽपि प्रागुक्तयुक्त्या तात्पर्यभूत इतिगाथार्थः॥५९॥ अथ लिखिताक्षेपाणामर्थानां गतिमाह—

सेसा किरिआविसया आयारविही उ हुंति सूरिकमा। एवं जगववहारो दीसइ न उ लिहिअमित्तेणं ॥६०॥

लिखिताक्षेपा अर्थाः क्रियाविषया आचारविधयः सूरिक्रमाद्भवन्ति–आचार्यपरम्परया ज्ञायन्ते, यथा मुखवस्त्रिकां प्रतिलिख्य

द्वादशावर्त्तवन्दनकं ददातीत्यत्र कथं मुखवस्त्रिका प्रतिलिख्यते ? कथं चावर्त्ताकृतिर्विधीयते ?, नहि लिखितमात्रेण तदनुष्ठानविधिः सम्यग्विधातुं शक्यते, एवं जगद्व्यवहारोऽपि दृश्यते, नतु लिखितमात्रेणेति गाथार्थः ॥ ६० ॥ अथ लिखितमात्रेणापि कार्यसिद्धिर्भविष्यतीति पराशङ्कामपाकरोति—

भोअणविवाहमंडणगमणागमणाइसद्दमित्तेणं । जइ तव्विहाणणाणं सम्मं ता पुत्थया धम्मो ॥१३॥

भोजनविवाहमण्डनगमनागमनादिशब्दमात्रेण यदि सम्यग् तद्विधानं—भोजनादीनां विधिस्तस्य ज्ञानं भवेत् तर्हि पुस्तकात्सम्यग् धर्मो—धर्मविधिर्भवेद्, अयं भावः—देवदत्तेन भोजनं कृतमित्यत्र भोजनशब्देनानेन क्रमेण निष्पन्नमनेनैव च क्रमेण परिवेषितममुकेन संयोज्य वियोज्य चैतावद्भुक्तं त्यक्तं मधुरं लावणं सुस्वादं दुःस्वादं सुसंस्कृत सुनिष्पन्नं चेत्यादिविधिः सम्यग् परिज्ञायेत तदा पुस्तकाद्धर्मः सम्यग् ज्ञायेत, एवमनेन देवदत्तेन पुत्रादेर्विवाहः कृत इत्यत्र विवाहशब्देन यावद्यथाभूतविवाहादिसमग्रसामग्र्याः परिज्ञानं स्यात्, तथा देवदत्तो भूषणैरलङ्कृत इत्यत्रालङ्कारशब्देन व्यक्त्याऽलङ्कारनामपरिधानादिपरिज्ञानं स्यात्, तथा स देवदत्तो गत इत्यत्र गमनशब्देनोद्दिष्टदिग्ग्रामकार्यादीनां सर्वेषामपि सम्यक्परिज्ञानं स्याद्, एवमागमनेऽप्यादिशब्दात्प्रासादादीनां परिग्रहः, संप्रतिराज्ञा श्रीवीरप्रासादः कारित इत्यत्र संप्रतिराजव्यतिकरप्रासादकरणविधिव्यतिकरश्रीमहावीरव्यतिकरादीनां सम्यग्ज्ञानं स्यात् तदा केवलपुस्तकाद्धर्मविधिर्लभ्येत, तथा यथागमे साधुसेवनादिना सम्यक्त्वादि प्राप्तिर्भणिता न तथा क्वापि पुस्तकादपीत्यत्र बहु वक्तव्यं ग्रन्थविस्तरभयादनुक्तमप्यत्र स्वयमालोच्यमिति गाथार्थः ॥ ६१ ॥ अथ तत्पथप्राप्तिलक्षणस्य द्वितीयविचारस्य तात्पर्यमाह—

तम्हा जे उम्मग्गा लोए दीसंति तेसि पावयरो। मयमूलंकियमग्गो कडुअंकिअकडुअमग्गुव्व ॥६२॥

यस्माल्लुम्पकमते धर्मप्राप्तिर्नाचार्यपरम्परातो न वा पुस्तकात्, किंतु स्वतः, तस्मात् कारणाद् ये लोके उन्मार्गा दृश्यन्ते, तत्रोन्मार्गा द्विविधाः—लौकिका लोकोत्तराश्च, तत्र लौकिकाः शाक्यादीनां मार्गाः, लोकोत्तरास्तु दिगम्बरराकारक्तादिपाशपर्यन्तानामव्यक्तानां मार्गाः, तेषां मध्ये मतमूलाङ्कितमार्गाः पाशचन्द्रीयादयो बहवः सन्ति तथाप्यधिकारात् मतं तावत्प्रतिमोत्थापनाद्युपदेशमाश्रितं तस्य मूलं—लुम्पकलेखककृतेनाङ्कितः—चिह्नीकृतो मार्गो लुम्पकमार्गः, स च पापतरः—अतिशयेन पापभाग्, यद्यप्येतदपेक्षया तीर्थमत्यागत्वा राकारक्तादिपाशपर्यन्ताः पापीयांसः, केषांचिन्मुग्धानां तीर्थान्तर्वर्त्तिनामपि तीर्थमाम्यबुद्धिजनकत्वेन महापापहेतुत्वात्, तत्रापि तथाविधानुचितकुलादिष्वनुचितविधिनाऽनुचितान्नपानादिग्रहणादीनां नीरखण्डप्रश्रमणप्रस्तरादिभिरपि शौचाचारेण च तीर्थखिंसादिहेतुत्वाद्राकारक्तायपेक्षया प्रायः स्थूलधीधनानां प्रतीतिविषयत्वाच्च पापतर इति भणितं,ननु कथं तीर्थखिंसेति चेच्छृणु, मायो बहवो जनाः कथञ्चिद्वेषसाम्यं दृष्ट्वा अहो एतेऽपि जैना एतादृशा अनुचितप्रवृत्तिभाजस्तर्हि शेषा अप्यनुचितप्रवृत्तिभाज एव भविष्यंतीतिरूपेण तीर्थस्य महाशातनाहेतुरित्यभिप्रायेणैतदुक्तमिति बोध्यं, राकारक्तादयस्त्वेभ्योऽपि पापात्मानः, परं सूक्ष्मधीगम्या इत्यर्थः, लुम्पकः पापतरः किंवदिति दृष्टान्तमाह—'कडुअ'त्ति कडुकाङ्कितकडुकमार्गवत्—कडुकनामा गृहस्थस्तन्नामाङ्कितो यः कडुकमार्गः—संप्रति साधवो न दृक्पथमायान्तीति साधुनाशलक्षणस्तद्वत्,कडुकस्य हि साधुनिन्दायामनीदृशत्वेन लुम्पकवन्महापातकित्वं सर्वजनप्रतीतं स्थूलबुद्ध्याऽपि गम्यम्, अतः शेषकुपाक्षिकपरित्यागेनैष एव दृष्टान्तीकृत इतिगाथार्थः ॥६२॥ इति लुम्पकपथप्राप्तिस्वरूपं विचारितं ॥ अथ तस्योपदेशलक्षणं तृतीयं विचारणीयमाह—

**तस्सुवएसो जिणवरपडिमापूआसु जीववहणाई। जीवावि छव्विहा जिणपडिमापूआइ महपावं ॥६३॥**

तस्य—लुम्पकस्योपदेशस्तावत् जिनवरप्रतिमापूजासु जीवहननादिः स्यात्, जीवा अपि षड्विधास्तत्रेति गम्यं हन्यन्ते, तेन जिन-प्रतिमापूजादि महापापं भवतीतिगाथार्थः ॥६३॥ अथ लुम्पकः सिद्धान्तोक्तं दर्शयति—

**सव्वे पाणा भूआ जीवा सत्ता य णेव हंतव्वा। इअ सिद्धंते भणिअं तेणं तद्दंसणं पावं ॥ ६४ ॥**

सर्वे प्राणा भूता जीवाः सत्त्वाश्च नैव हन्तव्या इति सिद्धान्ते भणितं तेन तद्दर्शनं—प्रतिमादर्शनम्, अपि गम्यः, आस्तां पूजादिकं, षड्जीववधास्पदत्वात् प्रतिमादर्शनमपि पापमिति, अत एवास्य मते ह्युपदेशसारं मातृकापाठकल्पं शास्त्रं यथा—"से बेमि जे अतीता जे अ पडुप्पण्णा जे अ आगमिस्सा अरिहंता भगवंता ते सव्वे एवमाइक्खंति एवं भासंति एवं परूवेंति एवं पण्णवेंति सव्वे पाणा सव्वे भूआ सव्वे जीवा सव्वे सत्ता ण हंतव्वा न आणावेतव्वा (अज्जावेतव्वा) ण परिघेतव्वा ण परितावेअव्वा ण उवद्दवेतव्वा, एस धम्मे सुद्धे णितिए सासए समेच्च लोगं खेअण्णेहिं पवेतिते, तंजहा—उट्ठिएसु वा अणुट्ठिएसु वा उवट्ठिएसु अणुवट्ठिएसु वा उवरतदंडेसु वा अणुवरतदंडेसु वा सोवहिएसु वा अणोवहितेसु वा संजोगरतेसु वा असंजोगरतेसु, तच्चं चेतं तहा चेयं अस्सिं चेतं पवुच्चति, तं आइइत्तु ण णिहे ण णिक्खिवे जाणिउ धम्मं जथा तथा, दिट्ठेहिं णिव्वेतं गच्छेज्जा, णो लोगस्सेसणं चरे, जस्स णत्थि इमा णा(जा)ती अण्णा तस्स कुतो सिआ ?, दिट्ठं सुअं मयं विण्णायं जं एअं परिकहिज्जति समेमाणा पलेमाणा पुणो पुणो जातिं पकप्पेंति, अहो अ रातो अ जतमाणे धीरे सया आगयपण्णाणे, पमत्ते बहिआ पास, अप्पमत्ते सया परकमेज्जासित्ति बेमि" इति सम्यक्त्वाध्ययनस्य प्रथमोद्देशः। लुम्पकमात्रोऽप्येतावत्सूत्रं शुकपाठेन मुखे कृत्वा सर्वप्रवचनपरमार्थज्ञत्वमात्मनो मन्यमानोऽर्थं त्वतिमुखरतया

निजमुखविवरनिर्गतं प्रमाणमेव ब्रुवाणो मुग्धजनान् विप्रतारयति, अतस्तत्परमार्थपरिजिज्ञासुना तट्टीका विलोकनीया, सा चैवं-'से बेमी'त्यादि सूत्रं, गौतमस्वाम्याह-यथा सोऽहं योऽहं ब्रवीमि तीर्थकरवचनावगततत्त्वः श्रद्धेयवचन इति, यदिवा शौद्धोदनिशिष्याभिमतक्षणिकत्वव्युदासेनाह-येन मया पूर्वमभाणि सोऽहमद्यापि ब्रवीमि, नापरो, यदिवा सेशब्दस्तच्छब्दार्थे, यत् श्रद्धाने सम्यक्त्वं भवति तदहं तत्त्वं ब्रवीमि, येऽतीताः-अतिक्रान्ताः, ये च प्रत्युत्पन्नाः-वर्त्तमानकालभाविनो ये चागामिनस्ते एवं प्ररूपयन्तीति संबन्धः, तत्रातिक्रान्तास्तीर्थकृतः कालस्यानादित्वादनन्ता अतिक्रान्ताः, अनागता अप्यनन्ताः, आगामिकालस्यानन्तत्वात्, तेषां च सर्वदैव भावादिति, वर्त्तमानतीर्थकृतां प्रज्ञापकापेक्षितयाऽनवस्थितत्वे सत्यप्युत्कृष्टजघन्यपदिन एव कथ्यन्ते, तत्रोत्सर्गतः समयक्षेत्रसंभविनः सप्तत्युत्तरशतं, तच्चैवं-पञ्चस्वपि विदेहेषु प्रत्येकं द्वात्रिंशत्क्षेत्रात्मकत्वादेकैकस्मिन् द्वात्रिंशत् २, पञ्चस्वपि भरतेषु पञ्चस्वेवैरवतेष्वपीति, तत्र द्वात्रिंशत्पञ्चभिर्गुणिता षष्ठ्युत्तरं शतं, भरतैरावतदशप्रक्षेपेण सप्तत्यधिकं शतमिति, जघन्यतस्तु विंशतिः, सा चैवं-पञ्चस्वपि महाविदेहेषु महाविदेहान्तर्महानद्युभयतटसद्भावाचीर्थकृतां प्रत्येकं चत्वारः, तेऽपि पञ्चभिर्गुणिता विंशतिः, भरतैरावतयोरेकान्तसुषमादावभाव एवेति, अन्ये तु व्याचक्षते-मेरोः पूर्वापरविदेहयोरेकैकसद्भावान्महाविदेहे द्वावेव, ततः पञ्चस्वपि दशैवेति, तथा च ते आहुः-"सत्तरसयमुक्कोसं इअरे दस समयखित्तजिणमाणं। चोत्तीस पढमदीवे अणंतरद्धे अ ते दुगुणा ॥१॥" के इमे ?-अर्हन्तः-अर्हन्ति पूजासत्कारादिकमिति, तथा ऐश्वर्याद्युपेता भगवन्तः, ते सर्व एव परप्रश्नावसरे एवमाचक्षते, यदुत्तरत्र वक्ष्यते, वर्त्तमाननिर्देशस्योपलक्षणार्थत्वादिदमपि द्रष्टव्यम्-एवमाचचक्षिरे एवमाख्यास्यन्ति, एवं सामान्यतः सदेवमनुजायां पर्षदि अर्द्धमागधया सर्वसत्त्वस्वभाषानुगामिन्या भाषया भाषन्ते, एवं प्रकर्षेण संशीत्यपानादायान्तेवासिनो जीवाजीवाश्रवबन्धसंवरनिर्जे-

रामोक्षपदार्थान् ज्ञापयन्ति प्रज्ञापयन्ति, एवं 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः, मिथ्यात्वाविरतिप्रमादकषाययोगा बन्धहेतवः, स्वपरभावेन सदसती, तत्त्वं सामान्यविशेपात्मक'मित्यादिना प्रकारेण प्ररूपयन्ति,एकार्थिकानि चैतानीति,किं तदेवमाचक्षते इति दर्शयति-यथा सर्वे प्राणाः-पृथिव्यप्तेजोवायुवनस्पतयः द्वित्रिचतुःपञ्चेन्द्रियाश्चेन्द्रियबलोच्छ्वासनिश्वासायुष्कलक्षणप्राणधारणात्प्राणाः तथा सर्वाणि भवन्ति भविष्यन्त्यभूवन्निति च भूतानि-चतुर्दश भूतग्रामान्तःपातीनि, एवं सर्वे एव जीवन्ति जीविष्यन्ति अजीविषुरिति जीवाः-नारकतिर्यग्नरामरलक्षणाश्चतुर्गतिकाः, तथा सर्वे एव स्वकृतसातासातोदयसुखदुःखभाजः सत्त्वाः, एकार्था चैते शब्दास्तत्त्वभेदपर्यायैः प्रतिपादनमितिकृत्वेति, एते च सर्वेऽपि प्राणिनः पर्यायशब्दाभिहिता न हन्तव्याः दण्डकशादिभिः नाज्ञापयितव्याः प्रसह्याभियोगदानतः न प्रतिग्राह्याः भृत्यदासादिममत्वपरिग्रहतः न परितापयितव्या इति शारीरमानसपीडोत्पादनतः नोपद्रावयितव्याः प्राणव्यपरोपणतः एषः-अनन्तरोक्तो धर्मो दुर्गत्यर्गलासुगतिसोपानदेश्यः, अस्य च प्रधानपुरुषार्थत्वाद्विशेषणं दर्शयति-शुद्धः-पापानुबन्धरहितः,न शाक्यधिग्जातीयानामिवैकेन्द्रियपञ्चेन्द्रियवधानुमतिकलङ्काङ्कितः,तथा नित्यः-अप्रच्युतिरूपः, पञ्चस्वपि विदेहेषु सदा भवनात्, तथा शाश्वतः शाश्वतगतिहेतुत्वाद्, यदिवा नित्यत्वाच्छाश्वतः, नतु नित्यं भूत्वा न भवति, भव्यत्ववद्, अभूत्वा च नित्यं भवति घटाभाववदिति, अयं तु त्रिकालावस्थायीति, अमुं च लोकं-जन्तुलोकं दुःखसागरावगाढं समेत्य-ज्ञात्वा तदुत्तरणाय खेदज्ञैः-जन्तुदुःखपरिच्छेत्तृभिः प्रवेदितः-प्रतिपादित इत्येतच्च गौतमस्वामी स्वमनीषिकापरिहारेण शिष्यमतिस्थैर्यार्थं बभाषे, एनमेव सूत्रोक्तमर्थं निर्युक्तिकारः सूत्रस्पर्शकेन गाथाद्वयेन दर्शयति-"जे जिणवरा अतीता जे संपइ जे अणागए काले। सव्वेऽवि ते अहिंसं वदिंसु वदिहिंति अ वयंति॥१॥ छप्पिअ जीवनिकाया णोऽवि हणे णोऽविअ हणावेज्जा। णोऽविअ अणु-

मण्णेआ सम्मत्तस्सेस निज्जुत्ती ॥२॥" इति गाथाद्वयमपि कण्ठ्यं, तीर्थकरोपदेशश्च परोपकारितया तथास्वाभाव्यादेव प्रवर्त्तमानो भास्करोदय इव प्रबोध्यविशेषनिरपेक्षतया प्रवर्त्तते, 'तद्यथे'त्यादिना दर्शयति, 'तंजहा उट्ठिएसु वा' इत्यादि, धर्मचरणायोद्यताः उत्थिताः-ज्ञानदर्शनचारित्रोद्योगवन्तस्तद्विपर्ययेणानुत्थितास्तेषु निमित्तभूतेषु, तानुद्दिश्य भगवता सर्ववेदिना त्रिजगत्पतिना धर्मः प्रवेदितः, एवं सर्वत्र लगयितव्यं, यदिवोत्थितानुत्थितेषु-द्रव्यतो निषण्णानिषण्णेषु, तत्रैकादशसु गणधरेषूत्थितेष्वेव वीरवर्द्धमानस्वामिना धर्मः प्रवेदितः,तथोपस्थिताः-धर्मशुश्रूषवो जिघृक्षवो वा तद्विपर्ययेणानुपस्थितास्तेष्विति निमित्तसप्तमी चेयं,यथा चर्मणि द्वीपिनं हन्तीति, ननु च भावोपस्थितेषु चिलातिपुत्रादिष्विव धर्मकथा युक्तिमती, अनुपस्थितेषु तु कं गुणं पुष्णाति ?, अनुपस्थितेष्वपीन्द्रनागादिषु विचित्रत्वात्कर्मपरिणतेः क्षयोपशमापादनाद्गुणवत्त्वेवेति यत्किंचिदेतत्, प्राणिनं आत्मानं वा दण्डयतीति दण्डः, स च मनोवाक्कायलक्षणः, उपरतो दण्डो येषां ते तथा, तद्विपर्ययेणानुपरतदण्डास्तेषूभयरूपेष्वपि, तत्रोपरतदण्डेषु तत्स्थैर्यगुणान्तराधानार्थं देशना, इतरेषु तूपरतदण्डत्वार्थमिति, उपधीयते-संगृह्यते इत्युपधिः द्रव्यतो हिरण्यादिर्भावतो माया, सहोपधिना वर्तते इति सोपधिकास्तद्विपर्ययेणानुपधिकास्तेष्विति, संयोगः-संबन्धः पुत्रकलत्रमित्रादिजनितस्तत्र रताः संयोगरताः तद्विपर्ययेणैकत्वभावनाभाविता असंयोगरतास्तेष्विति, तदेवमुभयरूपेष्वपि यद्भगवता धर्मदेशनाऽकारि तत्तथ्यं सत्यमेतदिति, चशब्दो नियमार्थः, तथ्यमेवैतद्भगवद्वचनं, यथाप्ररूपितवस्तुसद्भावात् तथ्यता वचसो भवतीत्यतो वाच्यमपि तथैवेति दर्शयति, तथा चैतद्वस्तु यथा भगवान् जगाद, यथा सर्वे प्राणा न हन्तव्या इत्यादि, एवं सम्यग्दर्शनं-श्रद्धानं विधेयम्, एतच्चास्मिन्नेव-मौनीन्द्रप्रवचने सम्यग्मोक्षमार्गाभिधायिनि समस्तदम्भप्रपञ्चोपरते प्रकर्षेणोच्यते इति, न तु यथाऽन्यत्र न हिंस्यात्सर्वभूतानीत्यभिधायान्यत्र वाक्ये यज्ञ-

पशुवधाभ्यनुज्ञानात्पूर्वोत्तरं बाधेति, तदेवं सम्यक्त्वस्वरूपमभिधाय तदवाप्तौ च यद्विधेयं तद्दर्शयितुमाह–'तं आइत्तु न निहे' इत्यादि, तत्–तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमादाय–गृहीत्वा तत्कार्यकरणतो 'न निहे'त्ति न गोपयेत्, तथाविधसंसर्गादिनिमित्तोत्थापित-मिथ्यात्वोऽपि जीवसामर्थ्यगुणान्न त्यजेदपि, यथा वा शैवशाक्यादीनां गृहीत्वा व्रतानि पुनरपि व्रतेश्वरयागादिविधिना गुरुसमीपे निक्षिप्योत्प्रव्रजनमेवं गुर्वादेः सकाशादवाप्य सम्यग्दर्शनं न निक्षिपेत्–न त्यजेत्, किं कृत्वा ?–यथा तथाऽवस्थितं धर्मं ज्ञात्वा–श्रुतचारित्रधर्मात्मकमवगम्य, वस्तूनां वा धर्मं–स्वभावमवबुद्ध्येति, तदवगमे तु किं चापरं कुर्यादित्याह–'दिट्ठेही'त्यादि, दृष्टैरि-ष्टानिष्टरूपैर्निर्वेदं गच्छेद्, विरागं कुर्यादित्यर्थः, तथाहि–शब्दैः श्रुतै रसैरास्वादितैर्गन्धैराघ्रातैः स्पर्शैः स्पृष्टैः सद्भिरेवं भावयेद्, यथा शुभेतरता परिणामवशाद्भवतीत्यतः कस्तेषु रागो द्वेषो वेति, किंच "णो लोगस्स" इत्यादि, लोकस्य–प्राणिगणस्यैषणा–अन्वेषणा इष्टेषु शब्दादिषु प्रवृत्तिरनिष्टेषु हेयबुद्धिस्तां न चरेत्–न विदध्यात्, यस्य चैषा लोकैषणा नास्ति तस्यान्याऽप्यप्रशस्ता मतिर्नास्तीति दर्शयति–"जस्स नत्थि" इत्यादि, यस्य मुमुक्षोरिमा ज्ञातिः–लोकैषणाबुद्धिर्नास्ति–न विद्यते तस्यान्या–सावद्यारम्भप्रवृत्तिः कुतः स्याद् ?, इदमुक्तं भवति–भोगेच्छारूपां लोकैषणां परिजिहीर्षोर्नैव सावद्यानुष्ठानप्रवृत्तिरुपजायते, तदर्थत्वात्तस्या इति, यदिवेयमनन्त-रोक्तत्वात् प्रत्यक्षा सम्यक्त्वज्ञातिः प्राणिनो न हन्तव्या इति वा यस्य न विद्यते तस्यान्या विवेकिनी बुद्धिः–कुमार्गसावद्यानुष्ठानप-रिहारद्वारेण कुतः स्यात् ?, शिष्यमतिस्थैर्यार्थमाह–'दिट्ठ'मित्यादि, यदेतन्मया परिकथ्यते तत्सर्वज्ञैः केवलज्ञानावलोकेन दृष्टं, तच्छु-श्रूषुभिः श्रुतं, लघुकर्मणां भव्यानां मतं, ज्ञानावरणीयक्षयोपशमवशाद्विशेषेण ज्ञातं विज्ञातम्, अतो भवतापि सम्यक्त्वादिके मत्क-थिते यत्नवता भवितव्यमिति, ये पुनर्यथोक्तकारिणो न स्युस्ते कथंभूता भवेयुरित्याह–"समेमाणा" इत्यादि, तस्मिन्नेव–मनुष्या-

दिजन्मनि शाम्यन्तो-गार्ध्येनात्यर्थमासेवां कुर्वन्तः, तथा प्रलीयमानाः-मनोज्ञेन्द्रियार्थेषु पौनःपुन्येनैकेन्द्रियद्वीन्द्रियादिकां जातिं प्रकल्पयन्ति, संसाराविच्छित्तिं विदधतीत्यर्थः, यद्येवमविदितवेद्याः साम्प्रतेक्षिणो यथाजन्मकृतरतयः इन्द्रियार्थेषु प्रलीनाः पौनः-पुन्येन जन्मादिकृतसंधाना जन्तवस्ततः किं कर्त्तव्यमित्याह-'अहो अ'इत्यादि, अहश्च रात्रिं च यतमान एव-यत्नवानेव मोक्षाध्वनि धीरः-परीषहोपसर्गाक्षोभ्यः सदा-सर्वकालमागतं-स्वीकृतं प्रज्ञानं-सदसद्विवेको यस्य स तथा प्रमत्तान् असंयतान् परतीर्थिकान् वा धर्माद्बहिर्व्यवस्थितान् पश्य, तांश्च तथाभूतान् दृष्ट्वा किं कुर्यादित्याह-"अप्पमत्ते" इत्यादि, अप्रमत्तः सन् निद्राविकथादिप्रमादरहितोऽक्षिनिमिषोन्मेषादावपि सदोपयुक्तः पराक्रमेथाः कर्मरिपून् मोक्षाध्वनि वा, इतिः-अधिकारसमाप्तौ, ब्रवीमीति पूर्ववत्। सम्यक्त्वाध्ययने प्रथमोद्देशटीका समाप्ता॥ तथा "केआवंती लोअंसि समणा वा माहणा वा पुढो विवायं वयंति से दिट्ठं च णे सुअं च णे मयं च णे विण्णायं च णे उड्ढं अहं तिरिअं दिसासु सव्वओ सुपडिलेहिअं च णे सव्वे पाणा सव्वे जीवा सव्वे भुआ सव्वे सत्ता हंतव्वा अज्जावेअव्वा परिआवेअव्वा परिघित्तव्वा उद्दवेअव्वा इत्थवि जाणह नत्थित्थ दोसो, अणायरिअवयणमेअं, तत्थ जे आयरिआ ते एवं वयासी से दुद्दिट्ठं च भे दुस्सुअं च भे दुम्मयं च भे दुव्विण्णायं च उड्ढं अहं तिरिअं दिसासु सव्वओ दुप्पडिलेहिअं च भे जं णं तुब्भे एवं आइक्खह एवं भासह एवं पण्णवेह एवं परूवेह सव्वे पाणा ४ हंतव्वा इत्यादि यावत् वयं पुण एवमाइक्खामो इत्यादि यावत् न हंतव्वा'इत्यादि श्रीआ० सम्य० उ० २ (८-१३४) एतद्वृत्त्येकदेशो यथा 'केआवंती'ति केचन लोके-मनुष्यलोके श्रमणाः-पाखण्डिका ब्राह्मणा-द्विजातयः पृथक् २ विरुद्धो वादो विवादः तं वदन्ति, एतदुक्तं भवतीत्यादि यावन्मतम्-अभिमतं युक्तियुक्तत्वादस्माकमस्मत्तीर्थकराणां वा इत्यादि यावत् सर्वे प्राणाः सर्वे जीवाः सर्वे भूता

सर्वे सत्त्वा हंतव्या इत्यादि श्री आचा० सम्य० उ० अत्रान्यतीर्थिका मिथ्यादृशो,न हिंस्यात् सर्वभूतानीति भणित्वाऽपि तत्रैव तन्त्रे षट् शतानि नियुज्यन्ते, पशूनां मध्यमेऽहनि। अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभि ॥१॥'रित्यादि संख्यापुरस्सरपशुवधानुज्ञापरा विरोधवादिनो यथा वर्त्तन्ते न तथाऽर्हन्तो भगवन्तोऽपीत्याद्यर्थज्ञापकमिदं सूत्रं, न पुनर्जिनपूजादिप्रतिषेधकं, तद्वाचकशब्दगन्धस्याप्यनुपलब्धेः, प्रत्युतेदमेव सूत्रं जिनेन्द्रपूजाव्यवस्थापकं, तथाहि–'खेअण्णेहिं पवेइअ'तिपदेन श्रीगौतमस्वाम्यपि स्वमनीषिकापरिहारेण पारतन्त्र्यमेव दर्शितवान्, आस्तामन्यः, सर्वसम्मतः सर्वोत्कृष्टः सन्नपि भगवान् श्रीमहावीरः स्वसमानसर्वोत्कृष्टपुरुषसम्मत्यैव भणितवान्–अन्यैरपि जिनेन्द्रैरित्थमेवोक्तमित्यागमे प्रतीतमेव, तथैव सर्वेषामुपादेयत्वं स्यात्, नान्यथा, तथा चैतत्सूत्रमपि स्वमत्या न व्याख्येयं, किंतु श्रीसुधर्मस्वामितोऽच्छिन्नपरम्परागतमेव व्याख्यानं कर्त्तव्यं, तच्चैवं 'से बेमी'त्यादौ अर्हत इति सामान्यतो यदभिधानं तत्क्रियोपाधिकं, यथा पचतीतिपाचकः पठतीति पाठकः कुम्भं करोतीति कुम्भकार इत्यादिनामानि क्रियोपाधिकानि तथेदमपि वक्तव्यं, तत्रार्हन्ति पूजासत्कारादिकमित्यर्हन्तः, यदागमः–"अरिहंति वंदणनमंसणाइं अरिहंति पूअसक्कारं। सिद्धिगमणं च अरिहा अरिहंता तेण वुच्चंति॥१॥त्ति (आव० ९२१) यद्वा अर्हन्ति शक्रादिसुरादिकृतां पूजामित्यर्हन्तः, यदागमः-"देवासुरमणुएसुं अरिहा पूआ सुरुत्तमा जम्हा। अरिणो हंतारयं हंता अरिहंता तेण वुच्चंति॥१॥त्ति(आ०९२२) पूजादियोगादेव क्रियोपाधिकं नाम संभवतीति, अन्यथा अर्हन्त इति नाम्नोऽप्यसंभवाद्, एवं नामव्युत्पत्त्यैव पूजायाः सिद्धत्वात् कथं तत्पराकरणार्थमेतत्सूत्रसद्भूपोप्यते, न च सा पूजा भावरूपा भविष्यतीति शङ्कनीयं, द्रव्यपूजापूर्वकत्वाद्भावपूजायाः,'द्रव्यं हि भावकारण"मितिवचनात्, न च साधूनां हि भावपूजा द्रव्यपूजापूर्विका न संभवतीति शङ्कनीयम्, उपदेशानुमोदनयोर्द्रव्यपूजयोः साधूनामपि

विद्यमानत्वात्, एतच्च तृतीयविश्रामे किंचिद्दर्शितमिति बोध्यं, किंच–वस्तुगत्या श्रावकधर्ममात्रो द्रव्यस्तवः, साधुधर्मस्तु भावस्तवः, स च श्रावकधर्मपूर्वक एव, केवलभावस्तवस्याङ्गीकारे श्रावकधर्मस्याप्युच्छेदापत्तेः, किंच–यो हि भावपूजाविषयः स च नियमात् द्रव्यपूजाविषयो, नान्यो, द्रव्यपूजाविषयत्वाभावे भावपूजाया अप्यविषयत्वात्, मिथ्यादृक्सुरवत्, ननु सिद्धानां द्रव्यपूजाविषयत्वाभावेऽपि भावपूजाविषयत्वमेवास्तीति चेन्मैवं, तेषामप्यर्हतामिव नामादिभिश्चातुर्विध्यात्स्थापनादिरूपाणां सिद्धानां पुष्पादिभिर्द्रव्यपूजाया अध्यक्षसिद्धत्वात्, न च भावसिद्धानां तथाविधद्रव्यपूजाया असंभवे किंचिद्बाधकम्, अर्हतामपि भावार्हत्त्वमुत्कर्षतोऽपि पूर्वलक्षणप्रमाणं,ततः पश्चात्तथा पूजाया अभावात् त्वदाशङ्कितबाधकस्यानिवार्यत्वात्, तस्मादाराध्यस्यापि भावरूपस्य पुष्पादिना द्रव्यपूजा पूज्यपूजकयोः साक्षात्संबन्धे सत्येव स्यात्, स च जगत्स्थित्या भावसिद्धानामसंभव्येव, भावार्हतामपि कदाचित्क एव, न सार्वदिकः, स्थापनार्हतस्तु पूजकसामर्थ्यसाध्यत्वात्प्रायो भवत्येव, तेन स्थापनार्हतः पूजा बलीयसी, सा च सिद्धानामप्यविरुद्धेति सिद्धं द्रव्यपूजायोग्यस्यैव भावपूजायोग्यत्वं, यद्यपि भावस्य प्राधान्यं प्रवचनेऽभिहितं तथापि द्रव्यसापेक्षमेव तद् बोध्यं, यथा शरीरमध्ये हस्तपादाद्यङ्गापेक्षया मस्तकस्यैवोत्तमाङ्गत्वं शेषावयवसापेक्षमेव दृष्टं, नहि हस्तपादकण्ठादिभ्यः पृथग्भूतस्यापीत्यग्रे दर्शयिष्यते, अन्यथा साधुदानादिष्वपि द्रव्यदाननिरपेक्षस्यैव भावदानस्य प्राधान्येऽन्नपानादिद्रव्यदानस्याकिञ्चित्करत्वापत्त्या प्रवचने लौकिकमार्गे च वाचामगोचरमसमञ्जसमापद्येत, तच्च तवाप्यनिष्टं, किंच–द्रव्यदाननिरपेक्षभावदानस्य प्राधान्यं तवाभिमतमङ्गीकृत्य प्रवर्त्तमानेषु त्वद्भक्तेष्वस्माकं तुष्टिरेव, विनौषधेनापि व्याधिनाशात्, किंच–भावपूजायां यदि प्राधान्यं तवाभिमतं तर्हि द्रव्यपूजाऽप्यवश्यमभिमतैव, प्राधान्यं हि स्वजातीयेषु कथञ्चिद्गुणाधिक्यं, यथा जिनेषु तीर्थकृतां जिनप्राधान्यं, न चैतावता सामान्यकेवलिनामना-

राध्यत्वं संपन्नम्, एवं पूजायामपि भावपूजापेक्षया द्रव्यपूजाया अप्राधान्येऽपि कर्त्तव्यता त्ववश्यमापन्नैव, किंच–प्राधान्यं हि किञ्चिदपेक्षया स्याद्, यथोपाध्यायापेक्षयाऽऽचार्यस्य प्राधान्यं, तथा चोपाध्यायवद् द्रव्यपूजाऽपीति, तस्माज्जिनेन्द्रैर्धर्मो द्विविधः प्रज्ञप्तः–श्रावकधर्मः साधुधर्मश्च, यदागमः–"दुविहे धम्मे पं०, तं०–अगारधम्मे अणगारधम्मे अ"त्ति(१०–७२) तथा "दो चेव जिणवरेहिं जाइजरामरणविप्पमुक्केहिं। लोगंमि पहा भणिआ सुस्समणसुसावगो वावि॥१॥"त्ति (४९१ उप.) तत्र श्रावकधर्मात्साधुधर्मावाप्तिस्ततो मोक्ष इति श्रावकधर्मः साधुधर्मद्वारा मोक्षकारणं, साधुधर्मस्तु साक्षादिति श्रावकधर्मापेक्षया साधुधर्मस्य प्राधान्येऽपि साधुधर्माशक्तस्यैव श्रावकधर्मानुज्ञा, यदागमः–"भावच्चणमुग्गविहारया य दव्वच्चणं तु जिणपूआ। भावच्चणाओ भट्ठो हविज्ज दव्वच्चणुज्जुत्तो॥१॥"त्ति(४९२ उप.) अत्र 'दो चेवे'त्यादिगाथया सहास्याः व्याख्यानं त्वेवं–द्वावेव जिनवरैर्जातिजरामरणविप्रमुक्तैर्लोके पन्थानौ भणितौ, यदुत सुश्रमणः स्यादित्येको मार्गः, सुश्रावको भवेदिति द्वितीयः, संविग्नपाक्षिकमार्गोऽप्यस्ति, केवलमसावप्यनयोरेवान्तर्भूतो द्रष्टव्यः, सन्मार्गोपबृंहकत्वेन तन्मध्यपातित्वाविरोधादिति, एतावेव मार्गौ भावार्चनद्रव्यार्चनशब्दाभिधेयावित्याह–'भावच्चण'त्ति भावार्चनं–तात्त्विकपूजनं भगवतां, किम्?–उग्रविहारता, चशब्दस्यावधारणार्थत्वादुद्यतविहारतैव, द्रव्यार्चनं–भावार्चनापेक्षया अप्रधानपूजनमेव, तुशब्दोऽवधारणे, किं?–जिनपूजा–माल्यादिभिर्भगवद्बिम्बार्चनं, तत्र भावार्चनाद् भ्रष्टः, तथा शक्तिविकलतया तत्कर्तुमशक्त इत्यर्थः, भवेत्–जायेत द्रव्यार्चनोद्युक्तः–तत्परः, तस्यापि पुण्यानुबन्धिपुण्यहेतुतया पारम्पर्येण भावार्चनहेतुत्वादिति, प्राधान्यमपि ह्रस्वत्वदीर्घत्वादिवत्सापेक्षमितिकृत्वा श्रावककृत्येष्वपि प्राधान्यं शेषानुष्ठानापेक्षया प्रासादादिविधापनादेरिव, अन्यथा एतावेव मार्गौ भावार्चनद्रव्यार्चनशब्दाभिधेयावेवेति लापकनिय। 'भावच्चणे'त्यादिगाथायां द्रव्यार्चनं जिनपूजामाल्यादि-

भिर्भगवद्बिम्बार्चनमिति न व्याख्यास्यत्, तथा व्याख्याने च तस्य मुख्यत्वमेव, मुख्ये हि भणिते शेषा गौणधर्माः स्वत एवोप-
लक्षणात्सिद्ध्यन्ति, यथा राजा गच्छतीत्युक्तेऽनुक्ता अपि पदात्यादयः परिकरभूता नरादयः, ननु भवद्भिः प्रासादादिविधापनादेः
प्राधान्यं भणितं 'भावचणे'त्यागमे च माल्यादिभिर्भगवद्बिम्बार्चनमित्युक्तं तत्कथमिव संगतिरिति चेदुच्यते, प्रासादादिविधापनं
विना बिम्बार्चनस्यैवासंभवात्तद्विधापनमनुक्तमपि व्यापकाभावेन सिद्धमिति नासंगतिगन्धोऽपि, अत एव श्रावकधर्मकृत्येष्वपि प्रासा-
दविधापनस्यैव साधुधर्मप्रत्यासन्नत्वमभाणि, यदस्माण्यागमे—"कंचणमणिसोवाणं थंभसहस्सूसिअं सुवण्णतलं । जो कारिज्ज जिणहरं
तओवि तवसंजमो अहिओ ॥१॥" त्ति(४९४ उप.)अस्या व्याख्यानं—काञ्चनं—सुवर्णं मणयः—चन्द्रकान्ताद्यास्तत्प्रधानानि सोपानानि
यस्मिंस्तत्तथा, स्तम्भसहस्रोच्छ्रितम्,अनेन विस्तीर्णतामुद्भावयति, सुवर्णप्रधानं तलं यस्य तत्तथा,सर्वसौवर्णिकमित्यर्थः,यः कारयेत्—नि-
र्म्मापयेत् जिनगृहं—भगवद्भवनं ततोऽपि—तथाविधजिनगृहकारणादपि, अप्यास्तामन्यस्मात्, तपःसंयमोऽधिकः—समर्गलतरः, तत
एव मोक्षावाप्तेरिति, यत एवं तस्मात् सति सामर्थ्ये भावार्चने यतितव्यमिति । अत्र आस्तामन्यत् सति सामर्थ्ये भावार्चने यतितव्य-
मिति भणनेन श्रावकधर्मानुष्ठानेपूक्तलक्षणप्रासादविधापनाच्छेपकृत्यानां न्यूनत्वमेव सूचितं, यथा 'पीयूषादपि मधुरा वाणी ते वर्ण्यते
जिनामर्त्यै'रित्यत्र यावन्ति जगदुदरवर्त्तीनि शर्कराप्रभृतीनि वस्तूनि तान्यतिक्रम्यैवामृते माधुर्यं, न पुनस्तेभ्यो न्यूनम्, अन्यथा
तदपेक्षयाऽपि यदधिकतरं मधुरं भवेत्तस्यैव तथावक्तुमुचितत्वात्, नहि कोऽपि सर्षपात्सुमेरुर्महानिति वचःप्रपञ्चेन सुमेरुं गरिमाण-
मारोहयन्ति, किंतु सर्षपसुमेर्वोरन्तरालवर्त्तिनः क्रमेण प्रवर्द्धमानपरिमाणा बदरामलकनालिकेरादयो निषधनीलवन्मेरुपर्यन्तास्तेष्वपि
सर्वोत्कृष्टपरिमाणः सुमेरुप्रत्यासन्नो धातकीखण्डगतो मेरुर्भवति, मेरोरपि सुमेरुर्महानित्युक्ते सुमेरोर्गरिमा, न पुनर्निषधादपि

सुमेरुर्महानित्युक्ते तस्य महत्त्वाधिक्यमाहात्म्यं स्यात्, निषधादपि मेर्वादयोऽन्येऽपि महान्तः सन्ति, तथा च निषधादिमेरुपर्यन्ताना-मन्तरालवर्त्तित्वमप्यस्य संपद्येतेति सुमेरुर्मेरोरपि लघीयान् भवन् केन वार्यते ?, एतेन प्रासादादिनिर्मापणापेक्षया सामायिकपौष-धादिधर्मानुष्ठानं महानिर्जरहेतुरिति पराशङ्कापि व्युदस्ता, तथाविधप्रासादादिनिर्मापणादपि पौषधाद्यनुष्ठानस्य शोभनत्वे निरन्तरं यावज्जीवावधिकशुद्धपौषधानुष्ठानादपि चरित्रमधिकमित्येवं वक्तुमुचितत्वाद्, अन्यथा प्रासादनिर्मापणपौषधान्तरालवर्त्तिधर्मत्वापत्त्या तथाविधपौषधधर्मादपि साधुधर्मस्य न्यूनत्वाशङ्का दुर्निवारैव, यत्तु सामायिकपौषधाद्यपि 'तओवि तवसंजमो अहिउ'त्ति पदेनोपा-त्तमेव तत्र, तत एव मोक्षावाप्तेरिति, यत एवं तस्मात्सति सामर्थ्ये भावार्चने यतितव्यमिति व्याख्यानादधिकारस्यापि तथैव प्राप्त-त्वाच्छ्रीमहानिशीथेऽपि तथाविधप्रासादादिविधानादुत्कर्षतोऽप्यच्युत उपपातः तपःसंयमाच्च मोक्षावाप्तिरिति भणितत्वाच्च यस्तपः-संयमः साधुसंबन्धी स एव ग्राह्यो, न पुनः श्रावकसंबन्ध्यपि, तस्य सामायिकादप्यारम्भकलुषिताध्यवसायस्यानपायात्, यतः स कृतसामायिकोऽप्युद्दिष्टकृतं भुङ्क्ते, यदागमः-"कडसामइओवि उद्दिट्ठकडंपि से भुंजे" इतिश्रीनिशीथचूर्णौ,तेन वस्तुगत्या सामा-यिकाद्यनुष्ठानं जिनार्चनातो न भिद्यते, सर्वत्राप्यारम्भपरिग्रहकलुषिताध्यवसायस्य समानत्वाद्, अत एव श्रावकसंबन्धिधर्मानुष्ठान-मात्रस्यापि द्रव्यस्तवत्वमेव, यत्तु क्वापि सामायिकपौषधाद्यनुष्ठानं भावस्तवत्वेन भणितं तत्रापि सम्मतितया "कंचणमणिसोवाण"-मित्याद्युपदेशमालासंबन्धिनी गाथैव दर्शिता, तद्विचारणीयमस्तीति बोध्यं, यद्वा कथंचिद् बाह्यवृत्त्या साध्वनुकृतिमात्रेण तद्भणितं संभाव्यते, यथा सुवर्णरसरसिता रूप्यमुद्रिकाऽपि सोवणीत्ति भण्यते, तदनुकृत्याकृत्यादिमत्त्वात्, ननु श्रावकधर्मानुष्ठानमात्र-स्यापि द्रव्यस्तवत्वेन समानत्वे सत्यपि कृतसामायिकादिः सुश्रावकः पुष्पादिभिर्जिनपूजां न करोतीत्यतो ज्ञायते जिनपूजातः सामा-

स्तवयोः प्राधान्या-प्राधान्ये

यिकादि निरवद्यानुष्ठानं शोभनमितिचेन्मैवं, जिनाज्ञाया एव प्राधान्यात्, नहि प्रतिलेखनादिक्रियापरायणैरपि जिनकल्पिकैर्महा-निर्जराहेतुत्वेन भणितमप्याचार्यादिवैयावृत्त्यं गच्छनिश्रादिकं च परिहृतमतः प्रतिलेखनादिक्रियापेक्षया तदशोभनं, न वा तत्परि-हृत्य प्रतिलेखनादिक्रियास्वेव यतितव्यं धर्मोपदेशादिपरिहारेण, तीर्थस्याप्युच्छेदापत्तेः, नन्वाद्यथा जिनकल्पिकानधिकृत्यैव वैया-वृत्त्यादिनिषेधस्तथा कृतसामायिकादिकमधिकृत्यैव पुष्पादिना जिनपूजानिषेधस्तथैव जिनाज्ञायाः, अत एव यथोचितकालादिकम-धिकृत्य यथोचितसामायिकपूजादिक्रियाः कुर्वाण एव जिनाज्ञाराधको भवति, न पुनर्यथाशक्ति कालक्रमादिविपर्ययेण कुर्वाणो-ऽकुर्वाणो वा जिनाज्ञाराधकः संभवेद्, अयं भावः-नहि जिनकल्पिकपरिहृतत्वेन गच्छवासाचार्यादिवैयावृत्त्यधर्मोपदेशादिकमुपेक्ष-णीयं, न वा दशपूर्वधराद्यनादृतत्वेन जिनकल्पोऽप्युपेक्षणीयः, उभयोरपि जिनाज्ञायामेव वर्त्तित्वाद्, यदागमः-"जोवि दुवत्थ तिवत्थो एगेण अचेलगोऽवि संचरइ। नहु ते हीलिंजिंति सव्वेऽपि अ ते जिणाणाए॥१॥त्ति श्रीआचा० टीकायां(१४८-२४६-३५८ [illegible]) नहि कृतसामायिकेन जिनपूजा न कृताऽत उपेक्षणीया, नवा जिनपूजापरायणैः सामायिकं न कृतमतः सामायिकमप्युपेक्ष-[illegible] यथोचितकालपुरुषाद्यपेक्षयोभयोरपि जिनाज्ञात्वात्, ननु तर्हि पूजादिकृत्यं प्रधानभावेन भणितं तदसंगतमेवापन्नमितिचेदहो [illegible], प्राधान्यमपि नैसर्गिकौपाधिकभेदेन द्विधा, एवमप्राधान्यमपि, तथा च यद्वस्तु यदपेक्षया निसर्गेण प्रधानं तदुपाधि-[illegible] वस्त्वादिना प्रधानं तन्निसर्गेणाप्रधानं, यथा रजतशाल्यपेक्षया सुवर्णं निसर्गेण प्रधानं, तदेव यदि माषप्रमाणं स्यात्तदा [illegible]पेक्षया मूल्यमधिकृत्याप्रधानमपि, तत्र बहुप्रमाणहेतुकबहुमूल्यत्वमेवोपाधिः, एवं निसर्गेणाप्रधानमपि सुवर्णापेक्षया रजतं [illegible]पेक्षया स्वयं गद्यमाणं तन्मूल्यमधिकृत्य प्रधानमपीत्येवं सामायिकादिष्वपि योजना कार्या, सा चैवं-बहु-

पूजापौषधादीनां प्राधान्याप्राधान्ये

वित्तव्ययादिसाध्यं प्रासादादिप्रतिष्ठापर्यन्तं सामायिकपौषधाद्यपेक्षया निसर्गेण प्रधानमेव, श्रावकधर्ममात्रे तस्यैव प्राधान्यात्, देशतः परिग्रहत्यागरूपत्वेन साधुधर्मप्रत्यासन्नत्वात्तीर्थप्रवृत्तिहेतुत्वात् पापतापोपतप्तानां धर्मपिपासितानां सम्यक्त्वपानीयप्रपात्वात् प्रवचनप्रासादपताकाकल्पत्वात् साध्वादिसमुदायस्य सामुदायिकैकशुभाध्यवसायहेतुत्वेन सामुदायिकपुण्यप्रकृतिबन्धहेतुत्वान्मिथ्यात्वोत्सर्प्पणानिवारणपटहरूपत्वात्प्रवचनैकभक्तमहापुरुषसाध्यत्वात् तीर्थकरभक्तिभागीरथीप्रवाहप्रथमोत्पत्तिहैमपद्मह्रदकल्पत्वाच्चेत्याद्यनेके हेतवः स्वयमभ्यूह्याः, न चैवं सामायिकादिकमपि संभाव्यं, तस्य प्रायः सामान्यजनसाध्यत्वेनोक्तहेतुभिरस्पृष्टत्वाद्, अत एव "साहूणं चेइआण य पडिणीअं तह अवण्णवायं च। जिणपवयणस्स अहिअं सव्वत्थामेण वारेइ॥१॥त्ति(उप.२४२)अत्र साधुप्रत्यनीकवच्चैत्यप्रत्यनीकनिवारणं भणितं, तथा प्रत्याख्यानेऽपि 'महत्तरागारे'त्ति पदं चैत्यादिनिमित्तमेव भणितं, तथोपासकदशाङ्गेऽपि 'गुरुनिग्गहेणं'ति गुरुनिग्रहो–मातृपितृपारवश्यं गुरूणां वा–चैत्यसाधूनां निग्रहः–प्रत्यनीककृतोपद्रवो गुरुनिग्रह इत्यादि, तथा प्रश्नव्याकरणेऽपि "जे से उवहिभत्तपाणदाणसंगहणकुसले अचंतबालदुब्बलगिलाणवुड्ढखवगपवत्तिआयरिअउवज्झाए सेहे साहम्मिगे तवस्सी कुलगणसंघचेइअट्ठे निज्जरट्ठी वेआवच्चं अणिस्सिअं दसविहं बहुविहं करेति"त्ति श्रीप्रश्नव्या०, अत्र चैत्यानि–जिनप्रतिमाः इत्याद्यनेकग्रन्थेषु चैत्यवैयावृत्त्यमाचार्यादिपङ्क्तौ व्यवस्थापितं, न तथा क्वापि साधूनां कृतसामायिकपौषधिकश्रावकवैयावृत्त्यादि भणितम्, अतः प्रासादादिकं श्रावकधर्मे प्रधानभावेनैव सिद्धं, पूजादिकं तु किञ्चित्प्रवचनोत्सर्प्पणाहेतुमहामहःपूर्वं बहुवित्तव्ययादिसाध्यं, तत्तु सामायिकाद्यपेक्षया प्रासादादिपङ्क्तावेव स्थाप्यं, यतस्तदप्युपाधिविकलं निसर्गेण प्रधानमेव, किंचिच्च तद्विलक्षणं चन्दनतिलकादिमात्रजन्यं, तत्स्वरूपेण प्रधानमपि सामायिकपौषधाद्यपेक्षया न प्रधानं, तदपेक्षयाऽल्पकालादिसाध्यत्वेनाल्पमूल्यकल्प-

पूजापौषधादीनां प्राधान्याप्राधान्ये

त्वाद्, अत एव जैनप्रवचनस्यानेकान्तात्मकत्वं, यतः किंचित्कथञ्चित्प्रधानमप्यप्रधानमप्रधानमपि च प्रधानं भवति, परं तीर्थे प्रवृत्तिहेतुर्निसर्गसिद्धःप्रधानभावो भवति, न त्वौपाधिकः, भावार्थस्त्वयं–तीर्थप्रवृत्तिहेतवो भावस्तवे वर्त्तमाना यथा स्थविरकल्पिका भवन्ति न तथा जिनकल्पिका अपि, तेषां धर्मोपदेशप्रव्रज्यादावनधिकारात्, तदभावे च कुतस्तीर्थप्रवृत्तिः ?, तेनैव जिनकल्पिकादयस्तीर्थकरसंपत्तयाऽपि नागमे वर्णिताः,तीर्थप्रवृत्तिं मत्यकिञ्चित्करा अपि नियमेनाराधकाश्च, एवं द्रव्यस्तवमार्गेऽपि समृद्धिभाज औदार्यादिगुणसंपन्ना बहुवित्तव्ययेनापि यथाशक्ति जिनभवनविधापनजिनपूजादिविधानज्ञानभाण्डागारनिर्मापणप्रव्रज्याद्युत्सवकरणसाधर्मिकवात्सल्यकरणदुर्बलसाधर्मिकोपष्टम्भविधापनादिशक्तिभाजो मनोज्ञैषणीयविपुलाशनपानखादिमस्वादिमवस्त्रपात्रोपाश्रयादिसाधुदानविचक्षणाः शुद्धश्रद्धानभाजस्त एव तीर्थप्रवृत्तिहेतवो, न पुनः सामायिकपौषधादिविधानतत्परः जिनकल्पिकवदात्ममात्रचिन्तकः, ननु प्रासादादिनिर्मापणतत्परः सामायिकादिकं करोति न वेति चेदुच्यते, प्रासादादिनिर्मापणतत्परस्तु प्रायो यथाशक्ति यथावसरं सामायिकादिष्वपि यत्नवानेव स्याद्, यथा श्रीकुमारपालभूपालः, यस्तु केवलसामायिकादिविधान एव शक्तिमान् स तु प्रासादादिष्वशक्तिमानेवेति प्रतीतमेव, ननु तर्हि किमर्थं जिनकल्पं प्रतिपद्यन्ते इति चेदुच्यते, निष्पादिते ह्यात्मप्रतिरूपे शिष्ये निजगणभारमारोप्य निस्तीर्णगणकृत्यस्तथाविधधृतिश्रुतसंहननादिशक्तिमानागमोक्ततुलनापुरस्सरं जिनकल्पं प्रतिपद्यत एव, अन्यथा तेनापि वञ्चितो भवेदिति जिनाज्ञा प्रवचने भणिता, तत्पालननिमित्तमेव जिनकल्पप्रतिपत्तिः, एवं द्रव्यस्तवेऽपि तथाविधप्रासादादिनिर्माणादिकृत्येभ्य उत्तीर्णस्तथाविधशक्तिविकलश्च सामायिकादिशक्तिमान् तत्करोतीति जिनाज्ञापालनमेव श्रेयः,अन्यथा तेनापि वञ्चितो भवेदित्यलं प्रपञ्चेन। ननु जिनकल्पिको धर्मोपदेशवैयावृत्त्यादिकं न करोति तत्र कारणं किमितिचेदहो अद्य यावज्जिनाज्ञैवोद्घोष्य-

माणा किं न श्रुता ?, श्रुतैव, परमपरयुक्त्याद्यभाव एव जिनाज्ञाया बलमुद्भावयितुमुचितमिति चेदुच्यते, युक्तयोऽपि बह्व्यः सन्ति, तथाहि-धर्मोपदेशदाने हि स्ववचःप्रतिबुद्धानां स्वयं प्रव्रज्यादानादि कर्त्तव्यं स्यात्, न च संविग्नपाक्षिकवत्साधुपार्श्वे प्रेषणादियुक्तं, संविग्नपाक्षिकस्य स्वयमसाधुत्वाद्, वैयावृत्त्यादिकं गच्छवासिनामेव संभवति, तथा च गच्छवास एव सेव्यः स्यात्, गच्छनिर्गतानीतस्यान्नादेर्गच्छवासिनामप्यकल्प्यत्वाद्, गच्छवासे चोत्सर्गापवादयोः परिसेवनीयत्वाद्,उपकरणान्यपि जघन्यतश्चतुर्दश धारणीयानि भवेयुः, गोचर्यामपि परिभ्रमणं प्रातरारभ्य सायं यावद्युज्येत, अन्यथा बालग्लानादेर्वैयावृत्त्याद्यसंभवाद्, एवमध्ययनाध्यापनादिष्वपि प्रवचने, जिनकल्पोऽपि स्थविरकल्पान्नातिरिच्यते, तथा चैकतरस्यावश्यमभाव एवापद्येत, नाप्युभयातिरिक्तं निरपेक्षं किञ्चिद्वक्तव्यं भवेत्, तस्माज्जिनकल्पिकसंबन्धिनी क्रियैव तादृशी यस्यां स्थविरकल्पिकाचारविषयिणी क्रिया न कल्पते, स्थविरकल्पिकस्यापि क्रिया तादृशी यस्यां जिनकल्पिकसंबन्धिनी क्रिया न कल्पते, उभयोरपि कल्पयोस्तथा स्वभावाद्, द्वयोरपि विरोधिन्योः क्रिययोरेकत्र समावेशे एकस्यापि कार्यस्यानुदयात्, नहि कूरपाकनिमित्तं चुल्ल्यामारोपितायां मुपायां युगपत् पायसपाकारम्भोऽप्यभीप्सितफलसाधको भवति,उभयोरपि कार्ययोरनुदयाद्,आस्तामन्यद्,विरोधि युगपत्प्रत्याख्यानद्वयमपि न संभवति,नहि युगपदुपवासाचामाम्लरूपं प्रत्याख्यानद्वयं स्यात्, किंत्वेकतरस्याभाव एव द्वितीयस्योदयः, परं कृताचामाम्लप्रत्याख्यानो यद्युपवासं करोति तदा प्रत्याख्यानभङ्गो न स्याद्,उपवासी त्वाचामाम्लं करोति तदा प्रत्याख्यानभङ्ग इति विशेषः स्वयं बोध्यः,परमेकस्यां क्रियायां क्रियमाणायामन्तरा परक्रिया पूर्वक्रियासंयुक्तैव स्वयं विनश्यति,एवं कृतसामायिकादिरपि यदि जिनपूजां करोति तदा सामायिकक्रियाजिनपूजयोरविशेषापत्त्याऽन्यतरस्यापि लोपापत्तेः, किंच-क्रियाणां सांकर्ये जगद्व्यवस्थाभङ्गोऽपि, नहि युगपद्विरोधिन्योः क्रिययोः

समावेशः फलवान् दृष्टः श्रुतो वा, ननु सामायिकादिक्रियापूजयोर्विरोधः कथमिति चेच्छृणु, सामायिकक्रियाविषयः साधूनामादेशः, तन्निमित्तं च यावद्वृत्त्या आस्तां सचित्तस्पर्शादिरनावृतमुखेनापि कृतसामायिकादिर्न ब्रूते, तस्य क्रियाणां साधुक्रियानुकारित्वाद्, यदागमः- "सामाइअंमि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइअं कुज्जा॥१॥" त्ति (आव. २०*८०१) तथा सामायिकोच्चारानन्तरं 'बइसणइ संदिसाविउ' मित्यादि क्षमाश्रमणद्विकेनोपवेशनाज्ञामवाप्य 'सज्झाय संदिसावउ' मिति क्षमाश्रमणद्विकेन स्वाध्यायकरण एव गुर्वाज्ञा जाता, तेन तदवधिपूर्त्तिं यावत् स्वाध्यायादिगुरूपदिष्टक्रियापरायण एव स्यात्, न त्वन्तराऽनुपदिष्टक्रियापरायणोऽपि स्याद्, अत एव पौषधिकः श्रावकोऽद्यापि पानीयादिकं कुर्वन् मत्राजितशिष्यवद् गुर्वाज्ञामवाप्यैव करोति, आज्ञाविषये च धर्मे आज्ञामन्तरेण किमपि कर्तुं न कल्पते, यदुक्तं-"आणाइ तवो आणाइ संजमो तहवि दाणमाणाए। आणारहिओ धम्मो पलालपुलुव्व पडिहाइ ॥१॥" त्ति (संबोधप्रकरणे) आज्ञा च द्विधा-आदेशरूपा उपदेशरूपा च, तत्रादेशरूपायामाज्ञायामुपदेशरूपायाः करणे गुर्वाज्ञाखण्डनं महापातकम्, एवमुपदेशरूपायामपि बोध्यं, अत एव सामायिकादिचिकीर्षुर्गुर्वभावे स्थापनाचार्यमपि संस्थाप्य गुरोरिव तस्मादप्यादेशं मतीच्छति, यदागमः-"गुरुविरहंमि उ ठवणा गुरूवएसोवदंसणत्थं च। जिणविरहंमि व जिणबिंबसेवणामंतणं सहलं ॥१॥" (विशे० ३४६५)-मिति, अत्र गुरोः स्थापना तात्त्क्रियाविषयकादेशनिमित्तमेवोपदिष्टा, अत्र गाथायां चोपदेशशब्द आदेशपरो बोध्यः, सामायिकोच्चारोऽपि गुरुसाक्षिकं तथा विहितो यथा सचित्तस्पर्शोऽप्यकल्प्यः, एवं च सामायिकव्रतवतः कुसुमादिभिर्जिनपूजाकरणे सामायिकव्रतस्यैव भङ्गः, स्वाध्यायाद्यकरणेन च गुर्वाज्ञाभङ्गोऽपि, तस्मात्कृतसामायिकादिर्न जिनपूजां करोति, एवं जिनपूजापरिणतोऽपि न सामायिकं करोति, जिनपूजा हि जिनाज्ञाविषयोऽपि गुरूपदेशविषयो, न पुनर्गुर्वादेशविषयः, तथा चोपदेशविषयक्रियायामादेशविषयक्रियाया असंभव

एव, यतः सामायिकक्रिया तावत्सचित्तवस्तुस्पर्शादेरप्यविषयः, जिनपूजा च सचित्तजलकुसुमादिभिरेव साध्या, एवं च गमनागमनयोर्युगपदभाव इव युगपद् जिनपूजासामायिकक्रिययोरभाव एव, नहि कोऽपि निपुणोऽपि युगपद्गमनागमने कुर्वन् दृष्टः श्रुतो वा, न चोपदेशविषयक्रियापेक्षया आदेशविषयक्रिया शोभनतरा भविष्यतीति शङ्कनीयं, द्रव्यस्तवाधिकारे तथात्वाभावात्, तद्गतेश्च प्रागदर्शितत्वात्, न ह्यादेशविषयाः क्रियाः सर्वा अपि समानाः, आचार्येण साधूनामिव कृतसामायिकादीनां श्रावकाणामप्यन्नादिकं देयत्वेन प्रसज्येत, तस्मात्प्राधान्याप्राधान्यविचारे आदेशोपदेशादिकल्पनमकिञ्चित्करं, यद्वा प्राधान्यमप्राधान्यं च नैसर्गिकमौपाधिकं चेति प्रागुक्तं, तथा च विवक्षया यद्यादेशविषयाः क्रियाः निसर्गेण शोभना भण्यन्ते तर्हि द्रव्यस्तवे जिनप्रासादादिकमौपाधिकं शोभनतरं, तेनाल्पसुवर्णमहारजतपुञ्जादिदृष्टान्तेन निसर्गसिद्धशोभनत्वमौपाधिकशोभनापेक्षया ह्यकिञ्चित्करमेवेत्यादि युक्तयोऽपरिमिता ग्रन्थविस्तरभयादलिखिता अपि दिग्दर्शनेन स्वयमेवाभ्यूह्याः, इत्याद्यनेकागमसम्मत्या श्रावकधर्मे जिनपूजादिविधानस्यैव नैसर्गिकप्रधानभावेन सिद्धे लुम्पकः शङ्कते–ननु भोः यथा अर्हन्ति पूजासत्कारादिकमित्यर्हन्त इति नामव्युत्पत्त्याऽपि जिनपूजा सिद्ध्यति तथाऽर्थापत्त्या तत्प्रतिषेधोऽपि सिद्ध्यति, तथाहि–जिनपूजादिषु पृथिव्याद्यारम्भस्तावत्तदुपदेशकानां भवतामपि सम्मतः, यत्रारम्भस्तत्र दया न स्याद्, यदुक्तं–"आरंभे नत्थि दया महिलासंगेण नासए बंभं। संकाए सम्मत्तं पव्वज्जा अत्थगहणेणं ॥१॥"-ति, यत्र चारम्भस्तत्र प्राणा हन्यन्त एव, प्राणहननं त्वर्हद्भिः प्रतिषिद्धं,"सव्वे पाणा न हंतव्वे"त्यागमवचनेनैवेत्यर्थापत्त्या जिनपूजा प्रतिषिद्धैवेति चेन्मैवं, प्रवचनवार्त्ताया अप्यपरिज्ञानात्, तत्कथमितिचेच्छृणु, यत्रानुष्ठाने आरम्भस्तज्जिनैः प्रतिषिद्धमेव उत जिनोपदिष्टक्रियायामारम्भो न भवत्येव अथवा भवन्नपि निष्फलत्वान्न विवक्ष्यते?,आद्ये साधूनां विहाराहारनीहारनद्युत्तारप्रतिक्र-

मणप्रतिलेखनोपाश्रयप्रमार्जनादिक्रियाणां प्रवचनप्रसिद्धानामारम्भाविनाभाविनीनां प्रतिषेधे संपन्ने तवैव गलपादुका, द्वितीयेऽप्यपक्ष-बाधः, नद्युत्तारादिषु षण्णामपि जीवानां विरोधनासंभवात्, "जत्थ जलं तत्थ वणं"(जीवा० वृ० पत्रं ९ प्र० ११४)मित्यागम-वचनात्,प्रतिक्रमणप्रतिलेखनादिषु च वायुजीवादीनामारम्भस्यागमप्रसिद्धत्वात्, एजनादिक्रियायुक्तस्यारम्भसमारम्भाद्यवश्यंभावात्, यदागमः-"जाव णं एस जीवे एअइ वेअइ चलइ फंदइ इत्यादि यावदारम्भे वट्टइ सारंभे वट्टइ" (१२-१५२) इत्यादि, अथार-म्भादि भवदपि निष्फलत्वान्न विवक्ष्यते इति तृतीयः पक्षश्चेदायातोऽसि स्वयमेवास्मदभिमतमार्गे, यतो वयमपीत्थमेव ब्रूमः-तीर्थ-करोपदिष्टासु धर्मक्रियासु सत्रप्यारम्भो निष्फलत्वादकिञ्चित्कर एव, अत एव श्रीभद्रबाहुस्वामिभिः श्रावकमार्गे संसारप्रतनुकरणे कूपदृष्टान्तेन जिनपूजादिलक्षणो द्रव्यस्तवोऽभिहितः, यदुक्तं-"अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो। संसारपयणु-करणे दव्वत्थए कूवदिट्ठंतो ॥१॥"त्ति (१९६ आव० भा०) श्री आ० नि०। किंच-आस्तां धर्मकृत्येषु, सांसारिककर्मकृत्येष्वपि तत्किमपि नास्ति यत्र किमपि व्ययादिर्न स्यात्, तस्मादायव्ययतुलनया स्वनिर्वाहहेतुरुद्धरितोऽंशो लाभ एवेतिधिया जगत्प्रवृत्ति-र्निरवद्यैव दृश्यते, एवं धर्मप्रवृत्तिरपि, यदागमः-"तम्हा सव्वाणुण्णा सव्वनिसेहो य पवयणे नत्थि। आयं वयं तुलिज्जा लाहाकं-खिव्व वाणिअओ ॥१॥"त्ति (उप० ३९२) नहि कोऽपि लोके लोकोत्तरे च मार्गे लुम्पकं विहाय सर्वथा व्ययाभावेनैव लाभा-काङ्क्षी दृष्टः श्रुतो वेत्यलमतिपल्लवेन, ननु भवद्भिरेव द्वितीयविश्रामे साधुक्रियानुकारित्वात्सामायिकादिक्रिया सुवर्णोपमया वर्णिता, प्रासादादिनिर्मापणादिकं रजतोपमयेति, अत्र तु रजतकल्पं सामायिकानुष्ठानं प्रासादादिनिर्मापणं च सुवर्णकल्पमिति वैपरीत्येन प्रतिपादने प्रागुक्तवचनविरोधनिरोधः कथमितिचेदुच्यते, प्रवचने साधुधर्मः श्रावकधर्मश्चेति धर्मो द्विविधः प्रज्ञप्तः, तत्र साधुधर्म-

क्रियानुकारितामात्रेण सुवर्णोपमा प्राग्भणिता, अत्र तु श्रावकधर्मेऽपि द्वैविध्यं विकल्प्य विचार्यते तदा सामायिकादिकं रजतकल्पं प्रासादादिकं च सुवर्णकल्पमिति विवक्षया वस्तुकल्पनायां विरोधगन्धस्याप्यभावात्, ननु सुहृद्भावेन पृच्छामः–सामायिकादिक्रिया साधुक्रियानुकारिणी निरवद्या च सर्वसम्मता तदपेक्षयाऽपि प्रासादादिकं शोभनतरमिति मच्चेतसि न प्रतिभासते इतिचेद्, उच्यते, यत्र कलादौ धर्मे वा नामग्राहं यदुपमया सद्भावसंभवे प्रशंसा असद्भावसंभवे च हीला स्यात् तत्र तत्र तत्तत्प्रधानभावेनैव बोध्यं, यथा श्रीवीरे ब्राह्मणकुले समुत्पन्ने वेदाध्ययनादिसंभावनया प्रशंसा, ब्राह्मणकुलोत्पन्नानां वेदाध्ययनमेव प्रशस्यपदवीं प्रापयति, राजकुलोत्पत्तौ तु राज्यपतौ राजा सोऽपि चक्रवर्तीति प्रशंसा, राजकुलोत्पन्नानां राज्यपतित्वं, तत्रापि चक्रवर्तित्वं चैव प्रधानमिति ज्ञापयति, एवं धर्ममधिकृत्याद्यापि किमयं त्वं जातः प्रासादोद्धारं करिष्यसि अथवा शत्रुञ्जयसंघपतिर्भविष्यसीत्यादिवचोभिरासतामन्ये मातापित्रादयोऽपि श्रावककुलोत्पन्नं स्वसुतं प्रत्यपमन्यंते, न पुनस्तद्वत् किं सामायिकपौषधादिविधाता भविष्यसि अथवोपधानादितपोनिर्वाहको भविष्यसीत्यादिवचोभिराक्रोशयन्तीति सर्वजनप्रतीतं दृश्यते, तथा प्रासादप्रतिष्ठादिनिमित्तं यथा ज्योतिःशास्त्रे मुहूर्तलग्नादि भणितं दृश्यते न तथा तदतिरिक्ते धर्मानुष्ठानादौ, तथा साधवोऽपि यथा रथानुयात्रादिषु बहवो मिलन्ति न तथा तद्व्यतिरिक्तसामायिककृत्येषु, तथा आचार्यादयोऽपि देशान्तरतोऽपि यथा प्रतिष्ठादिकृत्यमुद्दिश्यायान्ति न तथाऽन्यत्रेत्यादिविचारो रहोवृत्त्या कृतः सन्नान्तरलोचनमलापनोदको भविष्यतीतिबोध्यं, ननु वयं सुहृद्भावेन पृच्छामः–अर्हन्ति पूजासत्कारादिकमतोऽर्हन्त इति नामव्युत्पत्त्यापि पूजा सिद्ध्यन्ती भावतीर्थकरमादायैव सिध्यतीति, तस्यैव धर्मोपदेशादिषु सामर्थ्यात्, न पुनः स्थापनार्हतोऽपि, तस्याचेतनरूपत्वादिति चेच्चिर जीव, एतावताऽपि भो लुम्पक! तव मतं तु जलाञ्जल्येव संपन्नं, तत्रापि पुष्पादिविराधनाङ्गी-

कारात्, किञ्च–भावार्हतः पूजाङ्गीकारे स्थापनार्हतः पूजाऽवश्यमभ्युपगतैव, 'साक्षात्साधनताभाव [illegible] ना'दितिन्यायाद् देशकालादिव्यवहितानां तीर्थकृतां हि पूजा स्थापनाद्वारैव स्यात्, तीर्थकरविषयकध्यानावलम्बनहेतोरन्यस्यासंभवात्, लोकेऽपि राजाधिकृतपुरुषसेवा राजसेवातोऽप्यधिकफलदायिनी दृश्यते, अत एव बहून् जनान् समुदायीकृत्य साक्षात्तीर्थकरचन्दनपूजादिना केनापि संघपतिबिरुदं न प्राप्तं, प्राप्तं च श्रीशत्रुञ्जयादियात्राविधिना बहुभिः, सम्प्रत्ययपि प्राप्यते चेति तवापि सम्मतम्, अतः कथंचित्साक्षात् तीर्थकरपूजातः स्थापनार्हत्पूजा बलीयसी, नहि यथा स्थापनाऽर्हत्पूजा बहुवित्तव्ययादिसाध्या तथा भावार्हतोऽपि, भावार्हत्स्थापनार्हतोः पूजाविषयोर्वैसादृश्याद्, अत्र बहु वक्तव्यमपि प्रायः प्रतीतमेव, यच्चोक्तमचेतनत्वादिति तदवाच्यं बालचेष्टितमवगंतव्यं, यतोऽभीष्टफलप्राप्तौ चैतन्याचैतन्यविचारोऽकिञ्चित्कर एव, "चिन्तामण्यादयः किं न, फलन्त्यपि विचेतना ?" इति (वीत-स्तोत्र) वचनाच्चैतन्यरहितोऽपि चिन्तामणिर्यथाऽभीष्टफलदाता न तथा चैतन्यभागपि दुर्गतः, तस्माद्वस्तूनां वैचित्र्यमवगम्य सम्मोहः त्याज्यः, कथमन्यथा एकेनापि सौवर्णिकेन विक्रीतेन मनुजशतं भोज्यते, न पुनश्चैतन्यभाजा कीटिकाकोट्यापि विक्रीतया एकोऽपि मनुजः, आस्तामन्यत्, सत्यपि चैतन्ये तद्ग्राहकोऽपि कोपि न मिलति, तस्मादभीष्टफलप्राप्तौ चैतन्याचैतन्यविचारलक्षणोऽस्थिभुक् लुम्पकमुखाङ्गण एव क्रीडन् विराजत इति। ननु अर्हन्ति पूजासत्कारादिकमित्यर्हन्त इति शब्दव्युत्पत्तिर्नास्माकमभीष्टा, किंतु "अट्ठविहंपि अ कम्मं अरिभूअं होइ सव्वजीवाणं। तं कम्मअरिं हंता अरिहंता तेण वुच्चंति॥१॥त्ति (आव-९२०-१५९३) वचनात् अष्टकर्मारिहननादरिहन्तार इतिव्युत्पत्त्या कथं पूजा सिद्ध्यतीतिचेदुच्यते, एवमपि सुतरां प्रतिमाप्रासादादिपुरस्सरमेव पूजायाः सिद्धेः, तथाहि–अष्टकर्मारिहननमपि कर्मणामरित्वेन परिज्ञानादपरिज्ञानाद्वा ?, द्वितीयविकल्पेऽन्धयुद्धमिवापद्यते, न ह्यज्ञातकर्मारिस्वरूप-

स्तद्धननाय समर्थो भवति, मिथ्यादृशामपि केवलज्ञानोत्पत्तिप्रसङ्गात्, नहि लोकेऽप्यज्ञातोऽरिर्हन्तुं शक्यते, तस्मादाद्यो विकल्पोऽनवद्यः, तथा च प्रथमं ज्ञानावरणीयादिकर्म्मणां प्रकृतिस्थितिरसप्रदेशैर्बन्धस्वरूपमवगन्तव्यं, तत एवोदयोदीरणासत्ता भवन्ति, कर्मणां हि बन्धः कारणमन्तरेणासंभवीति कारणं ज्ञात्वा ततो निवृत्तः पुनस्तथाविधकर्मबन्धरहितः कृशीभूतानि प्राचीनकर्माणि हन्तुं शक्नोति, न पुनः प्रतिसमयं कर्मपुद्गलनिषेकहेतून् कर्मबन्धकारणानि सेवमानोऽपि, नहि बलवानरिर्हन्तुं शक्यत इति लोकोक्तिरपि, कर्मबन्धकारणानि त्वेवं–मत्यादिज्ञानस्य साध्वादीनां ज्ञानिनां पुस्तकादेर्ज्ञानसाधनस्य प्रत्यनीकतानिह्नवनोपघातात्याशातनादिभिर्ज्ञानावरणीयदर्शनावरणीयलक्षणं मूलप्रकृतिद्विकं बध्नाति, गुरुभक्तिक्षान्तिकरुणाव्रतयोगकषायविजयदानादिभिः सातवेदनीयकर्म बध्नाति, एतद्विपरीतस्तु असातमिति २ भवहेतोरुन्मार्गस्य मार्गत्वेन देशना मुक्तिपथस्य ज्ञानदर्शनचारित्रलक्षणस्यापलपनमित्यादिभिः देवद्रव्यविनाशादर्हत्साधुचैत्यसङ्घादिप्रत्यनीकतया च दर्शनमोहनीयं कर्म बध्नाति, तीव्रकषायनोकषायाद्युदयाच्च चारित्रमोहनीयमिति ४ महारम्भादियुक्तो व्रतरहितो नरकायुर्बध्नाति, उन्मार्गदेशनामार्गनाशनागूढहृदयमायाकुशीलतासशल्यतादिभिस्तिर्यगायुर्बध्नाति, प्रकृत्याऽल्पकषायो दानरतः शीलसंयमरहितो मध्यमगुणवान् मनुजायुर्बध्नाति, सर्वदेशविरतिबालतपोऽकामनिर्जरासम्यक्त्वादिभिर्देवायुर्बध्नाति ५ मायागौरवादिरहितः शुभनाम, तद्विपरीतस्तु अशुभनामकर्म बध्नाति ६ गुणप्रेक्षी मायादिरहितोऽध्ययनाध्यापनादिरुचिरुच्चैर्गोत्रं बध्नाति, तद्विपरीतस्तु नीचैर्गोत्रमिति ७ जिनपूजादिविघ्नकरो हिंसादितत्परोऽन्तरायकर्म बध्नाति ८, यदागमः–"दुविहो अ होइ मोहो" त्ति (१८८ नि०) आचाराङ्गे लोकविजयाध्ययननिर्युक्तिगाथाव्याख्याने, मोहनीयकर्म द्विधा भवति–दर्शनमोहनीयं चारित्रमोहनीयं चेति, बन्धहेतोर्द्वैविध्यात्तथाहि–अर्हत्सिद्धचैत्यतपःश्रुतगुरुसाधुसङ्घप्रत्यनीकतया दर्शनमोहनीयं कर्म बध्नाति, येन

चासावनन्तसंसारसमुद्रान्तःपात्येवावतिष्ठते इत्यादि श्रीआचाराङ्गलोकविजयाध्ययनटीकायां, तथा तत्रैव पत्रद्वयान्तरे—"पडिणीय-मंतराओपघातए तप्पओसनिण्हवणे। आवरणदुगं भूओ बंधइ अचासणाए अ॥१॥ भूआणुकंपवयजोगउज्जुओ खंतिदाणगुरुभत्तो। बंधइ भूओ सायं विवरीए बंधए इअरं ॥२॥ अरहंतसिद्धचेइअतवसुअगुरुसंघसाहुपडिणीओ। बंधइ दंसणमोहं अणंतसंसारिणो जेण ॥३॥ तिव्वकसाओ बहुमोहपरिणतो रागदोससंजुत्तो। बंधति चरित्तमोहं दुविहंपि चरित्तगुणघाई ॥४॥ मिच्छादिट्ठि-महारंभपरिग्गहो तिव्वलोहनिस्सीलो। निरयाउअं निबंधइ पावमई रोद्दपरिणामो ॥५॥ उम्मग्गदेसओ मग्गनासओ गूढहिअय-माइल्लो। सढसीलो अ ससल्लो तिरिआउं बंधए जीवो ॥६॥ पगतीइ तणुकसाओ दाणरओ सीलसंजमविहूणो। मज्झिमगुणेहिं जुत्तो मणुआउं बंधए जीवो ॥७॥ अणुवयमहव्वएहिं बालतवोऽकामनिज्जराते अ। देवाउअं निबंधइ सम्मद्दिट्ठी उ जो जीवो ॥८॥ मणवयणकायवंको माइल्लो गारवेहिं पडिबद्धो। असुहं बंधइ णामं तप्पडिवक्खेहिं सुहनामं ॥९॥ अरहंताइसु भत्तो सुत्तरुई पयणु-माण गुणपेही। बंधइ उच्चागोअं विवरीए बंधए इअरं ॥१०॥ पाणवहाइसु रत्तो जिणपूआमोक्खमग्गविग्घपरो। अज्जेति अंतरायं न लहति जेणिच्छिअं लाहं ॥११॥" इत्यादि श्रीआचाराङ्गटीकायां (पत्र ९९) लोकविजयाख्याध्ययने, नच सूत्रातिरिक्तं नास्माभिः सिद्धान्ततयाऽभ्युपगम्यते इतिवाच्यं, निर्युक्त्यादिसहितस्यैव सूत्रस्य सिद्धान्ततया प्रथमविश्रामे स्थापितमग्रे व्यवस्थापयिष्यमाणत्वात् त्वदभ्युपगमस्यास्माकमश्राव्यत्वात्, नहि द्विकलाभ्युपगतचन्द्रादिदर्शनाभावस्तदितरलोकस्य सम्मतः, किंच—आस्तां टीका, सूत्रस्यापि तवाभ्युपगमोऽस्ति न वा ?, अस्ति चेत्कथं न टीकानिर्युक्त्यादीनामपि, यतः सूत्र एव "सुत्तं पडुच्च तओ पडिणीआ पं०, तं०—सुत्त-पडिणीए अत्थपडिणीए तदुभयपडिणीए"त्ति॥ (३३८ भग० सा० २०८) श्रीभगवत्यादौ प्रतीतमेव, तत्र सूत्रं व्याख्येयं, अर्थ-

तद्व्याख्यानं निर्युक्त्यादिस्तत्प्रत्यनीकता–तदनिष्टाचरणे तत्परता, सा च लुम्पकमाश्रितानां युक्तैवेतिरूपेण स्वीकार्यतया सम्मता उतानन्तसंसारपरिभ्रमणहेतुर्नास्माकमुचितेत्येवंरूपेण परिहार्यतया सम्मता ?, आद्येऽस्मद्विलक्षणस्य लुम्पकस्य निर्युक्त्यादेरनभ्युपगमो युक्त एव, नह्येतावताऽस्माकं किंचिदनिष्टं, तदीयकुलस्यैव तथा स्वभावत्वात्, पायसं परित्यज्य विष्ठामिश्रं कचवरादिकं भक्षयति गर्त्ताशूकरे महतामपि खेदानुत्पादात्, द्वितीयेऽस्माकमिव तवापि निर्युक्त्यादिकं सिद्धान्ततया सम्मतमेव सिद्धं, तथा चाचाराङ्गटीकायां चैत्यादिकप्रत्यनीकता महापापहेतुत्वेन वर्णिता, तत्पूजाद्युपघातोऽपि दीर्घस्थितिकमिथ्यात्वमोहनीयकर्मबन्धहेतुत्वेनानन्तसंसारित्वापादक इत्युक्तं, तत्परिहारेणैवारिहन्तृत्वसिद्धौ सिद्धा प्रासादप्रतिमापूर्वकमेव जिनपूजेति, किंच–चैत्यादिमहोत्सवनिमित्तं प्रवचनेऽमार्युद्घोषणं प्रतीतं, यदागमः–"दव्वविमोक्खो निअलाइएसु खित्तंमि चारयाईसु। काले चेइअमहिमाइएसु अमघायमाईउ ॥१॥"(२५८)त्ति श्रीआचाराङ्गे विमुक्त्याध्ययननिर्युक्तौ, एतद्वृत्त्येकदेशो यथा–कालविमोक्षस्तु चैत्यमहिमादिकेषु कालेष्वमाघाताद्घोषणापादितो यावन्तं कालं मुच्यते यस्मिन् वा काले व्याख्यायते सोऽभिधीयते इतिश्री आचा० टीकायां,अत्रैवं विचारणीयं–यदि चैत्यादिमहिमा पातकं स्यात्तर्हि तदर्थममारिघोषणं व्यर्थं स्यात्, नहि कोऽप्युद्वाहादिमहोत्सवेष्वमारिघोषणं कारयन् श्रुतः श्रूयते वा, किंच–जैनपुण्यमहोत्सवमन्तरेणामारिघोषणाद्यसंभवाद्, आस्तामन्यद्, अन्यतीर्थिकानां यागाद्युत्सवेषु बहुद्रव्यव्ययसंभवेऽप्यमारिघोषणवार्त्ता तु जैनप्रासादप्रतिमाप्रतिष्ठाद्युत्सवदिनेषु तथा पर्युषणापर्व्वादिपर्व्वस्वेवोपलभ्यते, तस्माच्चैत्यादिमहोत्सवा धर्मचक्रवर्त्तिगृहे जायमाना जगज्जीवानन्दहेतवोऽपि मोहतस्करावष्टम्भगिरिदरीकल्पे लुम्पकगृहे मोहानुचराणां लुम्पकानां शोकहेतवो दृश्यन्ते, तस्माद्यत्रामारिघोषणं तज्जैनमहोत्सवादि बोध्यं, किंच–चैत्यमहादिप्रत्यनीकता महापापमिति परिज्ञानाभावेन त्यागस्यैवासंभवाद्,

ना पूजादि

यदागमः—"पढमं णाणं तओ दया, एवं चिट्ठइ सव्वसंजए। अण्णाणी किं काही? किं वा नाहीअ छेअपावगं? ॥१॥" (४१*)ति दशवै०, तत्परिज्ञानं गुर्वायत्तं, यदागमः—"सुच्चा जाणइ कल्लाणं,सुच्चा जाणइ पावगं। उभयंपि जाणई सुच्चा,जं छेअं तं समायरे ॥१॥" (४२*)त्ति अत्र श्रुत्वेत्युक्तं, न पुनः पुस्तकादिषु दृष्ट्वेत्यपि, गुरुपार्श्वे श्रवणं च विनयादिना भवति, विनयेन यच्छ्रुतमवाप्यते तत्सूत्रनिर्युक्तिभाष्यवृत्तिप्रकरणादिभिः समुदितमेव, अन्यथा बहुश्रुतत्वासंभवात्, यदागमः "जहा से सामाइआणं,कुट्ठागारे सुरक्खिए। णाणाधण्णसंपुण्णे, एवं हवइ बहुस्सुए॥१॥"(३५२*)त्ति श्रीउत्तराध्ययने बहुश्रुतपूजाध्ययने, एतद्व्याख्यानं यथा—समाजः-समूहस्तं समवयन्ति सामाजिकाः—समूहवृत्तयो लोकाः, केषां?—कोष्ठा—धान्यपल्यास्तेषामगारं—तदाधारभूतं गृहमुपलक्षणत्वादन्यदपि प्रभूतधान्यस्थानं तथा सुष्ठु—प्राहरिकपुरुषादिव्यापारणद्वारेण रक्षितः—पालितो दस्युमूषिकादिभ्यः सुरक्षितः, स च कदाचनापरिपूर्णः स्यादित्याह—नाना—अनेकप्रकाराणि धान्यानि—शालिमुद्गादीनि तैः प्रतिपूर्णो—भृतो नानाधान्यप्रतिपूर्णः, एवं भवति बहुश्रुतः, सोऽपि सामाजिकानामिव गच्छवासिनामुपयोगिभिर्नानाधान्यैरिवाङ्गोपाङ्गप्रकीर्णकादिभेदैः श्रुतज्ञानविशेषैः प्रतिपूर्ण एव स्यात् सुरक्षितश्च प्रवचनाधारतया, यत उक्तं—"जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खिज्जा" इत्यादि, अथवा गुरुसमीपे श्रवणं त्रिधा भवति—सूत्रमात्रार्थश्रवणं निर्युक्तिमिश्रितश्रवणं निरवशेषश्रवणं चेति,यदागमः—"सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसिओ भणिओ। तइओ अ निरवसेसो एस विही होइ अणुओगे ॥१॥"(१-९०*, ३-२४ नि०, १२-९४*)त्ति भगवत्यादौ, एवं सूत्रनिर्युक्तिभाष्यवृत्त्याद्युक्तकर्मबन्धकारणानि, चैत्यसद्भावानुकूलप्रवृत्त्या च प्राचीनकर्मारिहननादरिहन्तारो बभूवांसो भवन्ति भविष्यन्ति चेति सिद्धान्तवाद्यभिप्रायेणापि नामव्युत्पत्त्या जिनपूजा, एवं जिनशब्दव्युत्पत्त्याऽपि सिद्ध्यति, जयति रागादिशत्रूनिति जिनः,

तत्र रागद्वेषमोहादीनामुपलक्षणाद् ज्ञानावरणीयादीनामपि पुष्टिकारणानि यानि चैत्यसङ्घादेप्रत्यनीकतादीनि तेभ्यो विरत एव कृशीभूतवान् रागादीन् हन्तुं शक्नोति, नान्यथेत्यपि जिनपूजा निरवद्यैव सिद्धा, एवं नमस्कारे शक्रस्तवादौ च यावन्ति पदानि तानि सर्वाण्यप्यन्योऽन्यापेक्षाणि जिनपूजाव्यवस्थापकानि, तद्दिग्दर्शनं त्वेवं 'नमोत्थु णं अरहंताणं भवंताणं" इत्यत्रार्हत्शब्देन किं वाच्यं ? भगवच्छब्देन च किं वाच्यमित्यादिप्रश्ने सति गुरुत्वान्मौनीभावेन तिष्ठति तदनुकम्पया भोः शृणु! पूर्वमर्हच्छब्देन नामादिमिश्चतुर्द्धाऽप्यर्हन्नमस्कृतः, अग्रे च विशेषतो भावार्हन्तं पृथग् नमस्करोति भगवंताणमिति, तत्र भावार्हद्भवने प्रागुक्ता युक्तिरवतारणीयेत्यलं विस्तरेण। इति लुम्पकमते मातृकापाठकल्पं 'सव्वे पाणे'त्यादिसूत्रं प्रदर्श्य प्रसङ्गतो लुम्पकाज्ञानोद्भावनाय एतत्सूत्रानुगताः काश्चन युक्तयोऽपि दर्शिता इतिगाथार्थः ॥६४॥ अथानन्तरोक्तगाथान्ते यदुक्तं 'तेणं तद्दंसणं पावं'ति तादृग्वचनतः किं स्यात्? न स्याच्च कुत इत्याह—

एवं निट्ठुरवयणं भासंतस्साවि तक्खणा चेव। कालणुभावा जिब्भासडणंपि न होइ सयमेव ॥६५॥

एवं-प्रागुक्तगाथोक्तं निष्ठुरवचनं-सतामवाच्यमनार्यवचनं भाषमाणस्य लुम्पकस्यापिरवधारणे भाषमाणस्यैव तत्क्षणादेव-तत्कालमेव समयादिकालाव्यवधानेनैव स्वयमेव-परोपक्रममन्तरेणैव जिह्वाशटनं भवेत्, तदपि न भवेत्, कुत इत्याह-कालानुभावान्नेति, दुष्षमाकालो हि महापापाङ्कुराणामुत्सूत्रभाषणारूपाणां भूमिरिव, यतः पातकं हि कलिकालसंबन्ध्येव कविभिर्वर्णितं, यदुक्तं-"मा पप्तदस्मिंभावात्कलिकलिलभराक्रान्तमत्यन्तमेतत्, पातालापारपङ्के त्रिभुवनभवनं द्रागितीवावधार्य। त्वष्ट्राऽवष्टम्भनार्थं प्रचुरभरमहौ निर्ममाते यदङ्घ्री, यज्जस्तम्भाविवासौ निखिलसुखखनीर्वो विधत्तां यतीन्द्रः ॥१॥ इतिश्रीजिनशतके, यदि दुष्षमाकालो नामवि-

न्यत्तर्हि तथा वचनं ब्रुवत एव तत्कालं जिह्वाच्छेदोऽभविष्यदितिगाथार्थः ॥६५॥ अथ लुम्पकोक्तमसंभवीति दर्शयित्वा तादृष्टापात्त-मुद्भाव्य प्रश्नयन्नाह—

जिणपूआ जीववहो पावंति अ नेव कत्थई सुणिअं। जइ एवं ता णूणं जिणपडिमा केण निम्मविआ ? ॥६६॥

जिनपूजा तावज्जीववधः पापमिति च कुत्रचित्-क्वाप्यागमे लोकोक्त्या वा नैव श्रुतं, श्रुतं नास्त्येव, इष्टापत्तिमाह–यद्येवं प्रागुक्तं 'ता' तर्हि नूनं-निश्चितं जिनप्रतिमा केन निर्मापितेति प्रश्नसूचिकाया गाथाया अर्थः ॥६६॥ अथ लुम्पकाभिप्रायतः परिशेषेण यत्संपन्नं तदाह—

णो अण्णउत्थिएहिं न य इंदिअअट्ठिएहिं निम्मविआ। नय जिणधम्मट्ठीहिं निक्कारणकज्जसंपत्ती ॥६७॥

'अन्यतीर्थिकैः' शाक्यादिब्राह्मणपर्यन्तैर्निर्मापिता नो, अन्यतीर्थिका हि प्रायो जैनद्वेषिणः कथं तत्प्रतिमां कारयन्तीति तवापि सम्मतं, 'न चेन्द्रियार्थिकैरपि' यत इन्द्रियार्थाः साक्षात्परम्परया वा भवन्ति, साक्षाच्छब्दस्पर्शादयः परम्परया तु हिरण्यादयः, उभयथापि जैनप्रासादादसंभविनः, संभवे वा तदर्थिना मिथ्यादृशां म्लेच्छादीनामपि तन्निर्मापणप्रसक्तेः, अतोऽकिञ्चित्कर एवायं विकल्पः, एतद्विकल्पद्वये निषेधः सर्वजनप्रतीतः। अथ लुम्पकमताभिप्रायेणाह–न च जैनधर्मार्थिभिरपि, जैनधर्मार्थिनो हि जिनाज्ञया प्रवर्त्तमानाः "सव्वे पाणा न हंतव्वा" इत्यादिसिद्धान्तवचनात्कथं प्रासादादिकेषु प्रवर्त्तन्ते ?, तस्मान्निष्कारणकार्यसंपत्तिः, अयं भावः–प्रासादादिकं कार्यं तावत्सर्वजनप्रतीतं, कार्यं च कारणमन्तरेणासंभवीति जगत्स्थितिः, तत्कारणानि च विकल्प्यमानानि त्रिधा संभवन्ति, तत्रान्यतीर्थिका इन्द्रियार्थिनश्च न संभवन्तीति सर्वजनप्रतीतं,लुम्पकाभिप्रायेण तु जैनधर्मार्थिनोऽपि न संभवन्ति, तथा

च निष्कारणकार्यसंपत्तिरसंभविनीत्यनन्यगत्या लुम्पक एवानार्यवागितिगाथार्थः ॥ ६७ ॥ अथ प्रकारान्तरेण प्रश्नमाह—

एवं हरिहरपडिमाभत्तो सिवधम्मिओ य जिणधम्मी। अहवा उभयपभट्ठो पुच्छेअव्वो अ पडिमरिऊ ॥६८॥

एवं-प्रागुक्तप्रकारेण हरिहरप्रतिमाभक्तः शैवधार्मिक उत जैनधार्मिकश्चेति, चः समुच्चये, अथवोभयभ्रष्टः-जैनधर्मशैवधर्मबाह्य इति प्रतिमारिपुः लुम्पकः प्रष्टव्यः, एवं प्रश्ने कृते लुम्पको मूकाभो भवति उभयपाशाद्, उभयपाशस्त्वेवं-यदि भणति शैवधार्मिक एव हरिब्रह्मादिप्रतिमाभक्तो भवति तदा जैनधार्मिको जिनप्रतिमाभक्तः, तदतिरिक्तो लुम्पको न जैनधार्मिकः, अथ भणति-जैनधार्मिको हरिहरादिप्रतिमाभक्तस्तर्हि शैवधार्मिकोऽपि जिनप्रतिमाभक्तः संपद्येत, एतच्च सर्वजनप्रतीतिबाधितं वक्तुमप्ययुक्तं, लुम्पकस्य च हरिहरादिप्रतिमाराधनं प्रसज्येत, अन्यथा तस्यैवाजैनत्वापत्तेरित्युभयथाऽपि पाश एवेत्यनन्यगत्या हरिहरादिप्रतिमाभक्तशैववज्जिनप्रतिमाभक्त एव जैनो, नान्य इति सिद्धमितिगाथार्थः ॥६८॥ अथ पुनरप्यनन्यगत्या प्रसाधनाय प्रश्नमाह—

अह बहुवित्तवएणं कज्जं धम्मस्स धम्मबुद्धीए। कुज्जा निअनिअमग्गे मंदमई किंव तिव्वमई? ॥ ६९ ॥

अथेति परं प्रति प्रश्ने, ननु भो लुम्पक! निजनिजमार्गे-शैवजैनादिमार्गे धर्मबुद्ध्या बहुवित्तव्ययेन धर्मस्य कार्यं निजनिजमार्गे मन्दमतिः कुर्यात् किं वा तीव्रमतिरितिगाथार्थः ॥६९॥ अथ प्रागुक्तप्रश्ने प्रथमविकल्पेऽतिप्रसङ्गमाह—

पढमविगप्पो तुच्छो पच्चक्खं जेण मिच्छपमुहेहिं। जिणपासायप्पमुहं णो दीसइ कारिअं किंची ॥७०॥

'प्रथमविकल्पः' निजनिजमार्गे मन्दमतिरेव बहुवित्तव्ययेन-लक्षादिसंख्याद्रव्यव्ययेन धर्मबुद्ध्या धर्मकार्यं कुर्यादितिलक्षणः तुच्छः-असारः, श्रोतृजनस्यापि कर्णशूलकल्पः, तत्र हेतुमाह-'जेणं'ति येन कारणेन मिथ्याशब्देन मिथ्यादृष्टयो ज्ञेयाः, मिथ्या-

दृष्टिप्रमुखैः मिथ्यादृकसम्यग्दृग्भिर्जैनप्रासादप्रमुखं—जैनप्रासादशैवप्रासादप्रमुखं किञ्चित्कारितं न दृश्यते, अयं भावः—मन्दजैनैर्जैनप्रासादाः शैवप्रासादा वा मन्दशैवैरपि शैवप्रासादा जैनप्रासादा वा कारयितव्याः भवन्तीत्यतिप्रसङ्गः, ते च क्वापि कारिता न दृश्यन्ते श्रूयन्ते चेति प्रथमविकल्पोऽकिञ्चित्कर इतिगाथार्थः ॥७०॥ अथ द्वितीयविकल्पस्वरूपमाह—

बीए निअमा तित्थं जिणपडिमानिस्सिअं न इअरंपि। जो जंमि जंमि मग्गे तिव्वमई तंमि सो पुज्जो ॥७१॥

यदि स्वस्वमते तीव्रमतिरेव बहुवित्तव्ययेन धर्मबुद्ध्या धर्मकार्यं करोतीति द्वितीयविकल्पस्तर्हि नियमाज्जिनप्रतिमानिश्रितं तीर्थं—जिनशासनं, जिनप्रतिमाभक्तिमदेव जैनतीर्थमित्यर्थः, न इतरदपि—जिनप्रतिमोत्थापनयुक्तमपि तीर्थं भवेत्, तत्र हेतुमाह—'जो जंमि'त्ति यो यस्मिन् २ मार्गे तीव्रमतिः स्यात्तस्मिन् मार्गे पूज्यः, जैनप्रवचने तीव्रमतिरेव प्रासादादिकं कारयत्यतः स एव तीर्थे पूज्यो—मान्यः, तीर्थप्रधानो भवतीत्यर्थः, अत एव बहुवित्तव्ययेन शत्रुञ्जययात्रादिकारकः सङ्घपतिरिति बिरुदमुद्वहति श्रावकवर्गे, मुख्यत्वाभावे कथं सङ्घपतित्वमितिगाथार्थः ॥७१॥ अथोक्तं मुख्यत्वं गाथयैवाह—

तेणं उज्जिंताइसु जत्ताकरणेण संघवइबिरुअं। जत्ता भत्तपइण्णप्पमुहेसुवि पुण्णसड्ढाणं ॥ ७२ ॥

येन कारणेन स तीर्थपूज्यो भवति तेनैव कारणेनोज्जयन्तादिषु, आदिशब्दाच्छत्रुञ्जयाष्टापदादयोऽपि, यात्राकरणेन बहुवित्तव्ययेन संघसहितयात्राकरणेन सङ्घपतिबिरुदं लभत इति गम्यम्, अपि पुनरर्थे, यात्रा पुनर्भक्तप्रकीर्णप्रमुखेषु—भक्तप्रकीर्णकसारावलीप्रकीर्णकाचाराङ्गनिर्युक्तिशत्रुञ्जयमाहात्म्यप्रमुखे, अपिशब्दादध्यक्षसिद्धापि, पुण्यश्राद्धानां प्राचीनपुण्योदयावाप्तबहुधनव्ययौदार्यादिगुणनिधीनां श्रावकाणामेव, नेतरेषामुत्सूत्रमार्गपतितानामपि, यत्तु संप्रति केचिदुत्सूत्रमार्गाश्रिता अपि शत्रुञ्जययात्रादिकरणेन

मद्यपतित्वमात्मनः ख्यापयन्ति ते तदीयसाध्व्यादिसमुदायस्य तीर्थाभासवत् सङ्घपत्याभासा बोध्याः, तीर्थाभासाश्च सम्प्रति दिगम्बरादिपाशपर्यन्ताः प्रसिद्धनामानो दश, तेषां चाभासत्वं किंचित्पर्युषणादशशतके भणितं बोध्यं, तत्र भक्तप्रकीर्णके यथा–निअदव्वमपुव्वजिणिंदभवणजिणबिंबवरपइट्ठासु। विअरइ पसत्थ पुत्थय सुतित्थ तित्थयरपूआसु ॥१॥ (२७-३०६*) इति, आचाराङ्गनिर्युक्तिर्यथा–तित्थयराण भगवओ पवयणपावयणिअइसइड्ढीणं। अहिगमणनमणदरिसणकित्तणसंपूअणाथुणणा ॥१॥ जम्माभिसेअनिक्खमण चरणनाणुप्पया य निव्वाणे। दिअलोअभवणमंदरनंदीसरभोमनगरेसु ॥२॥ अट्ठावयमुज्जिंते गयग्गपयए अ धम्मचक्के अ। पासरहावत्तणयं चमरुप्पायं च वंदामि ॥३॥ (८-३३३, ३३४, ३३५ नि०) इतिश्रीआचाराङ्गे दर्शनभावनानिर्युक्तौ, एतट्टीका यथा–"दर्शनभावनार्थमाह–'तित्थयर'गाहा, तीर्थकृतां भगवतां प्रवचनस्य च–द्वादशाङ्गस्य गणिपिटकस्य तथा प्रावचनिनाम्–आचार्यादीनां युगप्रधानानां तथाऽतिशयिनां ऋद्धिमतां–केवलिमनःपर्यायावधिमच्चतुर्दशपूर्वविदां तथाऽऽमर्षौषध्यादिप्राप्तर्द्धीनां यदभिगमनं–गत्वा च नमनं नत्वा च दर्शनं तथा गुणोत्कीर्त्तनं संपूजनं गन्धादिना स्तोत्रैः स्तवनमित्यादिका दर्शनभावना, अनया हि दर्शनभावनयाऽनवरतं भाव्यमानया दर्शनशुद्धिर्भवतीति, इयं गाथा एतद्व्याख्यानं च लुम्पकमतनाशहेतुरिति विचिन्त्य प्रसङ्गतोऽभिहितम्, अथ प्रकृतमनुमतिमाह–'जम्माभिसेअ'गाहा 'अट्ठावय'गाहा, तीर्थकृतां जन्मभूमिषु तथा निष्क्रमणचरणज्ञानोत्पत्तिनिर्वाणभूमिषु तथा देवलोकभवनेषु मन्दरेषु तथा नन्दीश्वरद्वीपादौ भौमेषु च यानि शाश्वतानि चैत्यानि तानि वन्देऽहमिति द्वितीयगाथान्ते क्रियेति, एवमष्टापदे तथा श्रीमदुज्जयन्तगिरौ गजाग्रपदे दशार्णकूटवर्त्तिनि तथा तक्षशिलायां धर्मचक्रे तथा अहिच्छत्रायां पार्श्वनाथस्य धरणेन्द्रमहिमास्थाने, एवं रथावर्त्ते पर्वते वैरस्वामिना यत्र पादपोपगमनं कृतं, यत्र श्रीवर्द्धमानमाश्रित्य चमरेन्द्रेणो-

गुरुपरतंता अत्थो वित्तीए अण्णउत्थिआविक्खो । नारंभंऽवऽहिगिच्चा जिणपवयणधम्मकज्जेसु ।।७४।।

गुरुपारतन्त्र्याद्वृत्तौ–तट्टीकायामन्यतीर्थिकापेक्षोऽर्थः नारम्भमप्यधिकृत्य जिनप्रवचनधर्मकार्येषु, तुर्गम्यः, न तु जैनप्रवचने यानि धर्मकृत्यानि तेषु य आरम्भस्तमप्यङ्गीकृत्य "सव्वे पाणा भूआ" इत्यादि सूत्ररचनेति भाव इतिगाथार्थः ॥७४॥ अथ जैनधर्मानुष्ठानारम्भमधिकृत्य नोक्तमित्यत्र व्याप्त्यैव समर्थयन्नाह—

तं नत्थि किंचि कज्जं हविज्ज जं सव्वहा वयाभावे । आयं वयं तुलिज्जा लाहभिलासित्ति ववहारो ॥७५॥

तत्किंचित्कार्यं नास्ति–लोके लोकोत्तरे च मार्गे तत्किमपि कार्यं नास्ति यत्सर्वथा व्ययाभावे सति स्यात्, यत्किमपि महदणु वा कार्यं कुर्वतः कार्यानुसारी व्ययो भवत्येव, नह्यचारितायाः धेन्वा दुग्धाकाङ्क्षी समीहितफलभाग् भवेद्, आस्तामन्यत्, सुवर्णस्यापि क्रयविक्रयादिव्यवहारे कषोपलसंघर्षणादिना किंचिन् न्यूनत्वभवनं विक्रेत्रादीनां सम्मतमेव, न पुनस्तावन्मात्रव्ययभीत्या तथाव्यवहारासंभवः, संभावितलाभापेक्षया तस्याल्पत्वाल्लाभोऽपि तत्पाते यावानवतिष्ठते तावानेव सर्वसम्मतः, तस्मात्किं कर्तव्यमित्याह–'आयं'ति लाभाभिलाषी–लाभार्थी आयं–लाभं व्ययं च–तदपगमं तोलयेत्–तुलायामारोपयेत्, तुलारोपितं हि वस्तु गुरुलघ्वादिनिर्णयारूढं भवति तथाऽयमपि कियान् व्ययः संपन्नः ? कियांश्चायः ? एवं चायाद्व्ययः पात्यते यदुद्धरति तल्लाभो मन्यते, नो चेदुभयाभावः, यदि मूलादपि किंचिदादाय याति तदा मूलक्षितिः, आद्यो विकल्पः शोभनो, नान्त्यो, तथैव जगद्व्यवहारादित्यमुना प्रकारेण जगद्व्यवहारः, अयं भावः–यथा विक्रेतव्यवस्तुनः षोडशोऽंशो लाभस्तस्यापि षोडशोऽंशो व्ययः, शेषास्तु षोडशांशस्य पञ्चदशांशा लाभीभूताः मनिर्व्वाहहेतव इति जगत्प्रवृत्तिः, न पुनर्लाभांशस्यापि षोडशोऽंशो यास्यतीति भीत्या तद्व्यापारो न उचितः

एवं धर्मानुष्ठानमात्रेऽपि बोध्यं, यतो यावत्कायिकव्यापारस्तावदारम्भादिसंभवः, न च तद्भीत्या संयमाद्यनुष्ठानमपि परिहर्त्तव्यं, तत्राप्यायव्ययतुलना कर्त्तव्या, नहि कोऽपि सुवर्णफलिकां खरशानमारोप्य पादोनविधानादिना परीक्षते, मूलस्यापि संक्षयात्, यत्तु धर्मानुष्ठानेऽपि स्वल्पव्ययानल्पायादिविवेचनं तदग्रे 'एवं जिणिंदे'त्यादिगाथायां दिग्मात्रेण करिष्यते इति गाथार्थः ॥७८॥ अथारम्भादिसंभवे मिथ्यादृक्तुल्यतां परिहर्तुं गाथामाह—

पडिसेहिअ जीववहं जे अणुजाणंति तंपि पच्चक्खं। ते अण्णउत्थिआ खलु सतित्थिआनण्णगइ कज्जं ॥७९॥

ये जीववधं प्रतिषिध्य तमपि–जीवघातमपि प्रत्यक्षं–साक्षादनुजानन्ति–अनुज्ञां ददति, न पुनरनन्यगत्याऽर्थापत्त्येति, ते खलु–निश्चितमन्यतीर्थिकाः शाक्यादयो बोध्याः, यथा 'न हिंस्यात्सर्वभूतानी'ति भूतवधं प्रतिषिध्य 'षट् शतानि नियुज्यन्ते, पशूनां मध्यमेऽहनि। अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभि॥१॥'रित्यादि, स्वतीर्थिका–जैनयतयस्त्वनन्यगत्या कार्यमुपदिशन्ति, अयं भावः–कार्यं त्ववश्यं कर्त्तव्यं, प्रकारान्तरेण च गतिर्नास्ति, तस्मात् तेनैव विधिना युक्तमिति जैनाः कार्यं धर्मानुष्ठानादिकं भणन्ति, यथाऽनन्तेनापि कालेन दुर्लभं मनुजायुरवश्यं रक्षणीयं, तद्विना पुरुषार्थासाधनात्, आयुरप्यनन्यगत्या भोजनादिविधिनैव रक्षितुं शक्यते, सोऽपि विधिस्तथा युक्तो यथा मृतः सन् सुगतौ याति, यदुक्तं–"जाएण जीवलोए दो चेव नरेण सिक्खिअव्वाइं। कम्मेणं जेण जीवइ जेण मुओ सग्गइं जाइ"॥१॥त्ति, स चाहारोऽभक्ष्यभक्षणादित्यागेनैव युक्तोऽन्यथा सुगतिगमनासंभवाद्, भक्ष्येण शाल्यादिनाऽन्यगतेर्विद्यमानत्वाच्च, तत्रापि निरवद्येनैवान्यगतेर्विद्यमानत्वात्सति सामर्थ्ये साधुवृत्त्यैव स्थेयं, तत्र चावद्यगन्धस्याप्यभावाद्, यदागमः–"अहो जिणेहिं असावज्जा, वित्ती साहूण देसिआ। मुक्खसाहणहेउस्स साहुदेहस्स धारण॥१॥"त्ति दशवै०, इत्येवंरूपे-

पानन्यगत्याऽर्हता जनैः प्रतीयमानं सकारणं कार्यमुपदिशन्तीतिगाथार्थः ॥७६॥ अथ तथोपदेशे दृष्टान्तमाह—

जह एगं चिअ पायं जलंमि इच्चाइवयणरयणाए। नइउत्तारो भणिओ न य जलजीवेवि हिंसिज्जा ॥७७॥

यथेत्युदाहरणोपन्यासे "एगं पायं जले किच्चा एगं पायं थले किच्चे"त्यागमवचनादेकं पादं जले एकं चाकाशे कृत्वेत्यादिवचनरचनया नद्युत्तारो भणितो, जिनेन्द्रैरिति गम्यं, न पुनर्जलं विलोडयन्नुत्तरेत्, जलादिजन्तूनां बाधासंभवाद्, एवमप्युत्तरणमनन्यगत्यैव, मा चैवं-प्रव्रजितेन साधुना नैकत्र स्थेयं, कुलादिप्रतिबन्धेन बहुदोषसंभवात्, किंत्ववश्यं ग्रामादिषु विहर्त्तव्यमेव, तत्रान्तरागतनद्युत्तारे सत्येव स्यात्, ततो नद्युत्तारोऽवश्यं कर्त्तव्यः, तत्र जन्तूनां बाधाहेतुरयतना परिहर्त्तव्यैव, यतनालक्षणाया अन्यगतेर्विद्यमानत्वाद्, यदि निम्नोदका नदी स्यात्तदाऽपि शनैः शनैर्यतनयोत्तरेत्, न पुनरयतनयाऽपीतिरूपेण नद्युत्तारो भणितो दृष्टान्ततयाऽवगन्तव्यः, न च जलजीवानपि हिंस्यादित्येवंरूपेण साक्षादन्यगतौ विद्यमानायामुपदिशन्ति, अन्यतीर्थिकास्तु 'न हिंस्यात्सर्वभूतानी'ति भणित्वाऽपि 'षट् शतानि नियुज्यन्ते'इत्यादिसंख्याभणनपुरस्सरं जीवहिंसां प्रतिपादयन्ति, तार्किका अपि हिंसात्वेन पक्षीकृत्याधर्माभावं साधयन्ति, तथाहि—यागीया पशुहिंसा नाधर्मसाधनं विहितत्वात्संध्यावन्दनादिवदिति, न चैवं जैनप्रवचने विरुद्धवादित्वमास्तामन्यत्र, प्रायः चैत्यसाध्वादिप्रत्यनीकेष्वपि हिंसाभाषाया अनुपदिष्टत्वाद्, यदागमः—"साहूण चेइआण य पडिणीअं तह अवण्णवायं च। जिणपवयणस्स अहिअं सव्वत्थामेण वारेइ॥१॥त्ति ( २४२ उप. ) अत्र सर्वबलं-स्वप्राणव्यपरोपणं यावदिति व्याख्यातं, यद्यपि पुलाकश्चक्रवर्त्तिसैन्यमपि चूरयेदित्याद्युक्तं तत्र क्वचित्सङ्घादिकृत्ये सामर्थ्यं दर्शितम्, अनन्यगत्या च कुर्यादपि, परं गत्यन्तरे विद्यमाने तथोपदेशो न भवति, कृते च प्रायश्चित्तप्रतिपत्तिरपि, ननु यत्र प्रायश्चित्तप्रतिपत्तिस्तत्कथं क्रियते चेदुच्यते,

सङ्घादिप्रत्यनीकत्वानिवारणे बोधिनाशादनन्तरसंसारित्वमपि स्याद्, तथा कृते च प्रायश्चित्तप्रतिपत्त्या सुलभबोधिता महानिर्जरा चेति तथा प्रवृत्तिर्युक्तिमत्येव, ननु तर्हि जिनोपदेशः कथं नेति चेत्साक्षात्तथोपदेशाभावेऽपि कथंचित्तथोपदेशस्याभीष्टत्वात्, यथा "अवण्णवाई पडिहणित्ता भवति"त्ति दशाश्रुतस्कन्धे सूरिसंपद्वर्णनाधिकारे, एतच्चूर्णिर्यथा-"जो अवण्णं वदति तं पडिहण्णाति"त्ति तथा "अविहिकया वरमकयं असूअवयणं वयंति गीअत्था । जम्हा पायच्छित्तं अकए गुरुअं कए लहुअं॥१॥"ति, अत्राविधेरुपदेशाभावेऽप्यकरणापेक्षयाऽल्पप्रायश्चित्तभणनेन अर्थात् उपदेशः संपन्न एव, एवं माच्छ्याद्युपद्रवे कल्पायामपि पञ्चेन्द्रियव्यपरोपणायामनन्यगतिरेव शरणं, न पुनस्तत्रान्यतीर्थिकवत् हन्तव्य इत्याद्युपदेश इतिगाथार्थः ॥७७॥ अथ प्रागुक्तं दृष्टान्तं प्रकृते योजयति—

एवं जिणिंदपडिमापूआपमुहंपि धम्मिअं किच्चं । कायव्वं कुसलेहिं भणइ जिणो न उण हिंसंपि ॥७८॥

एवं विहारकरणे नद्युत्तारादिदृष्टान्तेन जिनेन्द्रप्रतिमापूजाप्रमुखं धार्मिकं कृत्यं कुशलैः-निपुणैः कर्त्तव्यमिति भणति जिनः-अर्हन्, न पुनर्हिंसामपि, एतावन्तोऽसुमन्तो हन्तव्या इत्यादिरूपेण हिंसोपदेशं न ददातीत्यक्षरार्थः। भावार्थस्त्वयं-नद्युत्तारे दृश्यमानायामपि जलादिजीवविराधनायां विहारकरणे नद्युत्तारे च यथा जिनाज्ञा यथा वा वर्षाकालं स्थितानामपि साधूनां ज्ञानाद्यर्थं ग्रामानुग्रामविहारकरणे जिनाज्ञा, यदागमः-"वासावासं पज्जोसविआणं णो कप्पति निग्गंथाण वा २ गामाणुग्गामं दूइज्जित्तए, पंचहिं ठाणेहिं कप्पति, तं०-णाणट्ठयाए दंसणट्ठयाए चरित्तट्ठयाए आयरिअउवज्झाए वा से विसुंभेज्जा आयरिअउवज्झायाण वा बहिआ वेआवच्चकरणाए"त्ति श्रीस्थानाङ्गे (४१२) तथा ज्ञानाद्यर्थं श्रावकाणामपि सत्यामप्यनन्यगत्या जीवविराधनायां जिनभवनविधापनादि यावज्जिनपूजादिषु जिनाज्ञा, अनन्यगतिस्त्वेवं-मुख्यवृत्त्या जिनोपदिष्टं साधुमार्गं प्रतिपत्तुमशक्तेन धर्मं चिकीर्षुणा

श्रावकेण धर्मस्त्ववश्यं कर्त्तव्य एव, स चानन्यगत्या जिनभवनादिविधापनादिलक्षणो द्रव्यस्तव एव, यदागमः—"अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो। संसारपयणुकरणे दव्वथए कूवदिट्ठंतो॥१॥"त्ति(आव० भा०)स च द्रव्यस्तवः पृथिव्याद्यारम्भमन्तरेणासंभवीत्यनन्यगत्या तदारम्भोऽल्पव्ययकल्पः, ज्ञानादिलाभस्तु महालाभकल्पः, ननु तत्र ज्ञानादिलाभः कथमितिचेच्छृणु, चैत्यनमस्कृतिनिमित्तमागता हि साधवो धर्मदेशनादिकमपि प्रयच्छन्ति, ततो ज्ञानादिलाभः, प्रतिमादर्शनात्तीर्थकरस्मरणेनार्द्रकुमारेरिव जातिस्मरणेन वा दर्शनलाभः, चारित्रलाभस्तु साधूपदेशाज्जातिस्मरणादिना वा प्रतीत एव, अतस्तत्र पृथिव्याद्यारम्भोऽल्पः, सोऽपि सदारम्भतयाऽष्टकादौ श्रीहरिभद्रसूरिभिर्भणितः, यतो गृहस्थो ह्यारम्भपरिग्रहादिध्यानकलित एव स्यात्, तत्रापीन्द्रियपोषनिमित्तमारम्भोऽसदारम्भो, जिनपूजादिधर्मध्यानसंयुक्तस्तु सदारम्भ इति स्वयमेव पर्यालोचय, आयव्ययतुलनया ज्ञानादिलाभापेक्षया पृथिव्याद्यारम्भसंभवं पातकमकिञ्चित्करमेव,यस्तु पृथिव्याद्यारम्भपातकभीत्या जिनपूजादिकं परित्यजति स च गद्याणकव्ययभीत्या मेरुगिरिसन्निभं सुवर्णपुञ्जं परिहरतीतिबोध्यम्, एतेनानन्यगत्याऽप्यारम्भो न युक्त इति शङ्कापि न्युदस्ता, यतो यदि प्रत्याख्यातसर्वसावद्यानामपि साधूनां ज्ञानाद्यर्थमनन्यगत्या पृथिव्याद्यारम्भो न प्रत्याख्यानभङ्गहेतुः, नद्याद्युत्तरणानन्तरं पुनर्महाव्रतारोपणापत्तेः, किंतु निर्जराहेतुरिति जिनाज्ञा, कथं तदप्रत्याख्यातपृथिव्याद्यारम्भाणां श्रावकाणां जिनभवनादिनिर्म्मापणादौ पृथिव्याद्यारम्भसंकल्पो नानल्पार्थहेतुरपि, अत एवान्यत्रारम्भवतो जिनोपदिष्टधर्मकृत्येष्वारम्भादिविकल्पो बोधिबीजनाशहेतुः, यदुक्तं—"अण्णत्थारम्भवओ धम्मेऽणारम्भओ अणाभोगो। लोए पवयणखिंसा अबोहिबीअंति दोसा य॥१॥"(१५६)इति श्रीहरिभद्रसूरिकृतपूजापञ्चाशके; एतद्वृत्तिर्यथा अन्यत्र-अधिकृतस्नानादेरपरत्र-विविधदेहगेहादिकर्मस्वारम्भवतो-भूतोपमर्दकारिणः सतो देहिनो

धर्मे–धर्मविषये जिनार्चनादिनिमित्तमित्यर्थः "अणारम्भओ"त्ति अनारम्भ एवानारम्भको–भूतोपमर्दपरिहारः, किमित्याह–'अनाभोगो' ज्ञानाभावो वर्त्तते, अनाभोगकार्यत्वादनारम्भस्य, अथवा अनारम्भतः–अनारम्भादनाभोगोऽवसीयते, ज्ञानाभाव एव हि शास्त्रानुगतोऽपि जिनार्चनादिगत आरम्भोऽकृत्यतयाऽवभासते, तथा 'लोके' शिष्टजने तन्मध्य इत्यर्थः प्रवचनखिंसा–जिनशासनाश्लाघा पूजाविधानाप्रतिपादनपरं जिनशासनम्, अन्यथा कथमार्हताः शौचादिव्यतिरेकेणापि जिनं पूजयन्तीत्यादिरूपा भवति, सा चाबोधेः–जन्मान्तरे जिनधर्माप्राप्तेः बीजमिव बीजं–हेतुरबोधिबीजमित्येतावनन्तरोक्तौ दोषौ–दूषणे भवतः, चशब्दोऽनाभोगापेक्षया समुच्चयार्थः, अथवा दोषाय भवति–धर्माप्राप्तिलक्षणाय तदबोधिबीजं संपद्यत इतिशब्दः समाप्तौ, ततो द्रव्यतः स्नानेन शुद्धवस्त्रेण जिनपूजा विधेयेति गाथार्थः॥ इतिश्रीपञ्चाशकवृत्तौ। ननु भवतु श्रावकाणां जिनपूजाविधानादावारम्भः, परं प्रत्याख्यातसर्वसावद्यानां साधूनां तु पृथिव्याद्यारम्भे कथं न प्रत्याख्यानभङ्ग इति चेदुच्यते, जिनाज्ञयाऽवश्यकर्त्तव्यतामापन्ने साधूचिते विहारादिकर्मणि यतनया तद्विधानैकचित्तानां साधूनां भावतः पृथिव्याद्यारम्भपरिणामाभावाद्द्रव्यत एव तदारम्भः, स च न प्रत्याख्यानभङ्गहेतुः, अन्यथा प्रतिधर्मानुष्ठानं पुनः पुनः प्रव्रज्योच्चारणं प्रसज्येत, तस्माद्द्रव्यत आरम्भादिरल्पलेपरजःस्पर्शमात्रकल्पस्तस्यापाकृतिरीर्यापथिकापठनमात्रसाध्येतिकृत्वा जिनैरीर्याप्रथिकाप्रतिक्रमणं नद्याद्युत्तारादावुपदिष्टं, यदागमः–"हत्थसयादागंतुं गंतुं च मुहुत्तगं जहिं चिट्ठे। पंथे वा वच्चंते नइसंतरणे पडिकमइ॥१॥त्ति श्रीआवश्यकनिर्युक्तौ,निर्युक्त्यनङ्गीकारे ईर्यापथिकाया अप्यभावः,निर्युक्तिव्यतिरिक्ते सूत्रे नद्युत्तारानन्तरमीर्याया अनुक्तत्वात्, किंच–यदि जिनोपदिष्टधर्मानुष्ठानेऽप्यनन्यगत्याऽप्यारम्भसंभवे प्रत्याख्यानभङ्गकल्पनापि क्रियते तर्हि स्थूलप्राणातिपातविरतानां श्रावकाणामप्यब्रह्मसेवने "मेहुणसन्नारूढो नवलक्खे हणइ सुहुमजीवाणं"

श्रावकेण धर्मस्त्ववश्यं कर्त्तव्य एव, स चानन्यगत्या जिनभवनादिविधापनादिलक्षणो द्रव्यस्तव एव, यदागमः—"अकसिणपवत्त-
गाणं विरयाविरयाण एस खलु जुत्तो। संसारपयणुकरणे दव्वथए कूवदिट्ठंतो॥१॥"त्ति(आव० भा०)स च द्रव्यस्तवः पृथिव्याद्यारम्भ-
मन्तरेणासंभवीत्यनन्यगत्या तदारम्भोऽल्पव्ययकल्पः, ज्ञानादिलाभस्तु महालाभकल्पः, ननु तत्र ज्ञानादिलाभः कथमितिचेच्छृणु,
चैत्यनमस्कृतिनिमित्तमागता हि साधवो धर्मदेशनादिकमपि प्रयच्छन्ति, ततो ज्ञानादिलाभः, प्रतिमादर्शनात्तीर्थंकरस्मरणेनार्द्रकुमा-
देरिव जातिस्मरणेन वा दर्शनलाभः, चारित्रलाभस्तु साधूपदेशाज्जातिस्मरणादिना वा प्रतीत एव, अतस्तत्र पृथिव्याद्यारम्भोऽल्पः,
सोऽपि सदारम्भतयाऽष्टकादौ श्रीहरिभद्रसूरिभिर्भणितः, यतो गृहस्थो ह्यारम्भपरिग्रहादिध्यानकलित एव स्यात्, तत्रापीन्द्रि-
यपोषनिमित्तमारम्भोऽसदारम्भो, जिनपूजादिधर्मध्यानसंयुक्तस्तु सदारम्भ इति स्वयमेव पर्यालोचय, आयव्ययतुलनया ज्ञानादिला-
भाद्यपेक्षया पृथिव्याद्यारम्भसंभवं पातकमकिञ्चित्करमेव,यस्तु पृथिव्याद्यारम्भपातकभीत्या जिनपूजादिकं परित्यजति स च गद्याण-
कव्ययभीत्या मेरुगिरिसन्निभं सुवर्णपुञ्जं परिहरतीतिबोध्यम्, एतेनानन्यगत्याऽप्यारम्भो न युक्त इति शङ्कापि व्युदस्ता, यतो यदि
प्रत्याख्यातसर्वसावद्यानामपि साधूनां ज्ञानाद्यर्थमनन्यगत्या पृथिव्याद्यारम्भो न प्रत्याख्यानभङ्गहेतुः, नद्याद्युत्तरणानन्तरं पुनर्महा-
व्रतारोपणापत्तेः, किंतु निर्जराहेतुरिति जिनाज्ञा, कथं तदप्रत्याख्यातपृथिव्याद्यारम्भाणां श्रावकाणां जिनभवनादिनिर्म्मापणादौ
पृथिव्याद्यारम्भसंकल्पो नानल्पार्थहेतुरपि, अत एवान्यत्रारम्भवतो जिनोपदिष्टधर्मकृत्येष्वारम्भादिविकल्पो बोधिबीजनाशहेतुः,
यदुक्तं—"अण्णत्थारम्भवओ धम्मेऽणारम्भओ अणाभोगो। लोए पवयणखिंसा अबोहिबीअंति दोसा य॥१॥"(१५६)इति श्रीहरिभद्र-
सूरिकृतपूजापञ्चाशके; एतद्वृत्तिर्यथा अन्यत्र-अधिकृतस्नानादेरपरत्र-विविधदेहगेहादिकर्मस्वारम्भवतो-भूतोपमर्दकारिणः सतो देहिनो

धर्मे–धर्मविषये जिनार्चनादिनिमित्तमित्यर्थः "अणारम्भओ"त्ति अनारम्भ एवानारम्भको–भूतोपमर्दपरिहारः, किमित्याह–'अनाभोगो' ज्ञानाभावो वर्त्तते, अनाभोगकार्यत्वादनारम्भस्य, अथवा अनारम्भतः–अनारम्भादनाभोगोऽवसीयते, ज्ञानाभाव एव हि शास्त्रानुगतोऽपि जिनार्चनादिगत आरम्भोऽकृत्यतयाऽवभासते, तथा 'लोके' शिष्टजने तन्मध्य इत्यर्थः प्रवचनखिंसा–जिनशासनाश्लाघा पूजाविधानाप्रतिपादनपरं जिनशासनम्, अन्यथा कथमार्हताः शौचादिव्यतिरेकेणापि जिनं पूजयन्तीत्यादिरूपा भवति, सा चाबोधेः–जन्मान्तरे जिनधर्माप्राप्तेः बीजमिव बीजं–हेतुरबोधिबीजमित्येतावनन्तरोक्तौ दोषौ–दूषणे भवतः, चशब्दोऽनाभोगापेक्षया समुच्चयार्थः, अथवा दोषाय भवति–धर्माप्राप्तिलक्षणाय तदबोधिबीजं संपद्यत इतिशब्दः समाप्तौ, ततो द्रव्यतः स्नानेन शुद्धवस्त्रेण जिनपूजा विधेयेति गाथार्थः॥ इतिश्रीपञ्चाशकवृत्तौ। ननु भवतु श्रावकाणां जिनपूजाविधानादावारम्भः, परं प्रत्याख्यातसर्वसावद्यानां साधूनां तु पृथिव्याद्यारम्भे कथं न प्रत्याख्यानभङ्ग इति चेदुच्यते, जिनाज्ञयाऽवश्यकर्त्तव्यतामापन्ने साधूचिते विहारादिकर्मणि यतनया तद्विधानैकचित्तानां साधूनां भावतः पृथिव्याद्यारम्भपरिणामाभावाद्द्रव्यत एव तदारम्भः, स च न प्रत्याख्यानभङ्गहेतुः, अन्यथा प्रतिधर्मानुष्ठानं पुनः पुनः प्रव्रज्योच्चारणं प्रसज्येत, तस्माद्द्रव्यत आरम्भादिरल्पलेपरजःस्पर्शमात्रकल्पस्तस्यापाकृतिरीर्यापथिकापठनमात्रसाध्येतिकृत्वा जिनैरीर्यापथिकाप्रतिक्रमणं नद्याद्युत्तारादावुपदिष्टं, यदागमः–"हत्थसयादागंतुं गंतुं च मुहुत्तगं जहिं चिट्ठे। पंथे वा वच्चंते नइसंतरणे पडिक्कमइ॥१॥त्ति श्रीआवश्यकनिर्युक्तौ, निर्युक्त्यनङ्गीकारे ईर्यापथिकाया अप्यभावः, निर्युक्तिव्यतिरिक्ते सूत्रे नद्युत्तारानन्तरमीर्याया अनुक्तत्वात्, किंच–यदि जिनोपदिष्टधर्मानुष्ठानेऽप्यनन्यगत्याऽप्यारम्भसंभवे प्रत्याख्यानभङ्गकल्पनापि क्रियते तर्हि स्थूलप्राणातिपातविरतानां श्रावकाणामप्यब्रह्मसेवने "मेहुणसन्नारूढो नवलक्खे हणइ सुहुमजीवाणं"

इति वचनात् त्रसविराधनाया विद्यमानत्वात्प्रत्याख्यानभङ्गप्रसक्तौ प्रवचनेऽत्यन्तमासमञ्जस्यमापद्येत, तस्माद्यत्किंचिदेतत्, न चैव-मब्रह्मसेवायां त्रसविराधनापातकमपि न भविष्यतीति शङ्कनीयम्, अब्रह्मसेवाया अप्यधर्मरूपत्वेन जिनैः प्रतिपिद्धत्वात्, अधर्मे च क्रिय-माणे यद्यप्यनन्यगत्या प्रत्याख्यानभङ्गो न स्यात्तथापि तज्जन्यपातकस्यावश्यं भावात्, परं प्रत्याख्यानिनां सम्यग्दृष्टित्वावश्यंभावात् पापकरणे सशङ्कितत्वेन तथाविधक्लिष्टपरिणामाभावान्मन्दाध्यवसायाच्चाल्पबन्धः, यदुक्तं—"सम्मद्दिट्ठी जीवो जइवि हु पावं समा-यरे किंची। अप्पो से होइ बंधो जेण न निद्धंधसं कुणइ॥१॥"त्ति, अत्र सम्यग्दृष्टित्वेन सांसारिककृत्येष्वप्यल्पो बन्धो भणितः, कथं तर्हि जिनपूजादिष्वपि कर्मबन्धोऽशुभो वा भूयात् वा भवेदिति प्रसङ्गतो बोध्यम्, एतेनानन्यगत्यारम्भादिः सर्वत्रापि न पापहेतु-र्भविष्यतीति शङ्कापि निरस्ता, धर्मकृत्यरतानां धर्ममुद्दिश्य यतनया तथा प्रवर्त्तने द्रव्यत आरम्भाद्यभ्युपगमात्, नन्वेवं पशुवध-मन्तरेण यागाद्यसंभवादनन्यगत्यैव पशुवधे सिद्धे जिनपूजातुल्यतैव यागेऽपीतिचेन्मैवं, तत्रानन्यगतेरेवाभावात्, यतोऽनन्यगत्या-ऽप्यारम्भो धर्मकृत्येष्वेव द्रव्यारम्भतयाऽभ्युपगतः, न पुनरधर्मकृत्येष्वपि, अन्यथा मृगादिवधमन्तरेण मृगयाया अप्यसंभवात् मृग-वधोऽपि द्रव्यवधतयाऽभ्युपगन्तव्यः प्रसज्येत, तेन धर्मे वस्तुगत्या यो धर्मः स च सिध्यन् यदनादाय न सिध्यति तदनन्यगत्या सिद्धं बोध्यं, तच्च जैनप्रवचनादन्यत्र न संभवत्येव, यतः शाक्यादिषु यागादिकृत्यानामपि वस्तुगत्या न धर्मत्वं, कुतोऽनन्यगतिरपि?, तथाहि—सर्वेष्वपि धर्मानुष्ठानेषु पारमेश्वरं ध्यानं बीजाभं, तच्च तदाकृतिपरिज्ञानमन्तरेणासंभवीतिकृत्वा जैनप्रवचने जिनेन्द्रे विद्य-माने तद्द्रष्टॄणां साक्षात्संपर्के जिनेन्द्रशरीरमेव जिनेन्द्रध्यानहेतुः, कालदेशादिव्यवधाने च तत्प्रतिकृतिरेव, सा च प्रतिमा प्रशस्त-पार्थिवद्रव्यमन्तरेणासंभविन्येवेति तत्प्रतिमोपयोगितावन्मात्रपार्थिवग्रहणमनन्यगत्यैव सिद्धं, पूजाऽपि प्रशस्तस्रक्चन्दनादिसुगन्ध-

शुभवस्तुजातमन्तरेणासंभविनीत्यनन्यगत्यैव पुष्पादिसचित्तद्रव्योपयोगः, न च तथा यागे पशुवधोऽनन्यगत्या सिद्धः, यतः स पशुवधः किमभीष्टदेवतामूर्त्त्यर्थं किंवा तत्पूजाद्यर्थं उत सांसारिकसुखप्राप्त्यर्थमथवा देवविशेषतुष्ट्यर्थं मोक्षार्थं वा ?, नाद्यः प्रत्यक्षबाधात्, नहि कोऽपि पशुचर्मास्थिमांसादिद्रव्येणाभीष्टदेवतामूर्त्तिं कुर्वाणो दृष्टः श्रुतो वा, किंतु जैनवत् पार्थिवद्रव्येणैव, नापि द्वितीयस्तादृगशुभाशुचिद्रव्येण देवपूजाया असंभवात् तथा प्रवृत्तेरप्यभावाच्च, हरिहरब्रह्मादिमूर्त्तीनां पूजाया अपि स्रक्चन्दनादिनैव दृश्यमानत्वात्, नापि तृतीयो विकल्पो जल्पनार्हः, यागे हि सांसारिकसुखप्राप्त्यर्थं क्रियमाणे मृगयावद्यागोऽपि संपन्नः, व्याधेन मृगयायां मृगादिवधोऽपि सांसारिकसुखप्राप्त्यर्थमेव क्रियते, चतुर्थे यस्य देवविशेषस्य निमित्तं हता एव पशवस्तुष्टिहेतवो भवन्ति, स च देवविशेषो मनुष्यजातिष्विव देवजातिषु व्याधचण्डालाद्यधमजनकल्पः, अत एव हरिहरदिवाकरादिमूर्त्तीनां पुरस्तान्न पशुवधस्तेषामपि सम्मतः, तन्मतेऽपि विष्णुप्रभृतीनां देवेपूक्तत्वात्, तस्मात्तस्य तुष्टिनिमित्तं हताः पशवो महानेवाधर्मोऽतो यागोऽपि तज्जन्यो नरकादिहेतुरेवेति कथं तदर्थं हताः पशवोऽनन्यगत्येत्याद्युक्तं सम्यग् ?, नापि पञ्चमो 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिवाक्यैरेव यागस्य मोक्षसाधनत्वेनानभ्युपगमात्, नन्वास्तां यागः, परं यथाऽन्यतीर्थिकैः स्वस्वाभिमतहरिहरदिवाकरलम्बोदरादिदेवानां प्रासादप्रतिमापूजादिकं पृथिव्याद्यारम्भेणैव क्रियते तथा जैनैरपि जिनेन्द्राणां प्रासादप्रतिमापूजादिकं विधीयते, तथा च कोऽनयोर्विशेष इति चेद् अहो भ्रान्तत्वं भवतः, यतो जिनेन्द्रमूर्त्तिर्जिनेन्द्रविकल्पेन कृता सती जिनेन्द्रस्मृतिहेतुः, हरिहरादिमूर्त्तिस्तु तद्विकल्पनेन निर्म्मापिता तेषामेव स्मृतिहेतुरित्येवं महत्यन्तरे सत्यपि विशेषाभावं पश्यसि, किंच—विशेषाभावोऽपि सर्व्वप्रकारेण साधर्म्यादुत चैतन्यराहित्यपार्थिवद्रव्यनिष्पन्नत्वपुष्पादिपूज्यत्वादिलक्षणेन केनचिदन्यतमेन धर्मेण वा ?, आद्ये प्रत्यक्षबाधात्, नामा-

कृत्यादिभिर्भेदस्याध्यक्षसिद्धत्वाद्, द्वितीये देवनारकयोरप्यैक्यापत्तेः, वैक्रियशरीरावधिमत्त्वाद्यनेकधर्मैः साधर्म्यात्, तथा शैवजैन-योरप्यैक्यमापद्येत, देवगुरुधर्मश्रद्धानान्नादिभोजनविधानवस्त्रालङ्कारादिपरिधानाद्यनेकधर्मैः साधर्म्यात्, ननु शैवानां हरिहरादिषु देवत्वेन श्रद्धानं गुरुत्वेन च तापसब्राह्मणादिषु धर्मस्तु तापसाद्युपदिष्टहरिहरादिपूजाद्यनुष्ठानलक्षणः जैनानां चार्हन् देवः सुसाधुर्गुरुर्धर्मश्च केवलिभाषित इति कथमुभयेषां साम्यमिति चेत् चिरं जीव, अत्रापि कथंचित्साम्येऽपि नामाकाराद्यनेकधर्मैर्भेदे सति कुतः समतागन्धोऽपि ?, अन्यथा चतुर्णामपि साध्वादीनामैक्यापत्तेः पञ्चेन्द्रियत्वमनुजत्वसम्यग्दृष्टित्वाद्यनेकधर्मैः साधर्म्याद्, एवं जगदुदरवर्त्तिनां सर्वेषामपि जीवाजीवादिवस्तूनामन्योऽन्यं कथंचित्साधर्म्यस्याव्यभिचारादविवेकापत्त्या जगद्व्यवस्थाविलोपः प्रसज्येत, स्त्रीत्वादिधर्मैर्भार्याभगिन्योरविशेषात्, तस्मादास्तामन्यत्र, प्रायः सर्वेषामप्यैक्ये कथंचिन्नामाद्यङ्कितेनापि भेदाभ्युपगमात्, तत्कथमिति चेच्छृणु, श्रीमहावीरनन्दिवर्द्धननृपयोः कुलं तावदेकमेव, परं तत्र श्रीनन्दिवर्द्धननृपस्य कुलं ज्ञातक्षत्रियनामकं गोत्रं च काश्यपमित्यादि, तथा श्रीनेमिनाथकृष्णवासुदेवयोः कुलं हरिवंशो गोत्रं च गौतमनाम्नेत्यादि संकथया श्रवणे च महाफलादि किमपि क्वापि नोक्तं, तदेव कुलगोत्रादिकं श्रीवीरनेमिनामाङ्कितं महाफलहेतुर्भवति, यदागमः—"तं महाफलं भो देवाणुप्पिआ! तहारूवाणं अरहंताणं नामगोअस्सवि सवणताए, किमंग पुण अभिगमणवंदणनमंसणपडिपुच्छणपज्जुवासणयाए" त्ति श्रीऔपपातिकोपाङ्गे (लोकनिर्गमाधिकारे) अत्रैवं विचारणीयम्—अहो धन्यमिदं गोत्रं यस्मिन् भगवान् श्रीमहावीरः समुत्पन्न इत्यादिरूपेण वचोभिराश्रवसेव्यनेकजनसमूहाकुलमपि कुलं प्रशंसितं, यदि महाफलहेतुर्भणितं तर्हि तीर्थकरनामाकारादिसंयुक्ता तीर्थकरस्मृतिहेतुश्च जिनप्रतिमा कथं न महाफलहेतुरिति नेत्रे निमील्य पर्यालोच्यं, किंच—लुम्पक एव रहोवृत्त्या प्रष्टव्यः—भो लुम्पक ! चित्रलिखितवृक्ष-

वृषभयोपित्तीर्थकृतां रूपाणि पश्यतां वृक्षादयः स्वस्वरूपेण स्थिता स्मृतिगोचरीभवन्ति न वा ?, नान्त्यः, प्रत्यक्षबाधेन वक्तुमशक्यत्वात्, प्रथमे विकल्पे चत्वार्यपि वृक्षादिरूपाणि क्रमेण चत्वारोऽपि साधवः पश्यन्तः कर्मबन्धमधिकृत्य सदृशा एव भण्यन्ते उत विसदृशा वा ?, प्रथमे जगद्व्यवस्थाभङ्गः, भगिनीभार्यादौ सदृशबुद्ध्या प्रवृत्तौ सर्वेऽपि पदार्था एकरूपतामापन्ना भवेयुः, तच्च आबालगोपाङ्गनादीनामप्यसम्मतम्, अथ विसदृशा इति द्वितीयविकल्पश्चेत्सिद्धं नः समीहितं, यतस्तत्र वैसदृश्ये बीजं तावत् तत्तद्वस्तूनां स्मृतिरेव, तथा च यद् यद्वस्तु यस्य यस्य वस्तुनः स्मृतिहेतुस्तत्तद्वस्तु कथंचित्तद्वदेव बोध्य, यथा साक्षात् सरागदृष्ट्या नारीनिरीक्षणं पापं तथा चित्रलिखितनारीनिरीक्षणमपि पापं, तद्दर्शनात्तत्स्मृतेः सर्व्वजनप्रतीतत्वाद्, अत एव साधूनां चित्रलिखितनार्या अपि निरीक्षणं निषिद्धं, यदागमः—"चित्तभित्तिं न निज्झाए, नारिं वा सुअलंकिअं। भक्खरंपि व दट्ठूणं, दिट्ठिं पडिसमाहरे॥१॥"त्ति (२९८*) श्रीदशवै०, किंच—यथा चित्रलिखितनार्या नारीस्मृतिर्न तथा वृक्षादीनां तीर्थकृतां वा स्मृतिर्भवति,स्वानुभवाबाधाद्, एवं तीर्थकरप्रतिमादर्शनान्न नारीप्रभृतीनां स्मरणं, किंतु तीर्थकृतामेव, तदपि यदि लुम्पकस्यानिष्टं तर्हि नियमात्तीर्थकरेण सह वैरित्वमेव बोध्यं, सति वा मित्रीभावे मित्रस्मृतिहेतूनां पुनः पुनरभ्यासविषयीकरणार्हत्वाद्, यदुक्तं—"दुर्जनविभवविपत्तिप्रियजनसंदेशितानि वाक्यानि। कथितान्यपि कथय सखे! पुनरपि तान्येव तान्येव ॥१॥" इत्येतेन काष्ठमय्याः स्त्रियाः किमपत्योत्पत्तिर्भवेदेवं जिनप्रतिमाया अपि धर्मो बोध्य इत्याद्यसंबद्धवाक्यं वदन् मुखरिर्लुम्पको निरस्तो बोध्यः, सर्वस्यापि वस्तुनः क्वचिदंशे सामर्थ्याभावेऽपि सर्वत्र सामर्थ्यराहित्यमेवेति नियमाभावात्, कनककामिन्यादिष्वेव व्यभिचारात्, नहि कनकं कामिनीवत्कार्यकारि स्यान्नवा कामिनी कनकवदिति स्वसाध्ये कार्ये चोभयोरपि सामर्थ्यम्, एवं चित्रलिखितनारी साक्षान्नारीवत्कार्यकारिणी न

स्यात् साक्षान्नारी च चित्रलिखितनारीवदिति, ननु चित्रलिखिता नारी साक्षान्नारीवत्कार्यकरी न स्यात्तद्युक्तं, परं साक्षान्नारी चित्रलिखितनारीवत् कार्यकरी न स्यात् तत्कथमिति चेच्छृणु, चित्रलिखिता हि नारी हर्षशोकादिरहिता भोजनपरिधानादिकमनिच्छन्ती स्थिरभावापन्ना गृहादिशोभाहेतुः कुशीलजनसकाशादप्यशङ्कनीया चेत्यादिरूपा, न चैवं साक्षान्नारीति, एवं जिनप्रतिमाऽपि धर्मोपदेशादावसमर्थापि मतिसमयपुण्यप्रकृतिबन्धनिदानतीर्थकृत्स्मृतिहेतुः यादृच्छिकसमयदर्शनाराधनपूजादिविषयः भावजिनापेक्षया बहुविधविध्याराधनीया च, यतः शक्रादयोऽपि जिनजन्मोत्सवादौ अष्टाह्निकामहस्तु नन्दीश्वरादावेव कुर्वन्ति, न पुनः साक्षात्तीर्थकरसमीपेऽपीति, तस्माद्यद्वस्तु येन स्वरूपेण यस्य कार्यस्य हेतुस्तत्तथैव श्रद्धेयं, न पुनर्वैपरीत्यमुद्भाव्योद्भ्रान्ताः कर्त्तव्या मुग्धजना इति गाथार्थः ॥७८॥ अथ लुम्पकः शङ्कते—

ननु नइउत्तारो खलु संखानिअओ अ इरिअसंजुत्तो। पूआ तव्विवरीआ अह आणातुल्लया तत्थ ? ॥७९॥

ननु भोः नद्युत्तारः खलु–निश्चितं संख्यानियतः, यदागमः–"णो कप्पइ णिग्गंथाण वा २ इमाउ उद्दिट्ठाओ गणिआओ वितंजिआओ पंच महण्णवाओ महानदीओ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा,तं०–गंगा १ जउणा २ सरऊ ३ एरावती ४ मही ५" (१-१२-४,। २-४-२८) इति स्थानाङ्गे (४१२) एतद्वृत्त्येकदेशो यथा "नो कप्पइ" इत्यादि, अस्य च पूर्वसूत्रेण सहायमभिसंबन्धः–पूर्वसूत्रे केवलिनिर्ग्रन्थगतं वस्तूक्तमिह तु छद्मस्थनिर्ग्रन्थगतं तदुच्यते,इत्येवमस्यारादर्भसूत्रादन्येषां च संबन्धिनां नो कप्पइ इत्यादीनां व्याख्या सुकरैव, नवरं 'नो कप्पइ' त्ति न कल्पन्ते–न युज्यन्ते, एकवचनस्य बहुवचनार्थत्वाद्, 'वत्थगंधमलङ्कार'मित्यादाविवेति, निर्गता ग्रन्थादिति निर्ग्रन्थाः–साधवस्तेषां तथा निर्ग्रन्थीनां–साध्वीनामिह प्रायस्तुल्यानुष्ठानत्वख्यापनाये-

पामपीति दर्शनार्थो वाशब्दः,'इमा'इति वक्ष्यमाणा नामतः प्रत्यासन्ना उद्दिष्टाः-सामान्यतोऽभिहिताः यथा महानद्य इति, गणिताः यथा पञ्चेति, व्यञ्जिताः-व्यक्तीकृता यथा गङ्गेत्यादि, विशेषणोपादानाद्वा यथा महार्णवा इति, तत्र महार्णव इव या बहूदकत्वात् महार्णवगामिन्यो वा यास्ता महार्णवा महानद्यो-गुरुनिम्नगाः अन्तः-मध्ये मासस्य द्विकृत्वो वा-द्वौ वारौ त्रिकृत्वो वा-त्रीन् वारान् उत्तरीतुं-लङ्घयितुं बाहुजङ्घादिना संतरितुं-सांगत्येन नावादिनेत्यर्थः, लङ्घयितुमेव, सकृद्वोत्तरीतुमनेकशः संतरीतुमिति, अकल्प्यता चात्मसंयमोपघातसंभवेन शबलचारित्रभावात्, यत आह-"मासब्भंतर तिन्नि अ दगलेवा उ करेमाणे"त्ति, उदकलेपो-नाभिप्रमाणजलावतरणमिति, इह सूत्रे कल्पभाष्यगाथा-"इमउत्ति सुतउत्ता १ उद्दिट्ठ नईउ २ गणिअ पंचेव ३। गंगादि वंजिआओ बहुदय महण्णवाओ अ ५ ॥ १ ॥ पंचण्हं गहणेणं सेसावि उ सूइआ महासलिला" इति, प्रत्यपायाश्चेह-"ओहार मगराईआ, घोरा तत्थ उ सावया। सरीरोवहिमाईआ,णावतेणा व कत्थइ॥१॥"त्ति, अत्र सूत्रे गङ्गादिनदीनां मासमध्ये द्विशस्त्रिशो निषेधादेकवारमेव कल्पेतेत्यर्थात्संपन्नं, सोऽपि नद्युत्तार ईर्यासंयुक्तः, तदुत्तारानन्तरमीर्यापथिकाप्रतिक्रमणं भणितं, यदागमः-"हत्थसयादागंतुं गंतुं व मुहुत्तगं जहिं चिट्ठे। पंथे वा वच्चंते नइसंतरणे पडिक्कमइ॥१॥"त्ति,पूजा-जिनपूजा तुरव्याहार्यः कुसुमादिभिर्जिनपूजा तु 'तद्विपरीता' तस्मात्-नद्युत्ताराद्विपरीता-विलक्षणा तद्विपरीता, संख्यानियमेर्यापथिकारहितेत्यर्थः, तत्र नद्युत्तारे पूजायां चाज्ञातुल्यता, यथा नद्युत्तारे पृथिव्यारम्भसंभवेऽपि जिनाज्ञा तथा जिनपूजायामपीत्येवंरूपेण जिनाज्ञासमता कथं ?, न कथमपीति लुम्पकाशङ्केतिगाथार्थः ॥७९॥

अथ प्रत्युत्तरमाह—

नइउत्तारे इरिआ जं तं साहूण साहुकप्पठिई। अन्नह इरिआजुग्गं तं पावं कह णु संभवई ? ॥८०॥

यन्नद्युत्तारे ईर्या-ईर्यापथिकी भणिता साधूनां तत्साधुकल्पस्थितिः-साध्वाचारः, यथा हस्तशतादागत्य गत्वा च यत्र मुहूर्त्तकं तिष्ठति तत्रेर्यां प्रतिक्रम्यैव तिष्ठतीत्यादि, अन्यथा यदि साध्वाचारो न स्यात्तर्हि ईर्यायोग्यं-ईर्यापथिकीलक्षणप्रायश्चित्तक्रिया-विशोध्यं ण्णु वितर्के कथं संभवति ?, न कथमपि, किंच-लुम्पकाभिमते सिद्धान्ते नद्युत्तारे क्वापीर्यापथिकी नोक्ता, किंतु 'हत्थस-यादागंतु'मित्यादि निर्युक्तिगाथा, सा च तस्य नाभिमता, कथं तत्प्रतिक्रान्तिर्युक्तेतीर्यायुक्तिरालजालकल्पेति गाथार्थः॥८०॥ अथ तथाविधपातकस्येर्यापथिकया विशुद्धिर्न भवति, कुत इति हेतुमाह—

जं इक्कं छजिअवहो बीअं वयखंडणाइ महपावं । तं जइ इरिआजुग्गं इरिआगंधोऽवि कह गिहिणो ? ॥८१॥

यद्-यस्मात्कारणादेकं पापं षड्जीववधः-पृथिव्यादिषड्जीवनिकायघातो नद्युत्तारे प्रतीतः,यदुक्तं-"जत्थ जल तत्थ वणं जत्थ-वणं तत्थ निस्सिओ अग्गी । तेऊ वाऊमहगओ,तसा य पचक्खया चेव॥१॥"त्ति,द्वितीयं व्रतखण्डनादि महापापं सर्वं सावद्यं त्रिविधं त्रिविधेन प्रत्याख्याय ज्ञात्वैव नद्युत्तारे षड्जीवनिकाया हन्यन्ते इति व्रतविलोपपातकं सर्वजनप्रसिद्धं महापातकं भण्यते, तदपि यदि साधूनामीर्यायोग्यम्-ईर्यापथिकाविशोध्यं तर्हि द्वादशानामविरतीनां मध्ये ह्यप्रत्याख्यातैकादशाविरतेरुत्कृष्टस्यापि श्रावकस्य जिनभवनादि द्रव्यस्तवोद्यतस्य श्रावकस्य कथमीर्यागन्धोऽपि-ईर्यापथिकीवार्त्ताऽपि ?, न श्रोतव्येत्यर्थ इतिगाथार्थः ॥८१॥ अथेर्याप्रतिक्रान्तेः स्थानकमाह—

इरिआवि इरिअनिअए कज्जे सचित्तमाइसंघट्टे । कयवयभंगभयाओ पुणोवि इरिअं पडिक्कमई ॥ ८२ ॥

ईर्यापि-ईर्यापथिक्यपि ईर्यानियते कार्ये-ईर्यां प्रतिक्रम्यैव यद्धर्मानुष्ठानं विधीयते तदीर्यानियतं, यद्विना यन्न भवति तच्चेन

नियतमितिवचनात्, तच्च सामायिकपौषधचारित्राद्यनुष्ठानमेव, ईर्यां प्रतिक्रम्यैव तद्विधानाद्, यत्तु केचित्कुपाक्षिकाः सामायिकमीर्यां विनाऽप्युपदिशन्ति ते तु ईर्यापथषट्त्रिंशिकायां सामायिकेऽपि प्रथममेवेर्या युक्तेतिव्यवस्थापनेन निराकृता इति बोध्यं, तत्र वर्त्तमानः श्रावकः साधुर्वा सचित्तादिसंघट्टे—पृथिव्यादिसचित्तमिश्रद्रव्याणां संघट्टे पुनरपीर्या-सामायिकादिव्रतोच्चारादौ या ईर्या ततोऽप्यपरा ईर्या पुनरीर्या तां प्रतिक्रामति, कुत इति हेतुमाह—'कयवय'त्ति कृतव्रतभङ्गभयात्, कृतं यद् व्रतं—द्विविधं त्रिविधेन प्रत्याख्यानलक्षणं सामायिकपौषधादि त्रिविधं त्रिविधेन प्रत्याख्यानलक्षणं सामायिकच्छेदोपस्थापनीयादि चारित्रं तस्य भङ्गो—देशेनातिचारलक्षणस्तद्भयात् अनाभोगादिना सचित्तस्पर्शादौ जाते अहो असद्गृहीतव्रतानामतिचारलक्षणं मालिन्यं मा भवत्वित्यभिप्रायेण तन्मालिन्यप्रक्षालनाय जिनोपदिष्टा ईर्यापथिकी प्रतिक्रम्यते, तथा चेर्यापथिकास्थानं सामायिकादिव्रतान्येव, नतु धर्मानुष्ठानमात्रे पृथिव्याद्यारम्भादावपीति गाथार्थः ॥८२॥ अथ प्रकृते योजयितुमाह—

तेणं कडसामइओ मुणिव्व सड्ढोत्ति नेव दव्वथयं। कुणइत्तिअ जिणआणा न उणं इअरोवि धम्मरओ ॥८३॥

येन कारणेन सचित्तस्पर्शमात्रेऽपि सामायिकादिव्रतस्यातिचारो भवति तेनैव कारणेन कृतसामायिको मुनिवच्छ्रावकोऽपि द्रव्यस्तवं—पुष्पादिभिर्जिनपूजां न करोतीति जिनाज्ञा, न पुनरितरोऽपि—कृतसामायिकादतिरिक्तोऽपि 'धर्मरतः' जिनेन्द्रभक्त्युत्सुकः, अयं भावः—सामायिकादिव्रतजिघृक्षुः परित्यक्तसर्वसचित्तवस्तुकः प्रथममीर्यां प्रतिक्रम्य कृतसामायिकस्तदवधिकालं यावत्सचित्तस्पर्शादिरहित एव तद्व्रतपालको भवति,जिनपूजाचिकीर्षुस्तु सचित्तपुष्पादिवस्तून्यादायैव जिनपूजां करोति, तद्विना पूजाया एवासंभवात्, प्रति कार्यं कारणस्य भिन्नत्वात्, तथा च नद्युत्तारजिनपूजयोर्जिनाज्ञामधिकृत्य वैषम्यमुद्भावयन् लुम्पको मूर्खावधिमात्मनः सूचयन्

योग्यः, किंच-द्विविधत्रिविधप्रत्याख्यानवान् कृतसामायिकः श्रावकोऽप्यनाभोगादिना सचित्तस्पर्शादिजन्यपातकभीतः सन्नीर्यां प्रतिक्रामति, लुम्पकस्तु यावज्जीवं त्रिविधत्रिविधेन जीववधादि प्रत्याख्यायापि महापातकमिति ज्ञात्वाऽपि ज्ञात्वैव महीसदृशीं महानदीमुत्तरन् षड्जीवनिकायान् हत्वाऽपीर्यामात्रेण तत्पातकशुद्धिं ब्रुवाणो न लज्जते इति महामूर्खताचिह्नमपीतिगाथार्थः ॥८३॥ अथेर्यापथिकी ह्यात्मनः शुद्धिकरा धर्ममात्रे कथं न भवतीति लौकिकलोकोत्तरदृष्टान्ताभ्यां शङ्कामपाकरोति—

लोएवि गिहपवेसे सुइजलफासो न हट्टपविसेऽवि। लोउत्तरि सामइए इरिआ न तहेव मुणिदाणे ॥८४॥

लोकेऽपि गृहप्रवेशेन शुचिजलस्पर्शः-अभ्युक्षणं सर्वजनप्रतीतं, न हट्टप्रवेशे, चकारो गम्यः, न च हट्टे-आपणे प्रवेशेऽभ्युक्षणं कोऽप्युपादत्ते, यद्यप्यापणो महामूल्यपण्यादिभृतो महालाभादिहेतुस्तथापि गृहपतिर्यथा गृहे प्रविशन्नभ्युक्षणं लाति न तथा कोऽप्यापणे प्रविशन्नपीति लौकिकदृष्टान्तः, तथा लोकोत्तरे सामायिके यथा ईर्या न तथैव मुनिदाने, यथा सामायिकं कुर्वन्नीर्यां प्रतिक्रम्यैव न तथा मुनिदानं कुर्वन्नपीति भाव इति लोकोत्तरदृष्टान्तः, दार्ष्टान्तिकौ तु जिनपूजानद्युत्तारौ प्रकृतावेवेतिगाथार्थः ॥ ८४ ॥
अथ नद्युत्तारजिनपूजयोर्जिनाज्ञामधिकृत्य साम्येऽपि कथंचिद्भेदो न दोषायेति दर्शयितुं दृष्टान्तान्तरयुक्तं गाथायुग्ममाह—

अहवा जह अंतेविअ भोअणकिरिआवि विविहवत्थुगया। जलसुइरहिआऽरहिआ लोअव्ववहारसंवडिआ ॥८५॥
एवं जिणिंदधम्मो आणाविसओऽवि भिन्नविहिविसओ। तेणं नइउत्तारे इरिआ न जिणिंदपूआए ॥८६॥ युग्मं ॥

अथवेति दृष्टान्तान्तरद्योतकः, अथवा यथा विविधवस्तुगता अशनपानखादिमस्वादिमविचित्रवस्तुगता भोजनक्रिया अन्तेऽपि-आस्तामादौ तदुपयमनन्तरमपि जलशुचिविरहिता, चः समुच्चये, अरहिता च-जलशुच्यन्विता च लोकव्यवहारसंपतिता, लोकव्यव-

हारालोपिकेत्यर्थः, तथाहि–राद्धान्नादिकं हि किञ्चिद्भोज्यं भुक्तं सदन्ते जलेनावश्यं शुचिकर्म कर्त्तव्यमेव, अन्यथा लोकव्यवहारबाह्यो भवेत्. किंचिच्च तथाविधखर्जूरद्राक्षादिकं ताम्बूलादिकं चान्ते जलशुचिमन्तरेणापि लोकव्यवहारवानेव स्याद्, अत एव मुखे सत्येव ताम्बूलादिके पुस्तकादिसंस्पर्शने पण्डितलोकेऽप्यनिन्द्यता, राद्धान्नं भक्षयन् पुस्तकादिस्पर्शवान् पापात्मैव भण्यते, एतदृष्टान्तेन दार्ष्टान्तिकमाह–'एवं जिणिंदे'त्यादि गाथा, एवं–भोजनदृष्टान्तेन जिनेन्द्रधर्म आज्ञाविषयोऽपि भिन्नविधिविषयः, जिनेन्द्रभाषितो धर्मोऽप्यनेकप्रकारः, कार्यभेदे हि कारणेऽपि भेदोऽवश्यं वक्तव्यः, अतो भिन्नभिन्नक्रियासाध्य इत्यर्थः, तेन कारणेन नद्युत्तारे–नद्युत्तारानंतरं साधूनामीर्या भणिता, न जिनेन्द्रपूजायां,चाप्योरध्याहारात्, नच जिनेन्द्रपूजायामपि श्रावकाणामीर्या भणिता, युक्तिश्चात्र प्रागेव दर्शितेति बोध्यं, किंच–कारणानां सादृश्ये कार्याणामपि वैचित्र्यं न स्यादितिगाथार्थः ॥८५-८६॥ अथाज्ञामन्तरेणापि नद्युत्तारे यत्पातकं तदीर्यापथिकयैव विशोध्यमिति लुम्पकाभिप्रायं तिरस्कुर्वन्नाह—

**जइ आणानिरविक्खा इरिआ नइपाणवहसोहिगरी। ता मुणिदाणे तीए सड्ढो सुद्धो असुद्धोवि ॥८७॥**

यदि आज्ञानिरपेक्षा–जिनेन्द्राज्ञामन्तरेणापि केवलमीर्यैव 'नदीप्राणवधशोधिकरी' नद्युत्तारे यः प्राणवधः सर्व्वजनप्रतीतस्तस्य शोधिकरा–विशोधिजनिका 'ता' तर्हि मुनिदाने–साधुदानावसरे दानोत्सुकोऽनाभोगादिना सचित्तस्पर्शमात्रेणाशुद्धोऽपि श्राद्ध ईर्यां प्रतिक्रम्य शुद्धः संपन्नः उभयोरपि न दोषावहो भविष्यति, यथा ईर्यापथिक्या प्रत्याख्यातसर्व्वसावद्यानामपि साधूनां ज्ञात्वाऽपि नदीगतानेकजलादिजन्तूनां घातेनापि यत्पातकं तदप्यपाक्रियते तर्हि तथा गृहिणोऽप्यनाभोगेनापि किंचित्सचित्तस्पर्शमात्रजन्यं पातकं सुतरामपाकरिष्यते, नहि मेरुगिरिरजोऽपनोदकेन जलेन कर्करादिगतरजो नापनीयते इति स्वयमेवालोच्यमितिगाथार्थः॥८७॥

अथेर्यापथविकल्पं निरस्य संख्यानियमोऽपि निरस्यन्नाह—

एवं नइउत्तारे संखानिअमोऽवि साहुकप्पठिई। अण्णह कप्पविगप्पे छजिअवहो केण अवहरिओ ? ॥८८॥

'एवं' प्रागुक्तयुक्त्या यथेर्या जिनाज्ञा तथा संख्यानियमोऽपि साधुकल्पस्थितिः-जिनाज्ञैव, न पुनः पातकत्वेनेत्यादि, अन्यथा-यथेवं न स्यात्तर्हि कल्पविकल्पे-द्विवारादिनिषेधेऽर्थादेकवार कल्प्यो यो विकल्पस्तत्रापि षड्जीवनिकायवधः सर्वसम्मतोऽपि केनापहृतो ?, न केनापि, न चेर्यापथिकी प्रतिक्रान्त्या तत्पातकविशोधिरितिशङ्कनीयं, तथाभूतस्यापि पातकस्येर्याप्रतिक्रान्त्या व्यपगमे द्वितीयादिवारेऽपि तया तदपगमः सुलभ एव, शेषप्रायश्चित्तविधीना च दत्ताञ्जलितापत्तेरितिगाथार्थः ॥८८॥ अथ संख्यानियमेऽतिप्रसङ्गमाह—

अहवा देसिअराइअपक्खिअचउमासवासपडिक्कमणं। संखानिअयं पावं पावमए पुण्णमवि पुण्णं ॥८९॥

संख्यानियमेन यदि पातकत्वं तर्हि दैवसिकरात्रिकपाक्षिकचातुर्मासिकसांवत्सरिकप्रतिक्रमणानामपि पातकत्वं स्यात्, तेषामपि संख्यानियतत्वात्, तत्रापि सांवत्सरिकप्रतिक्रमणस्य विशेषतः पातकत्वं प्रसज्येत, यतो मासमध्ये गङ्गादिनद्युत्तार उत्सर्गत एकवार भणितः सांवत्सरिकप्रतिक्रमणं च संवत्सरमध्ये एकवारमिति 'पापमते' लुम्पकमते पुण्यमपि-सर्वप्रतिक्रमणेपूत्तममपि सांवत्सरिकप्रतिक्रमणं पूर्णं पापं भवेदितिगाथार्थः ॥८९॥ अथ नद्युत्तारस्याप्युत्सर्गेण निषेधे सत्यपवादेन कल्प्यता भणने लुम्पकमतामिप्रायेण संख्यानियमोऽकिंचित्कर इति दर्शयन्नाह—

उस्सग्गेण निसेहो अववाएणेव कप्पणिज्जं च। दोसुवि आणा तुल्ला वयजुग्गं अण्णहा न हवे ॥९०॥

उत्सर्गेण निषेधः "णो कप्पति निग्गंथाण वा २ इमाओ उद्दिट्ठाओ गणिआओ विअंजिआओ पंच महण्णवाओ महानईओ अतो

मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा, तं०-गंगा १ जउणा २ सरऊ ३ एरावती ४ मही"ति सूत्रेणा-पवादेनैव कल्पनीयं, यथा 'पंचहिं ठाणेहिं कप्पंति-भयंसि वा दुब्भिक्खंसि वा पव्वहेज्ज वा कोइ उदओघंसि वा वुज्झमाणंसि महता वा अणायरिएहिं"ति श्रीस्थानाङ्गे (४१२) अत्रोत्सर्गसूत्रवृत्तिः प्रागुक्ता, अपवादसूत्रस्य वृत्तिर्यथा-'पंचे'त्यादि, भये राजप्रत्यनीकादेः सकाशादुपध्याद्यपहारविषये सति १ दुर्भिक्षे-भिक्षाभावे सति 'पव्वहेज्ज'त्ति प्रव्यथते-बाधते अन्तर्भूतकारितार्थत्वाद्वा प्रवाहयेत् कश्चित्प्रत्यनीकः, ततो गङ्गादौ प्रक्षिपेदित्यर्थः ३ 'उदओघंसि'त्ति उदकौघे वा गङ्गानदीनामुन्मार्गगामित्वेनागच्छति सति तेन प्लाव्यमानानामित्यर्थः ४ महता वाऽऽटोपेनेतिशेषः "अणायरिएसु"त्ति विभक्तिव्यत्ययादनार्यैः-म्लेच्छादिभिर्जीवितचारित्रापहारि-भिरभिभूतानामितिशेषः, म्लेच्छेषु वा आगच्छत्सु इतिशेषः, एतानि पुष्टालम्बनानीति तत्तरणेऽपि न दोष इति । उक्तं च-"सालंबणो पडतो वि अप्पयं दुग्गमेवि धारेइ । इय सालंबणसेवी धारेइ जई असढभावं ॥१॥ आलंबणहीणो पुण निवडइ खलिओ अहे दुरुत्तारे । इय निरालंबणसेवी पडइ भवोहे अगाहंमि ॥२॥"त्ति इति श्रीस्थाना० वृत्तौ, अत्रापवादतः पञ्चभिः स्थानैस्तथाविधनद्युत्तारेऽपि दोषा-भावो भणितः, एवं सत्यामपि [illegible]विराधनायां जिनाज्ञाया अतिरिक्तं कारणं किमपि न पश्यामः, अन्यथा कल्प्यत्वेन प्र-वेशः कथं संभवेत् ?, पश्चात् कारणान्तरेणापि निषेधविध्योः प्रवृत्तिः, यथा "णो कप्पति निग्गंथाण वा २ इमाओ उद्दिट्ठाओ पंच महण्णवाओ महानदीओ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा, तंजहा-गंगा १ जउणा २ सरऊ ३ कोसिया ४ मही ५ ॥२७॥ अह पुण एवं जाणेज्जा-एरवती कुणालाए जत्थ चक्किआ एगं पायं जले किच्चा एगं पायं थले किच्चा एवं ण्हं कप्पति अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा० ॥२८॥ इति बृहत्कल्प-

सूत्रे उ० ४, अत्र विधिनिषेधयोरुभयत्राप्याज्ञा तुल्या, यद्यप्युत्सर्गादपवादो बलीयानिति न्यायादुत्सर्गापेक्षयाऽपवादो बलीयानुक्तस्तथापि स्वस्वस्थानयोर्जिनाज्ञामधिकृत्य तुल्यतैव, यदि पुनरुत्सर्गस्थानेऽपवादमपवादस्थाने चोत्सर्गं सेवते तदा नियमादनाचारवानेव, यत उत्सर्गापवादौ हि वामदक्षिणनेत्रयोरिव प्रवचनप्रवृत्तिहेतू, नेत्रे च द्वे अपि स्वस्वस्थानस्थे एव श्रेयोभाजी, न पुनः परस्थानस्थे अपीति, अन्यथा यद्युत्सर्गापवादयोराज्ञामधिकृत्य तौल्यं नाभिधीयते तर्हि स्तवयुग्मं द्रव्यस्तवभावस्तवरूपं न भवेद्, उत्सर्गापवादरूपयोः साधुश्रावकधर्मयोरेकतरस्यानाज्ञात्वापत्तेरितिगाथार्थः ॥९०॥ अथ प्रागुक्तयुक्त्या किं संपन्नमित्याह—

एएणं पडिसेहो अहम्मभावेण धम्मभावेण। विहिवयणंति विगप्पा वयणं अण्णाणविण्णाणं ॥ ९१ ॥

एतेन—प्रागुक्तप्रकारेण प्रतिषेधः—अमुकं न कर्त्तव्यमुत नाधिकं कल्पते इत्येवंरूपेण यो निषेधः सोऽधर्मभावेन—अधर्मत्वेन विधिवचनम्—इदमित्थं कर्त्तव्यमित्येवंरूपेण यद्भाववचनं तद्धर्मभावेन—धर्मत्वेनेति विकल्पात्—स्वयं विकल्पितबुद्धेर्यद्वचनं—भाषणं तद् 'अज्ञानविज्ञानम्' अज्ञानस्य—मत्याद्यज्ञानस्य विज्ञानं, यद्वा अज्ञानेन विज्ञा अज्ञानविज्ञास्तेषां कुपाक्षिकेष्टश्रुताज्ञानाभ्यासेन पण्डितख्यातिभाजस्तेषामित्यर्थः, अयं भावः—कुपाक्षिको जानाति यदागमे निषिद्धं तदधर्म एव, यच्च कर्त्तव्यतयोपदिष्टं तद्धर्म एवेति तदज्ञानमाहात्म्यमेव, प्रवचने तथानियमाभावादिति गाथार्थः ॥९१॥ अथ यन्निषिद्धं तदधर्म एवेति नियमाभावं दर्शयितुं गाथामाह—

जिणकप्पे पडिसिद्धं वेआवडिअंपि संघपमुहाणं। दसपुव्विअपमुहाणं जिणकप्पो चेव पडिसिद्धो ॥९२॥

जिनकल्पे सङ्घप्रमुखाणां तुलामध्यन्यायेन 'मध्यग्रहणे आद्यन्तयोरपि ग्रहण'मित्याचार्यादिचैत्यपर्यन्तानां वैयावृत्त्यमपि प्रतिषिद्धं, दशपूर्व्विकप्रमुखाणां—दशादिपूर्वविदां विशिष्टधर्मोपदेशादिशक्तिमत्त्वेन जिनकल्प एव प्रतिषिद्धः, एवं निषेधे सत्यपि द्वयोरपि

धर्मरूपत्वात्, अयं भावः-जिनकल्पमङ्गीकृत्य वैयावृत्त्यमपि प्रतिषिद्धं, नह्येतावता उग्रक्रियारतेन जिनकल्पिकेन परिहृतत्वाद् वैयावृत्त्यं स्वरूपेणाधर्मः, आचार्यादिवैयावृत्त्यस्य स्थानाङ्गादिषु महानिर्जराहेतुत्वेन प्रतिपादनात्, तस्माज्जिनकल्पमधिकृत्य तथैव जिनाज्ञेति बोध्यं, तथा जिनकल्पोऽपि दशादिपूर्वधरैर्विशिष्टज्ञानिभिः परिहृतत्वेनाधर्म इत्यप्यनुचितम्, अवश्यमाराधकत्वेन महानुभावानामेव जिनकल्पपालनशक्तेरुदयाद्, एवं निषेधवचनेनाधर्मत्वबुद्धिर्नानेतव्या, वस्तुतस्तु यं पुरुषं यत्कार्यमवधिकृत्य यत्प्रतिषिद्धं तत्तदपेक्षयाऽधर्म एव, अन्यथा जिनैस्तत्प्रतिषेधासंभवात्, प्रतिषिद्धकरणे च निजनिजकल्पभङ्गात्, तद्भङ्गे च जिनाज्ञाभङ्गाद्, जिनाज्ञाखण्डनं च महापापमिति पर्यालोच्य यथा जिनकल्पापेक्षया वैयावृत्त्यादिरधर्मस्तथा निष्कारणं द्विशस्त्रिशो वा तथाविधनद्युत्तारोऽप्यधर्मः, यथा जिनकल्पिकातिरिक्तानां स्थविरकल्पिकादीनां वैयावृत्त्यादिर्धर्मः तथा यथोक्तकारणैर्नद्युत्तारोऽपि धर्मः, तथैव जिनाज्ञायाः सद्भावात्, जिनाज्ञैव धर्मोऽधर्मश्च जिनाज्ञाखण्डनं, यदुक्तं-"आज्ञाऽऽराद्धा विराद्धा च, शिवाय च भवाय चे"ति परमार्थः इतिगाथार्थः ॥९२॥ अथ यत्कल्प्यत्वेनोक्तं तद्धर्म एवेत्यत्रापि नियमाभावं दर्शयति—

सव्वे गोअरकाला विगिट्ठभोइस्स हुंति विहिवयणे। जिणकप्पंमि अहम्मो तेणमणेगंत जिणवयणं ॥९३॥

विकृष्टभोजिनः साधोः सर्वेऽपि गोचरकालाः कल्पन्ते, यदागमः-"विगिट्ठभत्तिअस्स भिक्खुस्स कप्पंति सव्वेऽवि गोअरकाल"त्ति श्रीपर्युषणाकल्पे, इति विधिवचने भवन्ति, ते च गोचरकालाः जिनकल्पे न धर्मः, तस्य तृतीयप्रहर एव गोचरकालाद्, यदुक्तं-"विहाराहारनीहारास्तृतीयप्रहरे दिवे"ति, अत्रापि वस्तुगतिः प्राग्वद्बोध्या, यथा उक्तप्रकारेण विकृष्टभोजिनं साधुमङ्गीकृत्य सर्वेऽपि गोचरकालाः धर्मत्वेनैवाभ्युपगन्तव्याः, जिनकल्पमाश्रित्य पुनरधर्म एव, जिनकल्पस्यैव भङ्गहेतुत्वात्तथैव जिनाज्ञात्वाच्च,

तेन कारणेन जिनवचनमनेकान्तम्-एकस्मिन्नेव विवक्षिते वस्तुनि पितृत्वपुत्रत्ववदपेक्षया धर्मत्वाधर्मत्वयोर्विरुद्धयोरपि धर्मयोरङ्गीकाराद्, एकान्तवादे च मिथ्यात्वप्रसक्तेः, अत एव लुम्पकमधिकृत्य जिनप्रतिमाऽप्यधिकरणमेवेत्यग्रे वक्ष्यते इतिगाथार्थः॥९३॥ अथ प्रसङ्गतो मुग्धजनभ्रान्तिं निराकुर्वन्नाह—

एवं पायच्छित्तं भणिअं कज्जंमि जंमि तं चेव। नो कप्पइ तं वयणं भासंतोऽणंतसंसारी ॥ ९४ ॥

एवं-प्रागुक्तयुक्त्यनुसारेणानेकान्तात्मके प्रवचने यत्र कार्ये-कर्त्तव्ये प्रायश्चित्तम्-आलोचना तपो भणितम्-अभिहितं अर्थाच्छेदग्रन्थे, तत् चेवशब्दो व्यवहितः संबध्यते, तत्कार्यं न कल्पत एवेति यत्तद्वचनं भाषमाणोऽनन्तसंसारी स्यादितिगाथार्थः ॥९४॥ अथानन्तसंसारित्वे हेतुमाह—

जम्हा पायच्छित्तं अववायपयंमि होइ पाएणं। अववाएण पवित्ती पायं तित्थप्पवाहंमि ॥ ९५ ॥

यस्मात्कारणादपवादपदे प्रायो-बाहुल्येन प्रायश्चित्तं भवति,यथा गर्दभिल्लोच्छेदकस्य श्रीकालकसूरेः,तत्रापवादस्त्वेवं-तथाविधप्रत्यनीकः सति सामर्थ्ये निवार्य एव, यदागमः-"साहूण चेइआण य पडिणीअं तह अवण्णवायं च। जिणपवयणस्स अहिअं सव्वत्थामेण वारेइ॥१॥"त्ति श्रीउपदेशमालायां, अत्र जिनाज्ञा त्ववश्यं पालनीया, अन्यथाऽनन्तसंसारित्वं स्यादिति विचिन्त्य तदुच्छेदो विहितः, स चापवादपदगत एव, कारणे समुत्पन्न एव तथासंभवात्,'कारणिको ह्यपवाद' इतिवचनात्,पश्चाच्च तेन प्रायश्चित्तविधिरपि प्रतिपन्नः, न चैवं कालकसूरेरिव कस्यचिदेवापवादपदं भविष्यतीत्याह-'अववाएणे'त्यादि, प्रायस्तीर्थप्रवाहे-अच्छिन्नतीर्थपरिपाट्यामपवादेन प्रवृत्तिः, एवकारोऽप्यादार्थः, अपवादेनैव-द्वितीयपदेनैव, यत आत्मामन्यद्, आहारग्रहणमपि कारणिकमेव

जिनेनोक्तं, यदागमः–"छहिं ठाणेहिं समणे निग्गंथे आहारमाहारमाणे नाइक्कमइ,तं०–वेअण वेआवच्चे इरिअट्ठाए अ संजमट्ठाए। तह पाणवत्तिआए छट्ठं पुण धम्मचिंताए ।१॥"त्ति श्रीस्थानाङ्गे(५००)एवमुपाश्रयाद्बहिर्निर्गमनमप्यापवादिकं, यदागमः–"एगग्गस्स पसंतस्स न हुंति इरिआदओ गुणा हुंति। गंतव्वमवस्सं कारणंमि आवस्सिआ होइ॥१॥"त्ति श्रीआग०नि० (६९२) एवं वैयावृत्त्यादिष्वपि स्वयमेव योज्यं, तीर्थप्रवाहग्रहणे जिनकल्पिकव्यवच्छेदः सूचितः, जिनकल्पिकस्य द्वितीयपदाभावात्, यद्यपि स्थविरकल्पिकानां यदपवादपदं तत्किंचिज्जिनकल्पिकानामपि, तथापि जिनकल्पमङ्गीकृत्योत्सर्गपदमेव बोध्यं, तस्य द्वितीयपदाभावात्, तथैव जिनाज्ञायाः, किंच–उत्सर्गापवादावपि पुरुषकालाद्यपेक्षया सापेक्षावपीति न किंचिद्विकल्पस्थानमिति, ननु जिनोक्तविधिनोत्सर्गसेवनायामप्रायश्चित्तमपवादसेवनायां च प्रायश्चित्तमिति वैषम्यं न युज्यते, उभयत्राप्याज्ञायास्तौल्यादिति चेन्मैवं, समानन्यायोत्पन्नयोरपि यौगलिकस्त्रीपुरुषयोरिवोत्सर्गापवादयोरपि स्वभाववैषम्यस्य न्यायोपपन्नत्वाद्, अयं भावः–समानमातृपित्रादिकारणयोरपि यौगलिकस्त्रीपुरुषयोराकृतिविकृतिगतिभणितिप्रमुखचेष्टाभिः स्वभाववैषम्यमनादिजगत्प्रवाहसिद्धं, जगत्प्रवृत्तिहेतुरपि, तथा जिनाज्ञागोचरयोरप्युत्सर्गापवादयोस्तथैवोक्तवैषम्यमनादिसिद्धं प्रवचनप्रवृत्तिहेतुरपि, तथा च नैकस्याः स्त्रिया नैकस्माद्वा पुरुषात् जगत्प्रवाहप्रवृत्तिः, किंतूभाभ्यां समुदिताभ्यामेव, एवं नैकस्मादुत्सर्गादपवादाद्वा धर्ममूलस्य तीर्थस्य प्रवृत्तिः, किंतूत्सर्गापवादाभ्यां समुदिताभ्यामेवेतिबोध्यं, किंच वस्तुगतिरियम्–अपवादस्तावच्छ्रान्तानां पथिकानां विश्रामस्थानकल्पः, तत्रोपनयस्त्वेवं–कस्यचिदिभ्यस्य त्रयः पुत्राः पितुराज्ञामवाप्य व्यापारेण धनोपार्जनेच्छया देशान्तरं गताः, तत्र तथैवोपार्जितविपुलधनाः परेभ्यः संभावितोपद्रवाः स्वयमेव सारस्वापतेयग्रन्थिशिरस्काः स्वगृहाभिमुखमागच्छन्ति, तेषां मध्यादेकः पटुरश्रान्तं पित्रादिमिलनोत्सुकोऽग्रत एवा-

विलम्बेनैव स्वगृहमागतः पित्रादिमिलनेन संतुष्टो मनोज्ञभोजनादिविधिनाऽपनीतक्षुत्तृट् सुखीजातः, द्वितीयस्तु तद्वदुत्सुकोऽपि दुर्बलतनुः श्रान्तस्तद्वद्गन्तुमशक्तोऽपि तेन सह पृष्ठौ धावमानस्त्रुटितस्वायुरन्तराल एव पतितः क्षुत्तृड्बाधितो विपद्य परलोकं गतः, तृतीयस्तु पथि श्रान्तेनापटुना वा त्वया सुस्थाने विश्रम्य विश्रम्य सुसार्थेन गन्तव्यं समागन्तव्यं चेत्यादि पितुः शिक्षां संस्मृत्य तथैव समाचरन् कियता कालविलम्बेन प्रथमवत्सुखी संपन्नः, उपनययोजना त्वेवं–प्रथमपुत्रकल्पो हि जिनकल्पिकः भूयःसामर्थ्यभाजः, तस्य गणान्निर्गतत्वेनापवादपदसेवनावकाशासंभवात्प्रायश्चित्तादिराहित्येनैवावश्यं संयमाराधकत्वात्, यद्यपि जिनकल्पिकस्य किंचिदनुचिताध्यवसायमधिकृत्य (अस्ति प्रायश्चित्तं)तदप्यल्पमविवक्षितमिति बोध्यं, द्वितीयपुत्रकल्पस्तु कालविलम्बकल्पेन प्रायश्चित्तेन भीतः समापतितमप्यपवादमसेवमानः प्रायश्चित्ताद्यनास्पदमुत्सर्ग एव श्रेयानिति निजमतिकल्पनाजालपतितो बोध्यः, तृतीयपुत्रकल्पस्तु जिनाज्ञां संस्मरन् उत्सर्गस्थाने उत्सर्गमपवादस्थाने चापवादमप्रायश्चित्तं संसेवमानो बोध्य इत्येवं दृष्टान्तादिना उत्सर्गापवादौ सम्यग् विभाव्य परिसेव्याविति गाथार्थः ॥९५॥ अथ नद्युत्तारमधिकृत्य लुम्पकविकल्पं प्रतिबन्द्यैव दूषयितुमाह—

**उवगरणाइनिमित्तं नइउत्तारेवि दोसरहियत्तं। जिणवयणाओऽभिमयं ता किं न जिणिंदपडिमाए? ॥९६॥**

नद्युत्तारेऽपि 'पंचहिं ठाणेहिं कप्पंती'त्यादिप्रागुक्तसूत्रेण जिनवचनादुपकरणादिनिमित्तं नद्युत्तारेऽपि दोषरहितत्वमभिमतंलुम्पकस्यापि सम्मतमिति चेत्तर्हि जिनेन्द्रप्रतिमायामपि किं न दोषरहितत्वमित्यत्रापि संबध्यते, तत्रापि जिनेन्द्रवचनस्य सद्भावाद्, एवं सत्यपि यदि जिनेन्द्रप्रतिमायां दोषस्तर्हि किं न नद्युत्तारेऽपीति प्रतिबन्दीनामापादनं चेतिगाथार्थः॥९६॥ अथ पुनरपि परः शङ्कते—

**नणु उवगरणाभावे चारित्ताराहणं न संभवइ। ता णाणदंसणाणं उवगरणेहवि किमवरद्धं? ॥९७॥**

ननूपकरणाभावे चारित्राराधनं न संभवतीति चेत् 'ता' तर्हि ज्ञानदर्शनयोरुपकरणैः किमपराद्धम् ?, अयं भावः—लुम्पक ! चारित्रोपकरणैस्तव किं रहस्युपकृतं यत्तैर्विना चारित्रासंभवः प्रतिपाद्यते, ज्ञानदर्शनयोरुपकरणैश्च किमपराद्धं यत्तैर्विनाऽपि ज्ञानदर्शनयोः सद्भावः प्रतिपद्यते ?, किंच—चारित्रोपकरणनिमित्तमपि गङ्गादिनद्युत्तारे सत्यामपि षड्जीवविराधनायां दोषाभाव इति वदतो लुम्पकस्य 'माता मे वन्ध्ये'ति न्यायः संपद्यते, तन्मते जीवविराधनायां दोषाभावस्यानङ्गीकारादिति गाथार्थः ।।९७।। अथ ज्ञानादीनां मूलोपकरणान्याह—

णाणुवगरणं पुत्थं जिणपडिमा दंसणोवगरणमिहं । रयहरणपुत्ति चरणे मूलुवगरणाइमेआइं ॥९४॥

ज्ञानोपकरणं पुस्तकं, दर्शनोपकरणं जिनप्रतिमा—जिनबिम्बं, रजोहरणमुखवस्त्रिका चरणे—चारित्रे, षष्ठ्यर्थे सप्तमीति चारित्रस्योपकरणे, एतानि मूलोपकरणानि, शेषोपकरणानामेतन्मूलकत्वात्, तथाहि पुस्तकमुद्दिश्यैव मषीलेखिनीपृष्ठकादीनि ज्ञानोपकरणानि, प्रतिमामुद्दिश्यैव प्रासादकलशपुष्पादीनि, रजोहरणमुखवस्त्रिकालिङ्गपूर्वकत्वात्कल्पाद्युपकरणानामितिगाथार्थः ॥९८॥ अथोपकरणमप्यधिकरणं भवतीत्याह—

निअनिअकज्जनिजुत्तं उवगरणं तंपि होइ अहिगरणं । विवरीअकिरिअविसयं विसं व सव्वंपि एमेव ॥९९॥

निजनिजकार्यनियुक्तमुपकरणम्, उपक्रियते ज्ञानादिना आत्माऽनेनेत्युपकरणं, तदपि विपरीतक्रिया—जगत्स्थित्या निजनिजक्रियातोऽपरा क्रिया सैव विषयो यस्य तत्तथाभूतमधिकरणम्, अधिक्रियते नरकादिष्वात्माऽनेनेति अधिकरणं, विषमिव, विषं हि यथा भक्षितमात्मानं मारयति तथोपकरणमप्यधिकरणीभूतं नरकादिषु योजयतीत्यक्षरार्थः, भावार्थस्त्वयं—पुस्तकस्य निजं कार्यं वाच-

नादिनाऽन्येषां ज्ञानजननं, तत्र नियुक्तं-व्यापृतमुपकरणमुच्यते, ततो विपरीता क्रिया-क्रयविक्रयादिना आजीविकादिकरणं तथा-विधकषायोदयात् लेष्टुवत् कश्चिज्जीवं प्रति प्रक्षेपादिना जीवघातकरणमजीवबुद्ध्या फलकादाविवावष्टंभनक्रिया वा पुस्तकसंयुक्तेऽपि शरीरे मलमूत्रादिकरणमित्यादिः क्रिया विषयो यस्य तत्तथा, प्रतिमायाः कार्यं तीर्थंकरस्मरणं तीर्थंकरस्येवाराध्यत्वेन शुद्धिकरणं तीर्थंकरस्येव पूजादिविधौ प्रवर्त्तनं तीर्थंकरपूजाया इव तस्या अपि पूजायाः सुलभबोधिप्राप्तिः स्वर्गादिप्राप्तिश्चेत्यादिकं, तत्र नियुक्ता प्रतिमा दर्शनोपकरणं, ततो विपरीतक्रिया इयमचेतना पाषाणमयी ज्ञानादिशून्या पृथिव्याद्यारम्भस्थानमित्यादिबुद्ध्या तद्विषयकहीला तत्त्याजनादिरूपा सैव क्रियाविषयो यस्य तत्तथेति, उभयथापि विपरीतक्रिया लुम्पकमतीयानामेवेति ज्ञानदर्शनोपकरणे केवलमधिकरणे एव बोध्ये, अत एव लुम्पकमतोत्पत्तिसमये निजनृजलेनापि मषीमार्द्रीकृत्यापि लिखितवन्त इति किंवदन्ती सम्यग् संभाव्यते, अन्यथा पुस्तकवत्प्रतिमाऽपि मान्या स्यात्, तद्युक्तिस्त्वेवं-भो लुम्पक! मूत्रेणार्द्रीकृतया मष्या वृक्षाद्याकृतयो लिख्यन्ते उताकारादिश्रुतवर्णाकृतयो लिख्यन्ते तत्र कश्चिद्विशेषो न वा?,अन्ते गोपालादीनामपि चपेटायोग्यभवनभीत्या प्रथममेव विकल्पं ब्रूते,पुनरपि स प्रष्टव्यः-स विशेषः ज्ञानविराधनालक्षणोऽन्यो वा?,अनन्यगत्या प्रथममेव ब्रूते, तदा यथा ज्ञानोपकरणविराधनया ज्ञानविराधना तथा दर्शनोपकरणं जिनप्रतिमा तद्विराधनया दर्शनविराधना, दर्शने च विराधिते मिथ्यात्वापत्त्या सर्वमपि विराधितमतो जिनप्रतिमाऽवश्यमाराध्यत्वेनैव सिद्धा, यद्वा एवं प्रष्टव्यः-भो लुम्पक! कश्चित्त्वदुपदेशनिपुणो नृजलार्द्रीकृतया मष्याऽशुचिलिप्तवस्त्रावृतोऽकारादिवर्णात्मकमाचाराङ्गादिसिद्धान्तं लिखति कश्चिच्चापाविव्यभीत्या सचित्तजलेन वस्त्रादिशरीरपर्यन्तं प्रक्षाल्य मषीं चार्द्रीकृत्य लिखति, द्वयोर्मध्ये भवतां धर्मित्वेन कोऽभिमत इत्याद्युदीरितः सर्वलोकप्रेरितपाषाणखण्डशतपातप्रहतिहेतुकनिजमस्तकस्फोटनभीत्या

प्रथमं विकल्पं परित्यज्य द्वितीयविकल्पं श्रयन् भूपालपादतलप्रविष्टोऽपि यत्र विराधना तत्र धर्मो न भवतीत्यादिमौखर्यत्याग् पार्ष्णि-प्रहारेण प्रहत्य पराक्रियते, हिंसास्वभावोऽयं पापात्मा परिहर्त्तव्य इत्यादिवचोभिः तमेव हीलयित्वा तस्यैव शरणीकरणात्, 'एमेव'त्ति प्राकृतत्वादकारलोपे एवमेव सर्वमपि ज्ञानादीनां मूलोपकरणातिरिक्तान्यप्युपकरणानीति बोध्यमितिगाथार्थः ॥९९॥ अथोपदेश-माश्रित्य किमुक्तं किं च वक्ष्यते इत्याह—

**एएणं जिणपडिमा सिद्धंते नत्थि तंपि दुव्वयणं। पडिखित्तं विण्णेअं जुगवं दुण्हंपि उप्पत्ती ॥१००॥**

एतेन 'से बेमी'त्यादिलुम्पकोद्भाविताचाराङ्गाभिप्रायोद्भावनेन सिद्धान्ते प्रतिमा नास्तीति दुर्वचनं-पापवचनं प्रतिक्षिप्तं-निरस्तं विज्ञेयं, द्वयोरपि प्रतिमासिद्धान्तयोर्युगपदुत्पत्तिस्तीर्थप्रवर्त्तनकाले एव द्वयोरपि कारणोदयात्, तच्चाग्रे व्यक्तीकरिष्यते इतिगाथार्थः ॥१००॥ अथ जिनप्रतिमानां सिद्धान्तस्य च युगपदुत्पत्तिस्वरूपमाह—

**जिणपडिमासमओऽवि अ तित्थे जायंमि दोवि जायाइं। तित्थेणंगिकयाइं तेणेव हु पूअणिज्जाइं ॥१०१॥**

जिनप्रतिमा-तीर्थकृत्प्रतिकृतिः समयः-सिद्धान्तः अपि पुनरर्थे चः समुच्चये तीर्थे-साध्व्यादिसमुदायलक्षणे जाते-तीर्थकृता स्थापिते सति द्वावपि जातौ प्रतिमासिद्धान्तौ, वक्ष्यमाणप्रकारेण तीर्थोत्पत्त्यनन्तरं समुत्पन्नावपि तीर्थेनाङ्गीकृतौ-पूज्यत्वेन स्वीकृतौ तेनैवेह पूज्यौ-आराध्यौ, अयं भावः-प्रतिमासिद्धान्तावुभावपि तीर्थप्रवृत्त्यनन्तरमव्यवहितौ समुत्पन्नावपि यदि तीर्थेन पूज्यतयाऽङ्गीकृतौ नाभविष्यतां तर्हि कस्यापि पूजनीयावपि नाभविष्यतां, निह्नवादिवत्, तीर्थेन तौ पूज्यतयाऽभ्युपगतौ तस्मादद्यापि धर्मिणां पूज्यावेवेति बोध्यं, नपुंसकता च प्राकृतत्वात्, 'लिङ्गमतन्त्र'मितिवचनादितिगाथार्थः॥१०१॥ अथ कथं युगपदुत्पन्नावित्याह—

**तित्थयरभासिअत्था निम्मविआ सावएहिं जिणपडिमा। अंगाइअसुत्ताणं रयणा तह गणहरेहि कया॥१०२॥**

तीर्थकरभाषितार्थात् "अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं" इतिवचनात् तीर्थकरभाषितवचनमाकर्ण्य श्रावकैर्जिनप्रतिमा निर्म्मापिता, तथा गणधरैश्च–गौतमादिभिरङ्गादिकसूत्राणाम्–अङ्गोपाङ्गच्छेदादिसूत्राणां रचना कृता, अयं भावः–भगवान् श्रीमहावीरः केवलज्ञानसमुत्पत्त्यनन्तरमपापायां नगर्यां समवसृतः, तत्र चातुर्निकायिकदेवकोटीश्वरनरेश्वरादिसंकीर्णायां पर्षदि साधुधर्मः श्रावकधर्मश्चेति द्विविधं धर्ममुपदिशति स्म, तत्र सर्वसावद्यविरत्यात्मको भावस्तवरूपः साधुधर्मः, तं धर्मं प्रतिपद्य गणधरास्तथाविधकर्मक्षयोपशमवशात्तीर्थकरमुखात् त्रिपदीमवाप्य विचित्रगद्यपद्यादिबन्धरचनया द्वादशाङ्गीं रचयन्ति,शङ्खशतकादयस्तु साधुधर्माशक्ताः श्रावकधर्मेच्छवो द्रव्यस्तवात्मकं श्रावकधर्ममङ्गीकृत्य तीर्थकरमुखादवगतसम्यकश्रावककृत्याः यथाशक्ति जिनप्रासादादिकं निर्मापयन्ति स्म, न पुनर्गौतमादिरचितसिद्धान्तवचनं श्रुत्वेति, तथात्वे च श्रावकश्राविकालक्षणमर्धं तीर्थं गणधरस्थापितं भवेत्, सूत्रपाठाद्युच्चारस्य गणधरादिसाधूनामेव संभवात्, इष्टापत्तौ च 'तित्थं चाउव्वण्णो'त्ति वचनात् चतुर्णामपि च साध्व्यादिवर्णानां समुदितानामेव तीर्थत्वं भणितं, तथाविधतीर्थस्थापकत्वाभावात् श्रीऋषभादीनां तीर्थकरत्वमपि न स्यात्, तस्माच्चतुर्णामपि वर्णानां युगपदेव स्थापना ऋषभादिना तीर्थकरेण क्रियते, सा च स्थापना प्रथमसमवसरण एव संजाता, श्रीवीरस्य तु द्वितीय एव समवसरणे। तित्थं चाउव्वण्णो संघो सो पढमए समोसरणे। उप्पण्णो अ जिणाणं वीरजिणिंदस्स बीअंमि॥१॥त्ति (२६५ आव.नि.) एवं साधुश्रावकधर्मयोर्युगपदुत्पत्तौ द्वादशाङ्गीरचनाबुद्धिप्रतिमादिनिर्म्मापणबुद्ध्योर्युगपदेव भावात्, ते च बुद्धी द्वादशाङ्गीरचनाप्रतिमानिर्मापणयोः कारणे संपन्ने, कारणमधिकृत्य सिद्धान्तप्रतिमयोः सहोत्पत्तिरेव, यद्वा कारणे कार्योपचारात् ते बुद्धी एव सिद्धा-

न्तप्रतिमे अप्युच्येते, ननु श्रावकधर्मप्राप्तौ प्रथमं जिनप्रतिमानिर्म्मापणबुद्धिरेव कथमितिचेदुच्यते, श्रावकधर्मे च जिनभवननिर्म्मापणस्यैवोत्कृष्टत्वाद्, एतच्च प्रागेव प्रपञ्चितं, भावनाबुद्ध्या तु चिकीर्षाविषय उत्कृष्टपदार्थ एव भवति, नच 'अत्थं भासइ अरहे'-त्यागमवचनात्तीर्थंकरभाषितार्थात् सूत्ररचनैव युक्ता, न पुनर्जिनभवनादिनिर्मापणमपीति वाच्यं, जिनभवनादीनां निर्मूलकत्वापत्तेः, मूले च विचार्यमाणे भगवान् श्रीमहावीर एव, ननु केन श्रावकेण जिनभवनादिकं निर्म्मापितमितिचेदुच्यते, कारणं हि तावदश्यं कार्यजनकमित्येवं नियमाभावाद् कार्यं नाक्षिपति, नहि मनुजत्वं मोक्षाङ्गमागमे भणितमप्यवश्यं जनयत्येव, तस्यान्याशेषकारणसहितस्यैव कार्यजननसामर्थ्यात्, कार्यं तु नियमात्कारणमाक्षिपत्येव, कारणमन्तरेण कार्यस्यैवानुदयात्, कारणान्यपि प्रति कार्यं कर्तृकरणादीनि विचित्राणि, तत्र प्रकृतं कार्यं तावज्जिनभवनादिकं, तच्च बहुवित्तव्ययसाध्यमतो मिथ्यादृष्टिकारितं न संभवति, संप्रत्यपि तथानुपलम्भाद्, अनन्यगत्या तत्कारयितारं श्रावकमेवाक्षिपति, स च यथा श्रीऋषभतीर्थे भरतचक्रवर्त्ती तथाऽन्येऽपि यावत् श्रीवीरतीर्थे यावन्तः शक्तिभाजः श्रावकाः श्राविकाश्च ते जिनप्रतिमादिकारयितारो बोध्याः, न च नामग्राहं सिद्धान्ते नो भणिता इति वाच्यं, सिद्धान्तव्यवस्थापनावसरे नामग्राहेणापि वक्ष्यमाणत्वात्, किंच–जिनप्रतिमाराधनं श्रावककुले नमस्कारगणनवत् प्रतीतमेवास्ति तेन यथा त्वदभिमते क्वाप्यागमे नमस्कारगणनं नोक्तं, नहि एतावता नमस्कारस्यापि स्मरणाभावः संपद्यते, किंच–साधुश्रावकाचाराणां सिद्धान्तेऽन्वेषणमज्ञानविलसितमेव, सिद्धान्तस्यैव साधुश्रावकाचारैकदेशरूपत्वात्, वृक्षे पुष्पान्वेषणं युक्तं, न पुनः पुष्पेऽपि वृक्षान्वेषणं युक्तिसंगतमित्यादि पर्युषणादशशतके किंचिदुक्तं, वक्ष्यते चाग्रे अत्रैव विश्रामे, तस्माज्जैनप्रासादाः श्रावककारिता एव भवन्ति, तत्र साक्षिणस्तु श्रीसम्प्रतिराजादिनिर्म्मापितप्रासादा एव, यदि श्रीसुहस्तिसूरिप्रतिबोधितेन श्रावकेण

संप्रतिराजेन जैनप्रासादाः कारितास्तर्हि श्रीमहावीरप्रतिबोधितानां श्रावकाणां का कथेति स्वयमेव पर्यालोच्यं, ननु जैनप्रासादा न केवलं श्रावककारिता एव भवन्ति, दिगम्बरादिकारितेषु प्रासादेषु व्यभिचारात्, जैनप्रासादत्वे सत्यपि मिथ्यादृष्टिभिरेव कारितत्वादितिचेन्मैवं, यतो दिगम्बरादिकारिताः प्रासादा न जैनप्रासादाः, किंतु जैनप्रासादाभासाः, यथा कुपाक्षिकाधीयमानमाचाराङ्गमाचाराङ्गाभासो भण्यते, न पुनराचाराङ्गम्, अत एव तदधीत्याप्युन्मार्गगामित्वं लुम्पकस्येव सर्वेषामपि कुपाक्षिकाणां, यद्वा दिगम्बरादयो यथा जैनाभासास्तथा तन्निर्मापिताः प्रासादा अपि जैनप्रासादाभासाः, किंच–लुम्पकमतं प्रति श्रावककारितजैनप्रासादव्यवस्थापनाय दिगम्बरादिकुपाक्षिककारिता जैनप्रासादाभासा अपि साक्षिणस्तल्लिङ्गभूता वा, यथा जैनेषु सत्स्वेव श्रावकाभासा भवन्ति, तथा श्रावककारितेषु जैनप्रासादेषु सत्स्वेव श्रावकाभासकारिता जैनप्रासादाभासा भवन्ति, जैनाभासानां हि जैनक्रियानुकारिचेष्टाश्रितत्वाद्, अन्यथा तदाभासत्वासंभवात्, रजःपर्व्वण्यपि कथंचित्किंचिद्राजचेष्टानुकारेणैव नामतोऽपि राजेत्युच्यते, तथा च यदि जगति राजा नाभविष्यत्तर्हि तदनुकारिचेष्टावान् रजःपर्व्वण्यपि राजा नाभविष्यद्, एवं जैनप्रासादा अपि यदि श्रावककारिता नाभविष्यंस्तर्हि श्रावकाभासकारिता जैनप्रासादाभासा अपि नाभविष्यन्, संप्रति च कुपाक्षिककारिताः प्रासादाभासाः अतस्तत्पूर्वभाविनो जैनप्रासादा अपि सन्त्येव, आभासस्य हि पूर्वभाविवास्तववस्तु प्रतीत्यैव प्रवर्त्तनात्, ननु प्रासादानां साक्षिणः प्रासादा एव कथं संभवन्ति ?, किंतु प्रासादव्यतिरिक्तानि सिद्धान्ताक्षराणि दर्शनीयानीतिचेत्सत्यं, वयमपि पृच्छामः– सिद्धान्ते तव विश्वासः कथं ?, गणधररचितत्वेनेति चेद्गणधररचितत्वमपि कुतो ज्ञातं ?, "सुत्तं गणहररइअं तहेव पत्तेअबुद्धरइअं च। सुअकेवलिणा रइअं अभिण्णदसपुव्विणा रइअं॥१॥"ति पूर्वाचार्यरचितप्रकरणादेवेति चेदहो प्रासादस्य साक्षी

प्रासादः कथमिति भणित्वाऽपि सिद्धान्तस्य साक्षिकं सिद्धान्तैकदेशं प्रकरणादिकं भणन्नपि न लज्जसे, ननु विश्वसनीयाचाराङ्गादि-सिद्धान्ताद्विश्वासजनकस्तत्साक्षिकसिद्धान्तस्तु प्रकरणादिलक्षणो भिन्न एवेति चेच्चिरं जीव, अत्रापि तीर्थकरकालीना ये जैनप्रासादास्ते श्रावकैरेव कारिताः, यतः संप्रतिराजेनापि श्रावकेणैव सता जैनप्रासादाः कारिता इत्येवंरूपेण प्राचीनानां जैनप्रासादादीनां श्रावककारितत्वेऽधुनातनप्रासादा भिन्ना एव साक्षिणः, ननु गणधरकृतत्वेन तीर्थकरकालीनान्येव सम्प्रत्याचाराङ्गादीनि सन्ति जैनप्रासादास्तु तथा नोपलभ्यन्ते तत्कथमाधुनिकप्रासादैः प्राचीनप्रासादादीनां श्रावककर्तृत्वेन निर्णय इति चेदुच्यते, साम्प्रतीनानामाचाराङ्गादीनां कर्त्तारो गणधरा एवेति कुतो ज्ञातं?, प्रकरणाद्यक्षरैरिति चेदत्रापि भरतादिकारितानां प्रासादप्रतिमादीनामष्टापदादिषु सद्भावज्ञापकानि प्रकरणानि बहूनि सन्ति, किंच-अध्यक्षसिद्धानामाचाराङ्गादीनां गणधरा एव कर्त्तार इति सम्यग्निर्णायकानि लुम्पकाभिमतसिद्धान्ताक्षराणि क्वापि नोपलभ्यन्ते, प्रासादप्रतिमादीनां त्वाचाराङ्गादीनीत्यग्रे दर्शयिष्यते इति विशेषः, पारमार्थिकगतिस्त्वेवं-साक्षिकत्वं तावन्न कालनियतं नवा पुरुषनियतं नवा किंचिद्वस्तुनियतं, किंतु यथाकथंचित्किंचित् कस्यचित्तथाविधसंशये सति सिद्धान्तस्यापि साक्षिणः प्रतिमादयः प्रतिमादीनां च साक्षी सिद्धान्त इत्यन्योऽन्यं सापेक्षतैव, तथाहि-आधुनिकश्रावकादिवर्गः पुष्पादिभिर्जिनप्रतिमां पूजयित्वा शक्रस्तवादिकं पठति तच्छ्रावककृत्यं भवति नवेति संशये सति द्रौपदीव्यतिकरनिबद्धं षष्ठाङ्गमेव साक्षिकं, तथा तयैव कृतत्वात्, एवं तथाविधविधिं कुर्वती द्रौपदी श्राविका उत नेति संशये सति संप्रत्यपि श्राविकास्तथैव कुर्वन्त्य उपलभ्यन्तेऽतो निर्णीयते साऽपि द्रौपदी श्राविकैव, मिथ्यात्ववासिन्याः कस्या अप्येवमनुपलम्भात्, तथा आधुनिकश्रावकादिकारितं जिनप्रासादप्रतिमादिकं शोभनमशोभनं वेत्यादि संशये सति श्रीभरतचक्रवर्त्तिकारिताष्टापदप्रासादादिव्यतिकरज्ञापको निर्युक्त्या-

दिसिद्धान्तः साक्षी, एवं भरतेन तथा कृतं श्रावकाणामुचितं नवेति संशये आधुनिका अपि तीर्थवर्त्तिन श्रावकास्तथा कुर्वाणा उप-लभ्यन्तेऽतो युक्तमेव भरतस्यापीत्यन्योऽन्यं सापेक्षतैव श्रेयस्करी, एवं चान्योऽन्यं सापेक्षतायां सिद्धायामपि सिद्धान्ते विश्वासो न पुनः सिद्धान्तस्यापि साक्षिकेषु सिद्धान्तविधानधर्मोपदेशमवाप्य श्रावककारितजैनप्रासादादिष्वपीति महामोहनीयकर्मविमलितमिति-गाथार्थः ॥१०२॥ अथ प्रतिमासिद्धान्तयोरधिकारिणोः श्रावकसाध्वोरप्यन्योऽन्यं सापेक्षतामाह—

अणुण्णं पडिबंधो सवणपइट्ठायणेगकज्जेसु। एवं तित्थपवित्ती अच्छिन्ना जाव दुप्पसहो ॥१०३॥

'अन्योऽन्यं' श्रावकाणां साधूनां च परस्परं प्रतिबन्धः-संबन्धः, अपेक्षेत्यर्थः, साधूनामपेक्षा श्रावकाणां, श्रावकाणां चापेक्षा साधूनामितिभावः, केषु?-'श्रवणप्रतिष्ठाद्यनेककार्येषु' श्रवणं च सिद्धान्तस्य, सिद्धान्तोक्तधर्मोपदेशश्रवणमित्यर्थः, प्रतिष्ठा च-जिन-प्रतिमाप्रासादध्वजादीनां वासनिक्षेपादिपुरस्सरं मन्त्रादिन्यासः, यदुक्तं-"वासाक्षताः सूरिमन्त्रेणाभिमन्त्र्य पवित्रिताः। क्षिप्ता ध्वजेषु दण्डेषु, चैत्यबिम्बेषु सूरिभिः॥१॥" इत्यादि, ते श्रवणप्रतिष्ठे आदौ येषां तानि श्रवणप्रतिष्ठादीनि, एवंविधानि यान्यनेकानि-नानाप्रका-राणि कार्याणि तेषु, अयं भावः-मातर्गुरोः समीपे जैनवचनानि शृणोतीति श्रावक इतिव्युत्पत्त्यैव सिद्धान्तादिश्रवणे श्रावकस्यापि साधोरपेक्षा, तथा प्रतिष्ठायां स्वयं कारितानां जिनप्रतिमादीनां प्रतिष्ठाऽवश्यं कार्या, प्रतिष्ठामन्तरेण पूजाद्यनर्हत्वात्, यदुक्तं-"नि-र्जलं(च)सर इव, व्योमेव गतभास्करम्। अप्रतिष्ठं तथा बिम्बं, नैवमर्हति चारुताम्॥१॥" इति, सा च प्रतिष्ठा साधोरायत्तेति साधो-रपेक्षा, तथा श्रावकस्याप्यपेक्षा त्वेवं-प्रतिष्ठायामपि नेत्रोन्मीलनवासनिक्षेपादि निरवद्यकृत्यं साध्वायत्तं, शेषं तु प्रतिमानिर्मापणादि-वासाञ्जनादिसमानयनपर्यन्तं श्रावकायत्तम्, अतः प्रतिष्ठोद्यतस्यापि साधोः श्रावकापेक्षा, एवं धर्मश्राव्यत्वेऽपि श्रावकापेक्षा साधो-

श्रावकसा-ध्वोरन्यो-न्यापेक्षा

रपि, श्रावकाभावे कस्य धर्मः श्राव्यते ?, नहि रोगिणोऽभावे निपुणस्यापि वैद्यस्य चिकित्साकर्म संभवति, तथा "साहूण कप्पणिज्जं जं नवि दिण्णं कहिंचि किंपि तहिं । धीरा जहुत्तकारी सुसावगा तं न भुंजंति ॥१॥"त्ति प्रवचनवचनादतुल्यपुण्यप्रकृतिबन्धहेतवे सुश्रावकत्वभवनाय अवश्यं विपुलैषणीयाशनादिकं साधुभ्यो देयमेव, तच्च साधुमन्तरेणासंभवीति साधोरपेक्षा, अत एव साधुविरहितदेशे श्रावकस्य निवासो न युक्तः, यदुक्तं-"न वसइ साहुजणविरहिअंमि देसे बहुगुणेऽवि"त्ति, साधोरपि चारित्रभारोद्वहनसमर्थस्य मनुष्यशरीरस्याशनपानखादिमस्वादिमवस्त्रपात्रोपाश्रयभैषजादिकमन्तरेणावष्टम्भासंभवाद्, अशनादिकं च गृहस्थायत्तं, यदुक्तं-"जे खलु सारंभा सपरिग्गहा तेसिं निस्साए बंभचेरवासं वसिस्सामो"त्ति श्रीसूत्रकृदङ्गेऽधिकारवशाद्गृहस्थोऽपि प्रायः श्रावक एव साधुजनशुश्रूषाकारी स्याद् अतः श्रावकापेक्षा, तथा व्रतादिप्रतिपत्त्यादावपि बोध्यम्, एवममुना प्रकारेण यावद्दुप्पसभो-युगप्रधानो दुष्प्रसभनामा सूरिर्भविष्यति तावत्तीर्थप्रवृत्तिरच्छिन्ना, न पुनरन्तराले व्युच्छिन्नायाः, तीर्थप्रवृत्तेस्तीर्थकरव्यतिरिक्तस्य केवलिनोऽप्यहेतुत्वात्,साधुश्रावकयोः परस्परमपेक्षैव, दुष्प्रसहं यावत्तीर्थप्रवृत्तेरितिभाव इतिगाथार्थः ॥१०३॥ अथ तीर्थे साधुश्रावकयोः परस्परं सापेक्षतैवेति नियमार्थं दृष्टान्तत्रयनिबद्धं गाथात्रयं बिभणिषुः प्रथमगाथामाह—

असुहो अहो विभागो सुहो अ उवरिल्लओ सनाभीओ। अण्णुण्णं साविक्खा निरविक्खा दोऽवि नस्संति ॥१०४॥

सनाभितः अधः-अधस्तनो विभागोऽशुभः "थावरदसगं विवज्जत्थं" इतिवचनादशुभप्रकृतिजन्यः, च पुनरर्थे, उपरितनो विभागः शुभः-शुभप्रकृतिजन्यः, यदुक्तं-"नाभुवरि सिराइ सुहं" "सुभगाउ सव्वजणइट्ठोत्ति" एतौ द्वावपि विभागौ अन्योऽन्यं सापेक्षावेव श्रेयोभाजौ, निरपेक्षौ किमस्माकमशुभावयवेनेति धिया पृथक्कृतौ द्वावपि नश्यतः-विनाशं प्राप्नुतः, नाभेरधोभागकल्पः

श्रावकमार्गः, उपरितनभागस्तु साधुमार्ग इति द्वावपि समुदितौ तीर्थं, न च श्रावकमार्गोऽपि पुण्यप्रकृतिजन्य एव, तस्यापि मोक्षमार्गत्वेनाभिधानात्, तथा च कथं पापप्रकृतिजन्येन नाभेरधोभागेनौपम्यमिति शङ्कनीयं, शुद्धश्रद्धानवतोऽपि श्रावकस्य चारित्रमोहनीयकर्मोदयादेव चारित्रपरिणामाभावाच्छ्रावकमार्गप्रतिपत्तेः, चारित्रमोहनीयं कर्म च पापप्रकृतिरेव, न चैवं निष्ठुरवचनमिति वाच्यं, तीर्थकरस्यापि नाभेरधोभागो दुर्भगपापप्रकृतिजन्य इत्यपि वचनस्य निष्ठुरत्वापत्तेः, तस्मादपेक्षया तथा वक्तव्ये न किञ्चिद् बाधकं, न हि तीर्थकृन्मातृत्वेऽपि स्त्रीत्वमनन्तपापप्रकृत्युदयादिति वक्तुं न शक्यते, न वा निष्ठुरवचनमपीति बोध्यमितिगाथार्थः ॥१०४॥ अथ द्वितीयगाथामाह—

**जइवुत्तमो अ पुरिसो पुण्णुदया पावउदयओ इत्थी। अण्णुण्णं साविक्खा पुत्तुप्पत्तीइ तह तित्थं ॥१०५॥**

यद्यपि पुण्योदयात्–पुण्यप्रकृत्युदयात् पुरुष उत्तमः–प्रधानः, पापोदयतः स्त्री अर्थादप्रधाना, उभावपि पुत्रोत्पत्तौ अन्योऽन्यं सापेक्षौ, नैकेन पुत्रोत्पत्तिः स्यात्, एवं तीर्थमपि धर्मोत्पत्तौ साधुश्रावकसापेक्षमिति गाथार्थः ॥१०५॥ अथ तृतीयगाथामाह—

**अंगुट्ठविरहिआओ विहवावत्थव्व अंगुलीथीओ । अंगुट्ठोऽविअ कवले असमत्थो अंगुलीविगलो ॥१०६॥**

अङ्गुष्ठविरहिताः अङ्गुलीस्त्रियः–अङ्गुलीलक्षणाः प्रमदाः विधवावस्था इव–विधवावस्थाः स्त्रियो यथा स्वापत्यं प्रति हेतवो न भवन्ति तद्वदमूरपि कवले उपलक्षणादन्यस्मिन्नपि तथाविधे लिखनादौ कर्मणि चासमर्था भवन्ति, च पुनरङ्गुष्ठोऽपि अङ्गुलीविकलोऽसमर्थः कवलादौ कृत्ये, एवं साधुश्रावकसमुदायात्मके तीर्थे प्रधानाप्रधानकल्पनत्यागो महामूर्खतेतिगाथार्थः॥१०६॥ अथोक्तदृष्टान्तैः साधुश्रावककृत्येष्वपि सापेक्षतामाह—

एवं खु भावपूआ साविक्खा होइ दव्वपूआए। अण्णह मुणिंददाणे तह मइए तित्थवुच्छेओ ॥१०७॥

एवं प्रागुक्तदृष्टान्तैः खुरवधारणे भावपूजा द्रव्यपूजया सापेक्षा, द्रव्यपूजाविषयस्यैव भावपूजाविषयत्वात्, यो द्रव्यपूजायोग्यो न भवति स भावपूजायोग्योऽपि न भवति, यथा निह्नवः, भावपूजा हि तदाज्ञाराधनं सर्वभावेनेह बोध्यं, यदुक्तं-"दुविहा जिणिंदपूआ दव्वे भावे अ तत्थ दव्वमि। पुप्फाई जिणपूआ जिणआणापालणं भावे ॥१॥" इति, अन्यथा भावस्यैव प्राधान्ये तस्यैवाङ्गीकारो युक्तो, नेतरस्यापीति स्वीकारे मुनिदाने तथाभक्त्या तीर्थव्युच्छेदः स्यात्, द्रव्यतोऽशनादिदानं द्रव्यदानं, तदपेक्षया शुभाध्यवसायो भावदानं तदेव कर्त्तव्यतया युक्तं स्यात्, तथा च साध्वादीनामनिर्वाहे साधूच्छेदः, तदुच्छेदे च नियमात् तीर्थच्छेदः, यदुक्तं-"न विणा तित्थं नियंठेहिं"ति पश्चाच्छकवृत्ताविति गाथार्थः ॥१०७॥ अथ 'तित्थयरभासिअत्थे'त्यादिप्रागुक्तगाथायां सिद्धान्तप्रतिमयोः सहोत्पत्तिर्भणिता, तत्र द्वयोर्मध्ये किं बलवदिति शङ्कां निराकर्तुं गाथामाह—

सिद्धंता जिणपडिमा बलिआ पडिमाउ तित्थमवि बलिअं। विवरीअंपि कहंची तेणमणेगंत जिणवयणं ॥१०८॥

सिद्धान्तात् प्रतिमा बलिका-बलवती "जिणपडिमाणं अच्चणं करेइ" इत्यत्र जिणपडिमाणमितिशब्दात् प्रतिमाया आकारनिर्मापणं तज्ज्ञानादि न संभवति, तथा प्रतिमा नामाकाराभ्यां शाश्वतस्वरूपा अपि, सिद्धान्तस्तु सूत्ररूपोऽशाश्वतरूप एव, अर्चनशब्दमात्रेण न पूजाविधेश्च संभवः, संभवति च सर्वमपि तथाविधपूजाविषयीभूतां प्रतिमां दृष्ट्वेति, यद्वा सिद्धान्तवाक्याद्वस्तुनोऽपि किंचित्सामान्यतो ज्ञानमात्रं भवति, ज्ञानमपि क्रियासंयुक्तमेव फलदं, क्रिया च स्वविषयीभूतां प्रतिमामन्तरेण न स्यात्, न हि समग्रसामग्रीसध्रीचीनापि पाकादिक्रियानिपुणाऽपि स्त्री तन्दुलान् विना पाकप्रयत्नवती भवति, किंच-मया तुभ्यं लक्षं देयं, त्वया

प्रतिमाया बलवत्ता

च मचो लभ्यमिति वाक्यमात्रेण न काचिदप्यर्थसिद्धिर्भवति, किंतु शतमात्रस्यापि दानेनेत्यादियुक्तयः स्वयमभ्यूह्याः, तस्मात्सिद्धान्तापेक्षया प्रतिमा बलवती, प्रतिमातोऽपि तीर्थं बलवत्, यत उभयोरप्याधारस्तीर्थमेव, न पुनस्तीर्थस्याधारस्ते उभे, कालपरिहान्या श्रुतपरिहानौ तीर्थस्य खण्डितत्वापत्तेः, आधारे नष्टे तद्गताधेयस्यावश्यं नाशात्, नहि घृतभाजने भग्ने घृतं तिष्ठतीति, न चैवमाधेयहानावाधारस्यापि परिहानिर्भविष्यतीति शङ्कनीयं, घृतहानावपि तद्भाजनस्य तादवस्थ्येनोपलम्भाद्, एतेन सिद्धान्तादस्माभिस्तीर्थं प्रवर्त्तितमिति ब्रुवाणा राकादिपाशपर्यन्ताः कुपाक्षिका निरस्ता एव बोध्याः, तीर्थमन्तरेण सिद्धान्तस्यैवासंभवात्, यतः सिद्धान्तः तीर्थधर्मः, स हि धर्मिणं विहाय न तिष्ठति, नहि धर्मो धर्मिणमतिरिच्य क्वचन केवलो विलोकित इतिवचनात्, न वा धर्माद् धर्मिण उत्पत्तिः, किंतु धर्मिण एव धर्मा उत्पद्यन्ते, यदागमः—"दव्वप्पभवा य गुणा न गुणप्पभवाइं दव्वाइं"ति (७९२) श्रीआव० निर्युक्तौ, अत्र गुणा धर्मा इत्यादि, न चैकान्तेनैव जिनप्रतिमातस्तीर्थं बलवदेवेत्याह-विपरीतमपि क्वचित् कथंचिदपेक्षामधिकृत्य विपरीतमपि, तथाहि—तीर्थेन तीर्थकरप्रकाशाद् ज्ञानादिलक्षणो मोक्षमार्गोऽवाप्तस्तेनावश्यं तीर्थकरपूजा कर्त्तव्या, अन्यथाऽऽस्तां धर्मव्यवहारो, लोकव्यवहारोऽपि विलुप्तः स्यात्, सा च पूजा साक्षात्पूज्यापेक्षया तत्प्रतिमायां परमभक्तिसूचिका, यथा धन्यास्ते ग्रामादयो यत्र भगवान् श्रीमहावीरो विहरति, धन्यास्ते नरा ये भगवन्तं पश्यन्तीत्यादिरूपेण ग्रामादीनामामेव स्तुतिर्भगवतः परमभक्तिसूचिका, न तथा धन्यस्त्वं यद् ग्रामादौ विहरसि जना वा त्वां पश्यंतीत्यादियुक्त्या प्रतिमा पूज्या, तीर्थं च पूजकमित्येवं पूज्यपूजकभावमधिकृत्य पूजकापेक्षया पूज्यं बलवदिति तीर्थादपि प्रतिमा बलवती, तथोपकृतिमधिकृत्यापि बलवत्त्वं, यथा पुण्यप्रकृत्यादिबन्धहेतुत्वेन सुलभबोधिजनकत्वेन च जिनप्रतिमा तीर्थस्य परमोपकर्त्री, न तथा तीर्थमपि जिनप्रतिमायाः किंचिदुपकर्त्तृ, यथा चिन्तामण्यादयो मनु-

जानाद्युपकृतिहेतवो न तथा मण्यादीनां मनुजा अपीत्यादिरूपेणोपकार्योपकारकभावमधिकृत्योपकार्यपेक्षयोपकारकं बलवदिति तीर्थादपि प्रतिमा बलवतीति सिद्धम्, एवं प्रतिमापूजने किंचित्फलमस्ति उत नेति, फलमपि शुभमशुभं वा ? तदपि महदल्पं वेत्यादि संशये सति 'हिआए सुहाए खमाए निस्सेसाए आणुगामिअत्ताए भविस्सती'त्यादिराजप्रश्नीयादिप्रवचनेन तत्संशयोच्छेदो भवति, तथा च तथाविधसंशयोच्छेदमधिकृत्य प्रतिमातोऽपि सिद्धान्तो बलवान्, यथा साधूनां मनोऽश्वदमने रज्जुकल्पः सिद्धान्तः, यदुक्तं- "पहावंतं निगिण्हामि, सुअरस्सीसमाहिअं। न मे गच्छइ उम्मग्गं, मग्गं च पडिवज्जइ॥१॥त्ति" श्रीउत्त० (८८७*)इत्यादिरूपेणापेक्षया किंचित्कथञ्चिद्बलवत्, तेन कारणेन जिनवचनमनेकान्तं, स्याद्वादात्मकमित्यर्थः, अत एव घटोऽस्त्येवेत्यादिदुर्नयवादिनो मिथ्यादृशः, जैनप्रवचने च स्याद् घटोऽस्त्येवेति प्रमाणवाक्यमनेकान्तात्मकम्, अपेक्षयाऽन्यथापि स्यादितिगाथार्थः ॥ १०८ ॥ अथानेकान्तस्वरूपमाह—

सव्वं खलु साविक्खं साऽविक्खा पडिपयत्थमवि भिण्णा। भिण्णत्तंऽपेगस्सवि अवरावरवत्थुसंकप्पा ॥१०९॥

सर्वं जगद्वर्त्ति यावद्वस्तुजातं खलुरवधारणे सापेक्षमेव, विवक्षितं वस्तु किंचिदपेक्षया कार्यकारि किंचिदपेक्षया च नेतिरूपेण सहापेक्षया वर्त्तते तत्सापेक्षं, सा चेत्यध्याहार्यं, सा चापेक्षा प्रतिपदार्थमपि भिन्ना, भिन्नत्वमप्येकैकस्यापि वस्तुनः अपरापरवस्तुसंकल्पाद् भवतीतिगाथार्थः ॥१०९॥ अथापेक्षायामुदाहरणमाह—

नियपुत्तोऽविअ मित्तं कस्सवि णो तेण रज्जवइ हुज्जा। गुज्झपवित्तिप्पमुहं मित्तत्ताओ न नियपुत्ता ॥११०॥

नृपपुत्रोऽपि च कस्यापि मित्रं न तेन कारणेन राज्यपतिर्भवेत्, राज्यपतित्वहेतुर्मित्रत्वं न भवति, किंतु नृपपुत्रमेव, गुह्य-

प्रतिमाया बलवत्ता

प्रवृत्तिः-प्रच्छन्नसमाचरितवार्त्ता तत्प्रमुखं मित्रत्वाद्भवति, गुह्यवार्तां प्रति मित्रत्वमेव कारणं, न नृपपुत्रात्-भावनिर्देशात् नृपपुत्रत्वात्, न भवतीत्यर्थः, अयं भावः-एकस्मिन्नेव नृपपुत्रे नृपापेक्षया पुत्रत्वं यज्ञदत्तापेक्षया च मित्रत्वं चेति पुत्रत्वमित्रत्वलक्षणौ द्वौ धर्मौ विद्येते, तत्र राज्यपतित्वं प्रति नृपपुत्रत्वं बलवत्,न तु मित्रत्वं, गुह्यप्रवृत्तिं प्रति मित्रत्वमेव बलवत्, न पुनर्नृपपुत्रत्वमपीत्यपेक्षया कथञ्चित्किञ्चिद् बलवन्न वेति बोध्यम, अत एव सर्वं वस्तु स्वरूपापेक्षया सत् पररूपापेक्षया वाऽसत् तेनैव सद् १ असत् २ सदसत् ३ अवक्तव्यं ४ सदवक्तव्यं ५ असदवक्तव्यं ६ सदसदवक्तव्यं ७ चेति सप्तभङ्गीसंगीतिसंगि सकलमपि सकलादेशविषय इतिगाथार्थः ॥११०॥ अथ तीर्थान्तर्वर्त्तिनां सर्वेषामपि परस्परं सापेक्षतायां दृष्टान्तबाहुल्यदिदृक्षया प्रथमगाथामाह—

पुरिसस्स उत्तमंगं सेसावयवेहि संगयं फलवं। अण्णुण्णं साविक्खा किरिआसु न किंचि निरविक्खा ॥१११॥

उत्तमाङ्ग-शरीरगतेषु सर्वेष्वप्यवयवेषु मस्तकं प्रधानम्, अत एवास्योत्तमाङ्गमिति नाम, तदपि पुरुषस्योपलक्षणात्सर्वेषामपि शेषावयवैः-हस्तपादोदरकण्ठपीठादिलक्षणैः संगतं-मिलितं संबद्धमितियावत् फलवद्भवति, एवं कुत इति विशेषणद्वारा हेतुमाह-'अण्णुण्णं'ति यतः कारणादुत्तमाङ्गं शेषावयवाश्चान्योऽन्यं सापेक्षाः, कासु?-क्रियासु, न किंचिन्निरपेक्षाः, अयं भावः-उत्तमाङ्गशब्देनात्र कण्ठादूर्ध्वावयवो ग्राह्यः, तस्योचिता क्रिया मुखधावनादि, तथा विभूषणालक्षणा क्रिया कर्णादावाभरणादिपरिधानं यावन्नेत्रयोरञ्जनादि, तत्सर्व्वमपि हस्ताङ्गुल्याद्यवयवसाध्यं, हस्तादेरपि स्वस्योचितक्रिया मुखनेत्रश्रवणादिसाध्या, तथाहि-नेत्राभ्यां निरीक्ष्य श्रवणाभ्यां च श्रुत्वा मदीयहस्तादाविदं कुरु मुञ्चेत्यादि मुखेन भाषणमित्यादिरूपेणोत्तमाङ्गसाध्या शेषावयवानामपि स्वस्वोचितक्रियेति, यद्वा हस्ताद्यवयवैरेव नेत्रादीनां त्राणं स्यात्, तथाविधपुरुषेण केनचित् क्रियमाणो नेत्राद्युपद्रवो हस्ताद्यवयवैरेव

पराक्रियते, न पुनः प्रधानेनाप्युत्तमाङ्गेन, तथा सर्पादिस्पर्शाविरुद्धार्त्तादिपातादिना हस्ताद्यवयवोपद्रवो नेत्रादिनैव वार्यते, शब्देन वाऽन्येभ्यो ज्ञाप्यतेऽपीत्येवमपेक्षा सर्वजनप्रतीता स्वयमेव योज्येति गाथार्थः ॥१११॥ अथोक्तदृष्टान्तेन दार्ष्टान्तिकयोजनामाह—

एवं तित्थनरस्सवि मुणिवग्गो उत्तमंगमवसेसा। सेसावयवाण्णुण्णं साविक्खा धम्मकिरिआसु ॥११२॥

एवं-प्रागुक्तदृष्टान्तेन तीर्थनरस्य साध्व्यादिसमुदायलक्षणस्य मुनिवर्गः-साधुसमुदायः उत्तमाङ्गं-मस्तकम् अवशेषाः-साधुव्यतिरिक्ताः साध्वीश्रावकश्राविकालक्षणाः शेषा अवयवा हस्तपादाद्यवयवकल्पा अन्योऽन्यं सापेक्षाः, कासु ?-धर्मक्रियासु, उपलक्षणाद्यावन्तस्तीर्थानुयायिनो ये सचेतना अचेतना मिश्रा वा पदार्था भवन्ति ते सर्वेऽपि बोध्याः, 'न विणा तित्थं नियंठेहिं'ति वचनात् साधुमन्तरेण श्रावकादेरभावात् श्रावकादिसमुदायमन्तरेण तीर्थवर्त्तिधर्मोपदेशकमाधोरप्यभावादित्यन्योऽन्यं सापेक्षा इति, क्रिया अधिकृत्य तु साध्वनुष्ठानं श्रावकसापेक्षं श्रावकानुष्ठानं साधुसापेक्षं यावद्गणधरपदप्रतिष्ठायामपि शक्रापेक्षा, तीर्थकृतापि शक्रानीतस्यैव वासस्य गणधरमस्तके निक्षेपाद्, एवं सर्वत्रापि योज्यमितिगाथार्थः ॥११२॥ अथोक्तदृष्टान्तेन प्रसङ्गतः प्रकृतं लुम्पकमतं दूषयितुमागमनरं दार्ष्टान्तिकतया योजयति—

एवं आगमपुरिसे जिणभणिअत्थो अ मत्थयं सेसं। अंगउवंगप्पगरणपमुहं सव्वंपि साविक्खं ॥११३॥

'एवं' 'पुरिसस्से'त्यादिगाथोक्तदृष्टान्तेनागमः-सिद्धान्तस्तद्रूपो यः पुरुषः तत्र जिनभणितोऽर्थो मस्तकं, शेषमङ्गोपाङ्गप्रकरणप्रमुखं सर्वमन्योऽन्यं सापेक्षं हस्ताद्यवयवकल्पमिति गम्यमित्यक्षरार्थः, भावार्थस्त्वयं-आव्योम परमाणुपर्यन्ता येऽर्थास्ते स्वस्ववाचकशब्दसापेक्षाः, शब्दाऽङिनोपदेशद्वारा स्वस्वविषयकप्रवृत्तिनिवृत्तिहेतवोऽन्येषां न भवन्ति, न वा शब्दा अपि स्वस्ववाच्यविकलाः

डित्थडवित्थादिवत् प्रवृत्तिनिवृत्तिहेतव इति वाच्यवाचकभावस्वरूपसंबन्धसापेक्षा अर्थाः शब्दाश्च, तत्र जिनभणिताः–तीर्थकरभाषाविषयीभूता अर्था वाच्याः, गद्यपद्यादिबन्धात्मकमङ्गोपाङ्गप्रकरणप्रमुखं वाचकं, तेषां शब्दात्मकत्वात्, तीर्थकरसकाशाच्चीर्थकरभाषया वाच्यानर्थान् साक्षादुपलभ्य गणधरैः शिष्यप्रशिष्यादिभिस्तु परम्परयोपलभ्य चाङ्गोपाङ्गप्रकरणादीनि तदर्थवाचकानि रचितानि, गणधरादिविचित्रकर्मक्षयोपशमपुण्यप्रकृत्यादिजन्यानां शब्दानां वैचित्र्येऽपि वाच्यानामर्थानामैक्याद्वस्तुगत्या सर्वेषामपि शास्त्राणामभेद एवावगन्तव्यः, प्रवृत्तिनिवृत्त्यादिजन्यत्वे विशेषणाभावाद्, यथा देशजात्यादिविशेषवशात् कथंचिद्भाषाभेदसंभवेऽपि मणिमौक्तिकादीनां वाच्यानामर्थानामभेदेनैव प्रवृत्तिनिवृत्त्यादिव्यवहारादिषु साम्यमेवास्ति, एवं च सति यः कश्चिद्गणधरकृताङ्गोपाङ्गाद्युक्तमेव प्रमाणं, न पुनः प्रकरणाद्युक्तमपीति ब्रुवाणोऽमुकदेशीयोऽमुकजातीयो वा निजभाषापुरस्सरं स्वर्णादिवस्तु दास्यति तदा ग्रहीष्यामि स्वर्णादिव्यवहारं च स्वीकरिष्यामि, न पुनर्भाषान्तरेणोच्यमानं स्वर्णमपि श्रद्धास्यामीत्यादिकं वदन्निव देवानांप्रियोऽवगन्तव्यः, यतः प्रवृत्तिनिवृत्तिव्यवहारस्तु स्तम्भकुम्भाम्भोरुहादिवाच्यापेक्षया न पुनर्वाचकापेक्षयाऽपीति जगत्संस्थितेः, एकस्यापि वाच्यस्य देशकालादिभेदेन सर्वेऽपि शब्दा वाचकतया बभूवांसः, यथा म्लेच्छजातिविशेषेण तिलाशब्देन सुवर्णं भण्यते देशविशेषे च धान्यविशेष इति, न पुनर्वाच्यानामपि परस्परं परावृत्तिः, नहि कदाचिदपि जलकृत्यं घृतेन साध्यते इत्यादि स्वयमेवालोच्यमितिगाथार्थः ॥११३॥ अथ पुनरपि प्रसङ्गतः प्रकृतं दूषयितुं दार्ष्टान्तिकमाह—

एवं अरिहनरस्सवि भावजिणो उत्तमंगमवसेसं। ठवणप्पमुहा जिणिंदा निअनिअकिरिआसु साविक्खा ॥११४॥

एवं–प्रागुक्तप्रकारेणार्हन्नरस्यापि–नामादिचतुर्विधस्यापि जिनेन्द्रस्य विवक्षया समुदायेन नरस्य भावजिनो हि उत्तमाङ्गकल्पः,

अवशेषाः-स्थापनाप्रमुखाः नामस्थापनाद्रव्यरूपा अर्हन्तः शेषावयवकल्पाः इति गम्यं, निजनिजक्रियासु सापेक्षा इत्यक्षरार्थः, भावार्थस्त्वयं-नामस्थापनाद्रव्यभावैश्चतुर्भिरपि निक्षेपैः सामान्यत एक एवार्हन् कल्प्यते, तत्र भावार्हन् उत्तमाङ्गकल्पः, शेषास्त्रयोऽपि तदवयवकल्पाः, परस्परमनुगताः स्वस्वकार्येषु सापेक्षाः, अपेक्षा चैवं-सामान्यतोऽर्हन् विशेषत ऋषभोऽजित इत्यादिनामभिर्विना भावार्हतोऽपि सम्यग्ज्ञानध्यानादेरसंभवः, स्थापनां विना च भावार्हतोऽप्याकृत्यादिदर्शनासंभवः, आकृत्यादिदर्शनाभावे च ध्यानावलम्बनाभावः सर्वकालमर्हद्विषयकपूजादिविधेरसंभवश्च स्यात्, द्रव्यमन्तरेण भावार्हतोऽप्यसंभवः, 'द्रव्यं हि भावकारण'मितिवचनाद्, एवं नामस्थापने अपि भावार्हन्तं विना कस्य क्रियेते ?, स्थापनायामप्यभिधानं भावार्हत्संबन्ध्येवेति नामस्थापनयोरपि भावार्हतोऽपेक्षा, द्रव्यार्हत्त्वमपि भावार्हदपेक्षयैव वक्तुं शक्यते, यदि मरीचिजीवोऽपि भावी भावार्हन्नाभविष्यत्तर्हि द्रव्यार्हद्बुद्ध्या भरतचक्रवर्ती 'जं होहिसि तित्थयरो अपच्छिमो तेण वंदामी'त्यादि(आव० ४२८)वचोभिः-स्वाभिप्रेतं भक्तिवन्दनं कथं प्राकटिष्यत् ?, कथं वाऽष्टापदे तत्प्रतिमामप्यकारयिष्यत्, कारितवांश्च तत्प्रतिमां, यदागमः-"थूभसय भाउआणं चउवीसं चेव जिणहरे कासी। सव्वजिणाणं पडिमा वण्णपमाणेहि निअएहिं॥१॥" श्रीआव० नि० भाष्ये (४५) किंच-आस्तामन्यत्र, भावार्हन्नपि समवसरणे चतूरूपः सन् धर्मदेशनां कुर्वाणो निजप्रतिरूपकसापेक्ष एव, तत्र त्रीणि प्रतिरूपकाणि, तानि तु देवकृतान्येव, यदागमः-"जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स। तेसिंपि तप्पभावा तयाणुरूवं हवइ रूवं ॥१॥"इति श्रीआ० नि० (५५७) तानि च प्रतिरूपकाणि तथा वस्तुस्वाभाव्यात् स्वल्पकालस्थितिकान्यपि जिनबिम्बान्येव, तदभावे च समवसरणरचनाया एवासंभवात्, तथात्वे च तीर्थकृन्नाथकर्मजन्यपूजास्वादासंभवात्, तदभावे च तीर्थकृत्कर्मणो भोगाभावेन मुक्त्यनवाप्तेः, किंच-प्राचीनदिग्व्यतिरिक्तासु तिसृषु

दिशु स्थितानां देवादीनां तीर्थकराभिमुखत्वाभावेन धर्मश्रवणस्याप्यनुचितत्वाद्, यदागमः—"न पक्खओ न पुरओ, नेव किच्चाण पिट्ठओ। न जुंजे ऊरुणा ऊरुं, सयणे नो पडिस्सुणे ॥१॥" इति श्रीउत्त० (१८*५-३८०*)इयं च युक्तिस्तीर्थव्यवस्थापनाविश्रामे लुम्पकविशेषस्याञ्जनमाध्यचक्षूरोगस्याञ्जनतयोक्तेत्याद्यनेकप्रकारेण परस्परसापेक्षता योज्येतिगाथार्थः ॥ ११४ ॥ अथ प्रकृतं मतं दूषयितुं दृष्टान्तोपसंहारमाह—

एवं घयघयभायणपमुहुदाहरणाइं लोअसिद्धाइं। मुणिउं निउणमईए णेअं सव्वंपि साविक्खं ॥११५॥

एवम्—अमुना प्रकारेण घृतघृतभाजनप्रमुखोदाहरणानि लोकसिद्धानि ज्ञात्वा निपुणमत्या सर्वमपि सापेक्षं ज्ञेयं, घृतभाजनं हि घृतमपेक्षतेऽन्यथा घृतभाजनमित्यभिधानस्याप्यसंभवाद्, घृतमपि घृतभाजनमपेक्षते, तद्विना तत्स्थितेरसंभवादित्येवं सापेक्षतेति गाथार्थः ॥११५॥ अथैवं सापेक्षतायां लुम्पकस्य कुविकल्पः श्रोतुर्न सुखावह इति दर्शयन्नाह—

तत्थवि दुक्खं मुक्खे पवरमिणं नेति वा विगप्पेणं। चइऊणमप्पहाणं इच्छइ कुसलंपि इअरस्स ॥११६॥

तत्रापि—सापेक्षतायामपि इदं प्रवरं—प्रधानमिदं च नेति वा विकल्पेनाप्रधानं त्यक्त्वा मूर्खो लुम्पक इतरस्य—प्रधानस्य कुशलमिच्छतीति श्रोतुर्दुःखमिति, नहि घृतापेक्षया घृतभाजनमप्रधानमिति बुद्ध्या घृतभाजनं परित्यज्य घृतस्य कुशलं कोऽपीच्छतीतिगाथ इतिगाथार्थः ॥११६॥ अथ प्रकारान्तरेण प्रतिमाव्यवस्थापनाद्वारा लुम्पकमतं दूषयितुं युक्तिमाह—

दव्वत्थयभावत्थय चक्कदुगं तित्थधम्मपवररहे। दव्वथओ खलु सावयधम्मो भावो अ मुणिधम्मो ॥११७॥

द्रव्यस्तवश्च भावस्तवश्च द्रव्यस्तवभावस्तवौ तावेव चक्रे—नेमी तयोर्द्विकं 'तीर्थधर्मप्रवररथे' तीर्थधर्मो—जिनभाषितो धर्मस्तल्लक्षणः

प्रवरस्थः-प्रधानस्यन्दनः तत्र वर्त्तते, द्रव्यस्तवभावस्तवौ विवेचयति-द्रव्यस्तवः खलुरवधारणे श्रावकधर्मः, चः पुनरर्थे, भावो-भावस्तवो मुनिधर्मः-साधुधर्म इतिगाथार्थः ॥११७॥ अथ किं नामोत्कृष्टो द्रव्यस्तवो भावस्तवश्चेति व्यक्तीकरोति—

दव्वथओ उक्कोसो जहसत्तिं जिणहराइनिम्मवणं। भावथओ उक्कोसो चारित्तं चेव अहखायं ॥११८॥

यथाशक्ति-शक्त्यनतिक्रमेण जिनगृहादिनिर्म्मापणमुत्कृष्टो द्रव्यस्तवो भवति, यस्य सुवर्णप्रासादरत्नप्रतिमानिर्म्मापणाशक्तिः स तथैव कुर्वाणो द्रव्यस्तवे उत्कृष्टो भण्यते, एवं यस्य यथा शक्तिस्तथैव प्रवर्त्तमानोऽवगन्तव्यः, यथाख्यातमेव चारित्रमुत्कृष्टो भावस्तवः, यद्यपि तीर्थप्रवृत्तिहेतू सामायिकच्छेदोपस्थापनीये भवतस्तथापि तयोरप्याराधनं तदर्थमेवेतिकृत्वा न दोष इतिगाथार्थः ॥११८॥ अथैवं सिद्धे लुम्पकाज्ञानमाह—

तत्थेगयरचाओ सीकारो वावि केण णाणेणं ?। तत्थवि सिद्धंताओ बलवंतीएऽवि पडिमाए ॥११९॥

तत्र-द्रव्यस्तवभावस्तवरूपचक्रद्वयसंयुक्ते धर्मरथे एकतरस्य त्यागः स्वीकारो वा केन ज्ञानेन ?, द्वयोर्मध्ये द्रव्यस्तवं परित्यज्य भावस्तवाङ्गीकारे किं ज्ञानं ?, न किमपि, किंत्वज्ञानमेव लुम्पकमते, एकेन चक्रेण रथो न निर्वहते तथा द्रव्यस्तवमन्तरेण भावस्तवेन तीर्थं परम्परायातसामायिकाद्यनुष्ठानं, भावस्तवे विद्यमानादपि सिद्धान्ताद् बलवत्त्या अपि प्रतिमायास्त्यागो महामोहो, महामिथ्यात्वमोहनीयोदय इत्यर्थः, यच्च सिद्धान्तादपि प्रतिमायाः बलवत्त्वं तच्च 'सिद्धंताओ पडिमा' इत्यादिगाथाव्याख्यायां समर्थितमिति, न च भावस्तवे विद्यमानत्वात्सिद्धान्तस्य बलवत्त्वं भविष्यतीति शङ्कनीयं, भावस्तवे विद्यमानानां सर्वेषामपि तथात्वाभावात्, अत एव कायोत्सर्गलक्षणे धर्मकृत्ये "वंदणवत्तिआए पूअणवत्तिआए" त्ति सूत्रेण साधुभिरपि तत्फलप्रार्थना विधीयते, किंच-आपे-

क्षिकमापिक्यमपि युक्तमेवेत्यपि प्राग् प्रदर्शितमितिगाथार्थः ॥११९॥ अथ गाथाद्वयेन पराशङ्कामाह—

णणु जिणआणादेसो दव्वथओ सव्वहा य भावथओ। ता देसाणाखंडणरूवो दव्वत्थओ जाओ ॥१२०॥
एवं कुवक्खिआणं पक्खोऽवि देसखंडणारूवो। तत्थवि एगो मग्गो तन्नोत्ति निमित्तमिह भणह ?॥१२१॥

ननु जिनाज्ञादेशो द्रव्यस्तवः, चः पुनरर्थे, सर्वथा जिनाज्ञारूपो भावस्तवः, एवं सिद्धे देशाज्ञाखण्डनरूपो द्रव्यस्तवो जातः, एवं च सति कुपाक्षिकाणां पक्षोऽपि देशखण्डनारूपो-जिनाज्ञादेशखण्डनात्मकः, यतः कुपाक्षिकैरपि सर्वथा जैनप्रवचनं नाभ्युपगम्यते इति वक्तुं न शक्यते, किंतु क्वचिद्देशे विप्रतिपत्तौ तदेकदेशः, सोऽपि प्रायः संशयारूढः, तत्रापि श्रावकमार्गे जिनाज्ञाऽल्पीयसी, कुपाक्षिकाणां तु भूयोऽङ्गीकारस्तत्राप्येकः श्रावकधर्मो जिनाज्ञारूपो मार्गो मोक्षमार्गः, नान्यः कुपाक्षिकाभ्युपगतधर्मो मोक्षमार्ग इति इह इति-अत्र निमित्तं-कारणं भणत, अमुकहेतुना श्रावकधर्मो मार्गोऽमुकहेतुना च कुपाक्षिकमार्गो नेति व्यक्त्या कारणं कथयतेति पराशङ्कात्मकगाथायुग्मार्थः ॥१२०-१२१॥ अथ पराशङ्कामपाकर्तुमाह—

जीवो अणाइआसवपहवडिओ दुब्बलो अ कम्मवसा। पडिवज्जिअ जिणआणं सणिअं सणिअं तमोसरई ॥१२२॥

जीवोऽनाद्याश्रवपथपतितः-अनादिकालान्मिथ्यात्वाविरतिकषाययोगाश्रवमार्ग एव पतितोऽनवरतं वर्त्तते, दुर्बलश्च कर्मवशात्-कर्मपारतन्त्र्यात्, सहसा त्यक्तुमसमर्थः, अर्थादाश्रवान्, यदागमः-"बीअकसायाणुदये अप्पच्चक्खाणनामधिज्जाणं। सम्मद्दंसणलंभं विरयाविरइं न हु लहंती॥१॥"त्यादि (आव०१४२) तस्मात्, स कीदृशो ?-जिनाज्ञां प्रतिपद्य-जिनोक्तो मार्गः सम्यगिति जिनोक्तवचनमासाद्य शनैः शनैः-ततः ततः आश्रवात् अपसरति, जिनाज्ञामङ्गीकृत्य जिनोक्तोपायेन शनैः शनैस्तानाश्रवान् निरुणद्धि,

जिनाज्ञा चैवं-तीर्थकरव्यवस्थापितसाधुसाध्वीश्रावकश्राविकालक्षणस्याच्छिन्नप्रवृत्तिमतस्तीर्थस्याज्ञा न मदाज्ञातो भिन्नेतिकृत्वा त्वया तीर्थाज्ञया तीर्थानुकूलवृत्त्या च प्रवर्त्तनीयमिति जिनाज्ञामवाप्य तीर्थान्तर्वर्त्ती तीर्थभक्तोऽसौ तीर्थेन तथा प्रवर्त्यते यथाऽसौ क्रमेणाश्रवान् परित्यजत्येवेति गाथार्थः ॥१२२॥ अथैवं श्रावकः कुपाक्षिकश्च कीदृशौ स्यातामित्याह--

**एवं सो सावओ खलु जिणआणाराहगो न निण्हगो। मूलाओ जिणआणापरम्मुहो दुम्मुहो लोए ॥१२३॥**

एवं-प्रागुक्तप्रकारेण प्रवर्त्तमानः श्रावकः खलु निश्चितं जिनाज्ञाराधको भवति, तीर्थानुकूलतया प्रवर्त्तितव्यमित्यादिजिनाज्ञां पुरस्कृत्यैव प्रवर्त्तनात्, 'न निण्हगो'त्ति निह्नवस्तु नैवं-श्रावकवत् जिनाज्ञाराधको न भवति, कुत इति विशेषणद्वारा हेतुमाह-यतः स कीदृशः ?-मूलात् जिनाज्ञापराङ्मुखः-जिनाज्ञाविपरीतचारी, जिनाज्ञा तावदच्छिन्नतीर्थानुकूलतया प्रवर्त्तनं, तद्विपरीतं प्रतिकूलतया प्रवर्त्तनं, तेन चरणशीलो जिनाज्ञाविपरीतचारीति पर्यायार्थः, अयं भावः-आस्तां तीर्थानुकूलतया प्रवृत्तेरभावः, किंतु तीर्थप्रतिकूलचारिणं तीर्थाभासं विकल्प्य तीर्थपराभवकारी, न चैतावदेव दूषणं, किंतु पुनः कीदृशोऽसौ ?-'दुर्मुखः' अशुचिजल्पनेन दुष्टं मुखं यस्य स दुर्मुखः, नैतत्तीर्थं मार्गानुयायि, किंतु सिद्धान्तमार्गानुयायिनो वयमेवेत्यादिकुवचनादिना पापमुख इत्यर्थः, लोके-जैनलोके, तेन निह्नवेन जिनाज्ञा न मूलादप्यादृता इतिगाथार्थः॥१२३॥ अथ कुपाक्षिकेण मूलतो जिनाज्ञा नाभ्युपगतेत्यत्र हेतुमाह-

**जम्हा जिणिंदठविअं तित्थं अच्छिन्नमेव चइऊणं। तप्पडिवक्खपवत्ती जिणुत्तमिति अलिअवयणेणं ॥१२४॥**

यस्मात् कारणाज्जिनेन्द्रेण स्थापितं-श्रीवीरजिनस्थापितमच्छिन्नं तीर्थं त्यक्त्वा जिनोक्तम्-असदभ्युपगतं जिनभाषितमित्यभाषितमपि भाषितमित्यलीकवचनेन-महतामपि तीर्थकृतां कलङ्कदानलक्षणेन महामृषावादेन तत्प्रतिकूलप्रवृत्तिस्तस्य कुपाक्षिकस्येति

गम्यं, तस्य तीर्थस्य प्रतिकूला या प्रवृत्तिः सा महापापमत एव तालपुरविषकल्पमभिनिवेशमिथ्यात्वं कुपाक्षिकस्येत्यागमे प्रतीतमिति सर्वथा जिनाज्ञाबाह्यः कुतः श्रावकवत् स्याद्?, अत एव साधुश्रावकसंविग्नपाक्षिकाणां मार्गास्त्रयोऽपि मोक्षमार्गत्वेन भणिताः,यदागमः—"सावज्जजोगपरिवज्जणाइ सव्वुत्तमो जईधम्मो। बीओ सावगधम्मो तइओ संविग्गपक्खवहो ॥१॥ (५१९ उप०) इत्येतेभ्यस्त्रिभ्यः शेषाः संसारमार्गा एव, यदागमः—"सेसा मिच्छद्दिट्ठी गिहिलिंगकुलिंगदव्वलिंगेहिं। जह तिन्नि उ मुक्खपहा संसारपहा तहा तिन्नि॥१॥"त्ति(५२० उप०)अत्र कुपाक्षिकाणां मध्ये दिगम्बरः कुलिङ्गे लुम्पकस्त्वर्द्धलिङ्गे शेषास्तु प्रायो द्रव्यलिङ्ग एव बोध्याः, किंच—श्रावकस्तावत्तीर्थे साध्वादीनां हितेच्छुर्यथाशक्ति तद्भक्त्युद्यतः प्रतिसमयमनन्ताः पापप्रकृतीः परिशाटयति पुण्यप्रकृतीश्च बध्नाति, कुपाक्षिकास्तूत्सूत्रभाषणेन प्रतिसमयं तीर्थोच्छेदमिच्छन्तो दुर्लभबोधिभाजः प्रतिसमयमेवानन्तोत्सर्प्पिण्यवसर्प्पिणीकालपरिभ्रमणबीजभूतं कर्मार्जन्ति, तच्चैवं—पूर्वकोट्यायुषोऽपि समयास्तावदसंख्येया एव,'उस्सुत्तभासगाणं बोहिनासो अणंतसंसारो'त्ति वचनात् नियमादनन्तकाल एव संसारे परिभ्रमणं, तावांश्च कालः प्रतिसमयं विभज्यमानोऽनन्तानन्तोत्सर्प्पिण्यवसर्प्पिणीप्रमाणो भवति, कदाचिदनन्ता अनन्तगुणिता अपि संभवन्ति,यतः आशातनाबहुलस्यान्तरकालोऽपार्द्धपुद्गलपरावर्त्तोऽपि भणितः,यदागमः—"कालमणंतं च सुए अद्धापरिअट्टओ अ देसूणो। आसायणबहुलाणं उक्कोसं अंतरं होइ ॥१॥"त्ति, श्रीआ० नि० (८५३) आशातनाबहुलश्चोत्सूत्रभाष्येव, अपार्द्धपुद्गलपरावर्त्तकालस्त्वनन्ता अप्युत्सर्प्पिण्यवसर्प्पिण्योऽनन्तानन्तगुणिता एव स्युः, ताश्च विभज्यमाना प्रतिसमयमनन्तानन्तगुणिता एवायान्तीति गाथार्थः ॥१२४॥ अथ साधुश्रावककुपाक्षिकाणां सम्यक्स्वरूपपरिज्ञानाय गाथापञ्चकेन दृष्टान्तं दर्शयितुं प्रथमगाथामाह—

जइ रण्णो तिण्णि नरा भत्तिनिमित्तं पभायकालंमि। पइदिणपणामकिरिआ चिट्ठंति अ चारुचेट्ठावि ॥१२५॥
तत्थवि एगो विउलं कोसलिअं ढोइऊण पणमिज्जा। जहसत्तीए तुट्ठो रायाविय तं पसीइज्जा ॥१२६॥
बीओ सत्तिअभावा पाहुडविगलोऽवि भत्तिसंजुत्तो। पणमिज्जा रायाणं तंपिअ राया पसीइज्जा ॥१२७॥
तइओ रण्णो कोसा अवहरिउं सारसावज्जाइं। तत्तो किंचिवि पाहुडपुव्वं पणमेइ पावमई ॥१२८॥
तं सुणिऊणं राया सूलारोवाइवेअणं देइ। लोएचि निंदणिज्जो नीआणवि नीअवयणेहिं ॥१२९॥

यथा राज्ञस्त्रयो नराः—पुरुषाः भक्तिनिमित्तं प्रभातकाले प्रतिदिनं प्रणामक्रियाश्चारुचेष्टा अपि तिष्ठन्तीतिगाथार्थः ॥ १२५ ॥ तत्रापि—तेष्वप्येको नरो विपुलं कौशलिकं—प्राभृतं ढोकयित्वा—राज्ञः पुरो मुक्त्वा प्राणमत्, कथं ?, यथाशक्ति—स्वशक्त्यनतिक्रमेण, राजाऽपि तुष्टः सन् तं तथाविधविनयाद्यन्वितं प्रसीदेत्, प्रसन्नश्च राजा नरजन्मोदितं यथेप्सितं सुखं ददातीतिगाथार्थः ॥१२६॥ द्वितीयो नरः शक्त्यभावात्प्राभृतविकलोऽपि भक्तिसंयुक्तो राजानं प्राणमत्, तमपि राजा यथोचितोपचारेण प्रसन्नो भवेदितिगाथार्थः ॥१२७॥ तृतीयो नरो राज्ञः कोशात् सारस्वापतेयादि—सारमणिमुक्तादिधनमपहृत्य—स्तैन्यीकृत्य ततः—तस्मादपहृतधनात् किंचिद-पहृतकोटिमङ्गाशाद्रूपकमात्रमिव प्राभृतपूर्वं यथा स्यात्तथा पापमतिः—स्तैन्यकर्मा प्रणमति राजानमितिगाथार्थः ॥१२८॥ राजा तत्—स्तैन्यादिव्यतिकरस्वरूपं ज्ञात्वा 'शूलारोपणादिवेदना' शूलायां—शूलिकायां यदारोपणं तदादिवेदनाम्—अनेकप्रकारां पीडां ददाति, अर्थात्तस्य स्तेनस्य, लोकेऽपि च नीचानामपि—पामरादिजनानामपि नीचवचनैः—अहो पापात्मा हृदयशून्यो राज्ञ एव भाण्डागारं स्फाट-यित्वा तमेव राजानं तद्गतं वस्तु प्राभृतमादाय प्रणमतीत्यादिरूपैर्निन्दनीयः स्यादितिगाथार्थः॥१२९॥अथ दार्ष्टान्तिकयोजनमाह—

वचन-
प धा
८ थामे
॥१२०॥

कुपाक्षिकाः
स्तेनभक्ताः

एवं पढमे साहू बीए सड्ढो अ संगई दुण्हं । तइए दुग्गइसूलाजोग्गो उस्सुत्तपहरसिओ ॥१३०॥

एवं-प्रागुक्तप्रकारेण प्रथमे-प्रथमदृष्टान्ते साधुः, यतः स सर्वारम्भपरिग्रहत्यागलक्षणं विपुलं प्राभृतमादाय तीर्थकरराजानं प्रणमति, द्वितीये श्राद्धः-श्रावको, द्वितीयनरकल्प इत्यर्थः, तस्य तथाविधसामर्थ्याभावादुक्तलक्षणं प्राभृतकं नास्तीतिबोध्यं,द्वयोश्च संगतिः-परस्परेणाविरोधितेत्यर्थः, तृतीये उत्सूत्रपथरसिकः-उत्सूत्रभाषी दुर्गतिलक्षणा या शूला तस्यां योग्यः तदारोपणानुभविते- त्यर्थ इतिगाथार्थः ॥१३०॥ अथोत्सूत्रभाषी तृतीयनरकल्पः कथमित्याह—

जं सो जिणिंदकोसा तित्थाओ अवहरित्तु कइजणयं । कोसिगदेसं पाहुडकप्पं कप्पंति थुइपमुहं ।१३१॥

यद्-यस्मात् स जिनेन्द्रकोशात्-जिनेन्द्रस्य कोश इव कोशः तस्माद् एवंविधात्तीर्थात्-साध्वादिसमुदायलक्षणात् कतिजनतां- कतिजनसमूहस्तल्लक्षणः कोशैकदेशस्तमपहृत्य-स्तैन्यीकृत्य स्तुतिप्रमुखं-स्तुतिपूजादिकमपहृतकोशैकदेशादुपादाय प्राभृतकल्पं कल्प- यन्ति, ननु स्तुत्यादिकं गृहीतकोशैकदेशादिति कथं स्यादिति चेदुच्यते, यो देशोऽपहृतः सोऽपि स्तुत्यादिककर्तैवासीत्, अतः स्तुत्यादिकमपि जिनेन्द्रकोशसंबन्ध्येव भण्यते, तस्मादुत्सूत्रभाषिकृतस्तुत्यादिकमेव तीर्थाशातनाहेतुत्वादनन्तसंसारित्वहेतुः, यत- स्तत्स्तुत्यादिकमपि तस्य तीर्थखण्डनहेतुः, यथा स्तेनो राजद्वारे प्रविशन्निर्गच्छन् वा न राजभाण्डागारादीनां हिताय भवति, किंतु तदुच्छेदायेति, एवं कुपाक्षिकोऽपि क्रियादिषु प्रवृत्तस्तीर्थान्तर्वर्त्तिनां मुग्धजनानां स्वक्रियाविषयकरुच्युत्पादकत्वेन न तीर्थहिताय भवति, किंतु तदुच्छेदाय, अत एव कुपाक्षिकाध्यवसायः प्रतिसमयं तीर्थोच्छेदपातकहेतुत्वान्यक्लिष्टपरिणामोऽनन्तसंसारपरि- भ्रमणमूलं, विशेषतस्तत्क्रियासक्तस्य, तस्य तीर्थोच्छेदे तीव्राध्यवसायित्वात्, यो हि यन्मार्गे तीव्राध्यवसायी स ततोऽतिरिक्ते तद्वि-

॥१२०॥

परीततीव्राध्यवसायी स्यात्, तस्मादुत्सूत्री प्रतिसमयं तीर्थोच्छेदपातकलिप्त इति गाथार्थः ॥१३१॥ अथ दृष्टान्तोपसंहारमाह—

एवं दिट्ठंतेणं साहुउवासगपहाओ पब्भट्ठो। उस्सुत्तो जिणआणाविराहगो सव्वहा चेव ॥१३२॥

एवं प्रागुक्तनरत्रिकेन दृष्टान्तेन—दृष्टान्तीकृतेन साधूपासकयोः—साधुश्रावकयोः यः पन्थाः—मार्गस्ततः प्रभ्रष्टः—प्रकर्षेणानन्तकालभाव्युदयत्वेन भ्रष्टः—च्युतः, उत्सूत्रं विद्यते यस्य स उत्सूत्रो मत्वर्थीयोऽण्, जिनाज्ञाविराधकः, सर्वथा चैव—सर्वप्रकारेणैव जिनाज्ञाविराधकः इत्यर्थः इतिगाथार्थः ॥१३२॥ अथ 'सव्वे पाणा भूआ' इत्यादितो लुम्पककथनोपसंहारमाह—

एवं सव्वेपाणापमुहालावगुवएसवयणेहिं। मूढाणमंधकूवो लुंपागो दंसिओ णेओ ॥ १३३ ॥

एवमतन्तरोक्तप्रकारेण सव्वेपाणाप्रमुखालापकोपदेशवचनैर्मूढानाम्—अज्ञानिनां जिनप्रवचनाविदितपरमार्थानामन्धकूप इवान्धकूपो लुम्पाको दर्शितो ज्ञेय इतिगाथार्थः ॥१३३॥ इति लुम्पकोपदेशस्वरूपं चर्चितं ॥ अथ लुम्पकमते सिद्धान्तस्वरूपं चर्च्यते—

अह लुंपगसिद्धंतो केवलसुत्तं व एगदेसेण। सुगपाढुव्व असुद्धो विवरीअत्थो अ निअमइए ॥१३४॥

अथेत्युपदेशान्तरं लुम्पकसिद्धान्तः केवलसूत्रं, वा एवार्थे, केवलसूत्रमेव,तदपि देशेन, न पुनः समग्रं, सूत्रं—सिद्धान्तः, यतस्तन्मते कस्यचित्सप्तविंशतिः सूत्राणि कस्यचिदेकोनत्रिंशत् सूत्राण्यभिमतान्येवंरूपेण ते सिद्धान्तवादिनः, सोऽपि सिद्धान्तः शुकपाठरूपोऽशुद्धः,शुको हि सम्यग्वाच्यवाचकशब्दपरिज्ञानशून्यस्तद्वदयमपि सम्यक्शब्दव्युत्पत्तिपरिज्ञानशून्यत्वात्, शुकवत्पाठस्यापि शुद्धाशुद्धवर्णोच्चारपरिज्ञानशून्य इत्यर्थः, परं शुको हि परेण शिक्षितो भवति, न चायं तथा, तथापि पाठोच्चारमात्रसाम्यमधिकृत्योक्तमवसेयं, चः पुनरर्थे, विपरीतार्थः—चैत्यादिशब्दानां साध्वभिधायकत्वेनाङ्गीकारात्तन्मते यावान् सिद्धान्तः स विपरीतार्थो ज्ञेयः,

समत्या–निजमतिकल्पनया स्वमतस्थितिहेतुबुद्ध्येत्यर्थः, इतिगाथार्थः ॥१३४॥ अथ सोऽपि कीदृश इत्याह—

**सो अ अदत्तो पुत्था लद्धो मुद्धाण नामसिद्धंतो। तेणं तित्थुद्धारो धिद्धी अण्णाणविण्णाणं ॥१३५॥**

स च–प्रागुक्तस्वरूपोऽप्यदत्तः–न केनापि गुरुणा दत्तः, पुस्तकाल्लब्धः, अत एव मुग्धानां–मूर्खाणां लुम्पकमतवासितानां नाम-सिद्धान्तो–नाममात्रेण सिद्धान्तो, न पारमार्थिकः, तेन–सिद्धान्तेन तीर्थोद्धारः, लुम्पका वदन्ति–अस्माभिः पुस्तकात्सिद्धान्तं लब्ध्वा तीर्थोद्धारो–व्युच्छिन्नमपि तीर्थमुद्धृतमिति, धिग् धिग्–इति भृशं खेदसूचकतिरस्कारवचनमज्ञानविज्ञानम्–अभिनिवेशमिथ्यात्वदूषि-तमतिविज्ञानम्–अहो जैनतीर्थमेतादृशं सुलभं यत्केवलिनाऽपि प्रादुष्कर्तुमशक्यमपि लुम्पकेन पुस्तकमात्रादुद्धृतम्, एवमन्येऽपि पुस्तकवादिनो बोध्या इतिगाथार्थः ॥१३५॥ अथ प्रागुक्तं लुम्पकसिद्धान्तं दूषयितुमाह—

**संपइ परंपरागमनामेणं तित्थनाहसिद्धंतो। नवि पुत्थयसिद्धंतो कत्थवि सुणिओऽवि केणावि ॥१३६॥**

संप्रति–वर्त्तमानकाले श्रीप्रभवस्वामिन आरभ्य दुप्पसहसूरिं यावत् परम्परागमनाम्ना तीर्थनाथसिद्धान्तो–जिनेन्द्रभाषितार्थमूलकः सिद्धान्तो वर्त्तते, नापि पुस्तकसिद्धान्तोऽपि केनापि श्रुतोऽपि, अयं भावः–"अहवा तिविहे आगमे पं०, तं०–अत्तागमे अणंतरागमे परंपरागमे"त्ति श्रीअनुयोगद्वारसूत्रं, तत्रात्मागमानन्तरागमौ जम्बूस्वाम्यन्तौ, परम्परागमस्तु तीर्थं यावद्वर्त्तते, परं पुस्त-कागमस्तु क्वाप्यागमे केनापि श्रुतोऽपि नास्ति, अन्यथा आगमश्चतुर्धा वक्तव्यो भवेत्, स च नोक्त इति गाथार्थः ॥१३६॥ अथ पुस्तकागमात्तीर्थमवर्त्तनेऽतिप्रसङ्गमाह—

**जइ पुत्थयाउ तित्थं पवट्टइ किं न कुसुममिव रुक्खा। दोवि समा मीसाणं दिक्खावायणपरिक्खासु ॥१३७॥**

यदि पुस्तकात्-पुस्तकागमात्तीर्थं-साधुसाध्वीश्रावकश्राविकासमुदायलक्षणं प्रवर्त्तते, वर्त्तमानापीत्यादि विभक्तिः सप्तम्यर्थेऽत्र ज्ञाता, प्रवर्त्तेत तर्हि कुसुममिव वृक्षाद्,अपि गम्यो, वृक्षादपि किं न प्रवर्त्तेत ?,यथा वृक्षात्कुसुममुत्पद्यते तथा तीर्थमप्युत्पद्यतां, तत्र द्वावपि समौ-तुल्यौ, कासु ?-दीक्षावाचनापरीक्षासु, यद्वा दीक्षावचनयोः परीक्षास्तासु, अयं भावः-यथा वृक्षो दीक्षाया दायको न भवति तथा पुस्तकमपि, यथा वृक्षो वाचनाया दायको न भवति तथा पुस्तकमपि, यथा वृक्षः परीक्षाकारको न भवति तथा पुस्तकमपीति दीक्षावाचनापरीक्षासु पुस्तकवृक्षौ समावेव, ननु पुस्तकाक्षरेभ्यो दीक्षागहणविधिमवाप्य स्वयमेव दीक्षा गृह्यते, न च तथा वृक्षादिति कुतः साम्यमिति चेन्नैवं, पुस्तकमात्राद्दीक्षाग्रहणविधेः कर्तुमशक्यत्वात्, तथाहि-कः पुनरुपस्थापनाविधिरित्यत्रोच्यते, शोभनेषु तिथिकरणनक्षत्रमुहूर्त्तेषु प्रत्यक्षेत्रभागेषु भगवतां प्रतिकृतीरभिवन्द्य प्रवर्द्धमानाभिः स्तुतिभिः अथ पादपतितोत्थित सूरिः सह शिष्येण महाव्रतारोपणप्रत्ययं कायोत्सर्गसूत्रार्थेकैकं महाव्रतमादित आरभ्य त्रिरुच्चारयन् यावन्निशिभुक्तिविरतिरपिकला त्रिरुच्चारिता, पश्चादिदं त्रिरुच्चरितव्यं "इच्चेयाइं पंच महव्वयाइं राइभोअणवेरमणछट्ठाइं अत्तहिअट्ठयाए उवसंपज्जित्ताणं विहरामि" पश्चाद्वन्दनकं दत्त्वोत्थितोऽभिधत्तेऽपनताङ्गयष्टिः-संदिशत किं भणामीति भणति, सूरिः प्रत्याह-वन्दित्वाऽभिधत्स्वेत्येवमुक्तोऽभिवन्द्योत्थितो भणति-युष्माभिर्मम महाव्रतान्यारोपितानीच्छाम्यनुशिष्टिमिति, आचार्योऽपि प्रणिगदति-निस्तारकपारगो भवाचार्यगुणैर्वृद्धस्व, वचनविरतिसमनन्तरं च सुरभिवासपूर्णमुष्टिं च शिरसि किरति, पश्चाद्वन्दनकं दत्त्वा प्रदक्षिणीकरोत्याचार्यं,नमस्कारमुच्चारयन्, पुनरपि वन्दते, तथैव च करोति सकलक्रियानुष्ठानम्, एवं त्रिः प्रदक्षिणीकृत्य विरमति शिष्यः, साधवश्चास्य मूर्ध्नि वासचूर्णं क्षिपन्ति सुरभिपरिमलान् यतिजनसुलभकेसराणि वा, पश्चात्कारितकायोत्सर्गः सूरिरिदधाति-गणस्तव कौटिकः

वचन-
प रीक्षा
८ विश्रामे
॥१३४॥

म्नानीयं कुलं वैरास्या शाखा अमुकाभिधान आचार्य उपाध्यायश्च, साध्व्याः प्रवर्त्तिनी तृतीयोद्देष्टव्या, यथाऽऽसन्नं चोपस्थाप्यमाना रत्नाधिका भवन्ति, पश्चादाचाम्लं निर्विकृतिकं वा स्वगच्छसंततिसमायातमाचरन्तीत्येवमेतदध्ययनमादिमध्यान्तकल्याणकलापयोगि भव्यजनमनःसमाधानाधायि प्रियविप्रयोगादिदुःखावर्त्तबहुलकषायझषादिकुलाकुलविषमसंसृतिमरित्तारणसमर्थममलदयैकरसमनुक्रम्यसितव्यं मुमुक्षुणेति श्रीआचाराङ्गे शस्त्रपरिज्ञाध्ययनटीकाप्रान्ते, अत्र गुरुमन्तरेण दीक्षा न संभवति, दीक्षामन्तरेण च सिद्धान्ताध्ययनमपि न संभवतीति दर्शितं, तेन पुस्तकदृष्टसिद्धान्तात्प्रव्रज्याग्रहणं मरुमरीचिकायां जलविकल्पकल्पमिति बोध्यं। तथा 'करेमि भंते! सामाइअं' इत्यादि सामायिकचारित्रोच्चारोऽपि विद्यमानगुरुसन्निधौ संभवति, अन्यथा हे भदन्त! इत्यामन्त्रणपदासंभवात्, न चाक्षादेः पुरतः क्रियाकरणे व्यभिचार इति शङ्कनीयं, साक्षाद्गुरुसन्निधावभ्यस्तक्रियाया एव गुरुविरहे स्थापनाचार्यस्य पुरतः क्रियमाणत्वात्, न पुनरनभ्यस्ताया अपि, साऽपि क्रिया प्रतिक्रमणप्रतिलेखनादिका प्रतिदिवसनियतानुष्ठानरूपा बोध्या, न पुनर्गुरुनियतोपस्थापनादिरूपापि, किंच-पुस्तकदृष्टसिद्धान्तमात्राद्यदि चारित्राद्यनुष्ठानाभ्यासो भवेत्तर्हि "आणाणिद्देसकरे, गुरूणमुववायकारए। इंगिआगारसंपन्ने, से विणीयत्ति वुच्चइ ॥१॥" (उत्त. २*) इत्यादि विनयाध्ययनादिनिरूपणं वैयर्थ्यमापद्येत, नहि पुस्तकस्य तथा विनयः संभवति, तथा "आयरिअउवज्झायाणं, सुस्सूसावयणंकरा। तेसिं सिक्खा पवड्ढंति जलसित्ता इव पायवा ॥१॥" (उत्त० ५२१) इत्यादौ गुरुकुलवास एव ज्ञानादिसंपद्धेतुर्दर्शितो, न पुनस्तद्वत् क्वापि पुस्तकदर्शनाद्यपीति। तथा 'वायण'त्ति वाचना-सिद्धान्ताध्यापना गुर्वायत्तैव, तथाहि-"संहिआ य पयं चेव, पयत्थो पयविग्गहो। चालणा य पसिद्धी अ, छव्विहं विद्धि लक्खणं॥१॥"ति (२-१.३५*) श्रीअनुयोगद्वारसूत्रे इत्यत्र चालनादिकं गुरुणैव सार्द्धं संभवति, तथा "विणओणएहिं पंजलिउडेहिं

पुस्तक-
तीर्थाभावः

छंदमणुअत्तमाणेहिं। आराहिओ गुरुजणो सुअं बहुविहं लहुं देइ ॥१॥ इति श्रीआव० नि० (१३८) तथा श्रुतग्रहणविधिरपि "ठाण पमज्जिऊणं दुन्नि निसिज्जाउ हुंति कायव्वा। एगा गुरुणो भणिआ बीआ पुण होइ अक्खाणं ॥१॥ दो चेव मत्तगाई खेले तह काइआइ बीअं तु। जावइआ य सुणेंति सव्वेवि अ ते उ वंदंति ॥२॥ सव्वे काउस्सग्गं करिंति सव्वे पुणोवि वंदंति। नाचन्नि नाइदूरे गुरुवयणपडिच्छगा हुंति ॥३॥ निद्दाविगहापरिवज्जिएहिं गुत्तेहिं पंजलिउडेहिं। भत्तिबहुमाणपुव्वं उवउत्तेहिं सुणेअव्वं ॥४॥ अभिकंखंतेहिं सुभासिआइं वयणाइं अत्थसाराइं। विम्हिअमुहेहिं हरिसागएहिं हरिसं जणंतेहिं ॥५॥ गुरुपरितोसगएण गुरुभत्तीए तहेव विणएणं। इच्छिअसुत्तत्थाणं खिप्पं पारं समुवइंति ॥६॥ इत्यादि श्रीआव० नि० (३,७०४-७०९)तथा 'पूज्जा जस्स पसीअंति, संबुद्धा पुव्वसंथुआ। पसन्ना लाभविस्संति, विउलं अट्ठिअं सुअं ॥१॥(७-४६*) इत्यादि, तथा "एवं विणयजुत्तस्स, सुत्तं अत्थं च तदुभयं। पुच्छमाणस्स सिस्सस्स, वागरिज्ज जहासुअं ॥२॥ इति श्रीउत्तराध्ययनसूत्रे(७-२३*) सर्वत्रापि श्रुतग्रहणविधिर्गुर्वायत्त एव भणितः, न पुनः पुस्तकायत्तः, तथा 'परिक्ख'त्ति दीक्षावाचनयोः परीक्षाऽपि, अयं दीक्षायोग्यो भवति नवेति परीक्षापूर्वमेव शिष्यस्य दीक्षा दातव्या, यदागमः-"ततो णो कप्पंति पव्वावेत्तए, तं०-पंडए वातिए कीवे, एवं मुंडावित्तए,सिक्खावित्तए,उवट्ठावित्तए,संभुंजित्तए संवासित्तए"त्ति श्रीस्थानाङ्गे (२०२) एतट्टीका यथा 'तओ' इत्यादि कण्ठ्यं, किंतु पण्डगं-नपुंसकं, तच्च लक्षणादिना विज्ञाय परिहर्त्तव्यं, लक्षणानि चास्य "महिलासहावो सरवण्णभेओ, मिंढं महंतं मउई अ वाया। ससद्दगं मुत्तमफेणगं च, एआणि छप्पंडगलक्खणाणि ॥१॥"त्ति, तथा वातोऽस्यास्तीति वातिकः, यदा स्वनिमित्ततोऽन्यथा वा मेहनं कषायितं भवति तदा न शक्नोति यो वेदं धारयितुं यावन्न प्रतिसेवा कृता स वातिक इति, अयं च निरुद्धवेदो नपुंसकतया परिणमति, क्वचित्तु वाहिअत्ति पाठः, तत्र

व्याधितो रोगीत्यर्थः, तथा क्लीवः-असमर्थः, स च चतुर्द्धा-दृष्टिक्लीवशब्दक्लीवदिग्धक्लीवनिमन्त्रणक्लीवभेदात्, तत्र यस्यानुरागतो विरस्त्रावस्थं विपक्षं पश्यतो मेहनं गलति स दृष्टिक्लीवः, यस्य तु सुरतादिशब्दं शृण्वतः स द्वितीयो, यस्तु विपक्षेणावगूढो निमन्त्रितो वा व्रतं रक्षितुं न शक्नोति स आदिग्धक्लीवो निमन्त्रितक्लिवश्चेति, चतुर्विधोऽप्ययं निरोधे नपुंसकतया परिणमतीति, वातिकक्लीबयोस्तु परिज्ञानं तयोस्तन्मित्रादीनां वा कथनादेरिति, विस्तरश्चात्र कल्पादवसेयः, एते चोत्कटवेदतया व्रतपालनासहिष्णव इति न कल्पन्ते प्रव्राजयितुं, प्रव्राजकस्याप्याज्ञाभङ्गेन दोषप्रसङ्गादिति, उक्तं च-"जिणवयणे पडिकुट्ठं जो पव्वावेइ लोभदोसेण। चरणट्ठिओ तवस्सी लोवेइ तमेव उ चरित्तं॥१॥"ति, इह त्रयोऽप्रव्राज्या उक्ताः, त्रिस्थानकानुरोधाद्, अन्यथा अन्येऽपि ते सन्ति, यदाह-"बाले वुड्ढे नपुंसे अ, जड्डे कीवे अ वाहिए। तेणे रायावगारी अ, उम्मत्ते अ अदंसणे॥१॥ दासे दुट्ठे अ मूढे अ, अणत्ते जुंगिए इअ। ओबद्धए अ भयए, सेहे निप्फेडिया इअ॥२॥ गुव्विणी बालवच्छा य, पव्वावेउं न कप्पइ"त्ति, अदंसणः-अन्धः अणत्तः-ऋणपीडितः जुंगिओ-जात्यंगहीनः ओबद्धओ-विद्यादायकादिप्रतिजागरकः सेहनिप्फेडिओ-अपहृत इत्येवमित्यादि, यथैते प्रव्राजयितुं न कल्पन्ते एवमेत एव कथञ्चिच्छलितेन प्रव्राजिता अपि सन्तो मुण्डयितुं-शिरोलोचेन न कल्पन्ते, उक्तं च-"पव्वाविओ सिअ त्ति' स्यादित्यर्थः मुंडावेउं अणायरणजोगो। अहवा मुंडावेंते दोसा अणिवारिआ पुरिम॥१॥"त्ति, एवं शिक्षयितुं-प्रत्युपेक्षणादिसामाचारीं ग्राहयितुं, तथोपस्थापयितुं-महाव्रतेषु व्यवस्थापयितुं, तथा संभोक्तुमुपध्यादिना, एवमनाभोगात् संभुक्ताश्च संवासयितुम्-आत्मसमीपे आसयितुं न कल्पन्ते इति च॥ कथञ्चित्संवासिता अपि वाचनाया अयोग्या न वाचनीया इति तानाह" इति श्रीस्थानाङ्गवृत्तौ, एवं परीक्षापूर्वकप्रव्रज्यादानादि पुस्तकात्कथं संभवतीति विचार्यं. तथा वाचनायोग्योऽयं नवेति परीक्षापूर्वकं वाचना

दातव्या, यदागमः-"तओ अवायणिज्जा पं०, तं०-अविणीए विगईपडिबद्धे अविउसवितपाहुडे। ततो कप्पंति वाएत्तते-विणीए अविगतीपडिबद्धे विउसवितपाहुडे (२०३) इत्यादि श्रीस्थानाङ्गे, एतट्टीका यथा 'तओ' इत्यादि सुगमं, नवरं न वाचनीयाः-सूत्रं न पाठनीयाः, अत एवार्थमप्यश्रावणीयाः, सूत्रादर्थस्य गुरुत्वात्, तत्राविनीतः सूत्रार्थदातुर्वन्दनादिविनयरहितः, तद्वाचने हि दोषाः, यत उक्तं-"इहरहवि ताव थब्भइ अविणीओ लंभिओ किमु सुएणं? । माणट्ठो नासिहिई खए व खारोवसेगाओ ॥१॥ गोजूहस्स पडागा सयं पलायस्स वड्ढइ अ वेगं। दोसोदए व समणं न होइ न निआणतुल्लं च ॥२॥ निदानतुल्यमेव भवतीत्यर्थः, विणयाहीआ विज्जा देइ फलं इह परे अ लोगंमि। न फलं अविणयगहीआ सस्साणि व तोअहीणाइं॥३॥"ति, तथा विकृतिप्रतिबद्धो-घृतादिरसविशेषगृद्धोऽनुपधानकारीतिभावः, इहापि दोष एव, यदाह-"अतवो न होइ जोगो नय फलए इच्छिअं फलं विज्जा। अवि फलति विउलमगुणं साहणहीणा जहा विज्जा॥१॥"त्ति, अव्यवसितं-अनुपशान्तं प्राभृतमिव प्राभृतं-नरकपालकौशलिकं परमक्रोधो यस्य सोऽव्यवसितप्राभृतः, उक्तं च-"अप्पेऽवि य परमाणिं अवराहे वयइ खामिअं तं च। बहुसो उदीरयंतो अविउसिअपाहुडो स खलु ॥१॥"त्ति परमाणिं-परमक्रोधसमुद्घातं व्रजतीतिभावः, एतस्य याचने इहलोकतस्त्यागः, अस्य प्रेरणायां कलहनात् प्रान्तदेवताछलनाच, परलोकतोऽपि त्यागः, तत्र श्रुतस्य दत्तस्य निष्फलत्वादूपरक्षिप्तबीजवदिति, आह-"दुविहो उ परिचाओ इह चोअण कलह देवयाछलणं। परलोगंमि अ अफलं खित्तंमि व ऊसरे बीअं॥१॥"ति, एतद्विपर्ययसूत्रं सुगमं" एवं परीक्षापूर्वकवाचनादि केवलपुस्तकादर्शमन्येव, कुतः सिद्धान्तगन्धोऽपि?, अयं भावः-यदि पुस्तकात्तीर्थप्रवृत्तिस्तर्हि वृक्षादपि तीर्थप्रवृत्तिर्भवतीति केन निरोद्धुं शक्या?, उभयत्रापि युक्तेस्तौल्यात्, परिस्फुरद्युक्तिबहुवचनं परीक्षाबाहुल्यसूचकमितिगाथार्थः ॥१३७॥ अथ पुस्तकमात्रात्तीर्थप्रवर्त्तनेऽतिप्रसङ्गेन दूषयितुमाह—

जइ तित्थयरा अण्णो गणहरपयठावगोऽवि तिपईए। ता पुत्थेणं तित्थं ठाविज्जा साहुपमुहंपि ॥१३८॥

यदि त्रिपद्या 'उपज्जए वा विगए वा धुए वे'तिपदत्रयात्मिकया तीर्थकरादन्योऽप्यस्मादृशोऽपि गणधरपदस्थापकोऽपि भवेत् 'ता' तर्हि पुस्तकेन गुरुनिरपेक्षकेवलपुस्तकमादाय साधुप्रमुखमपि तीर्थं स्थापयेत्, यतो यया त्रिपद्या भगवता श्रीमहावीरेण गणधरपदस्थापना कृता सैव त्रिपदी संप्रत्यप्यस्ति, तस्मात्तथाविधदायकग्राहकपुरुषविशेषमासाद्यैव त्रिपदीवत् सिद्धान्तोऽपि फलवान्, नान्यथेतिगाथार्थः ॥१३८॥ अथोपसंहारमाह—

तेणं जं जहकारणमणाइसिद्धं तहेव तं णेअं। अन्नह इत्थीवेसो पुरिसोवि धरिज्ज थीगब्भं ॥१३९॥

येन कारणेन पुस्तकात्तीर्थं न प्रवर्त्तेत तेन कारणेन यत्कारणं यथा—येन प्रकारेणानादिसिद्धं वर्त्तते तत्कारणं तथैव—तेनैव प्रकारेण ज्ञेयं, न पुनरन्यथाऽपि, कार्यकारणभावयोरनैयत्यापत्तेः, न हि वह्निं विना धूमोत्पत्तिः संभवति, व्यतिरेकमाह—'अन्नह'-त्ति अन्यथा—कार्यकारणभावयोरनैयत्ये स्त्रीवेषः—स्त्रीसंबन्धी वेषो—नेपथ्यं यस्य स तथा पुरुषोऽपि स्त्रीगर्भं धरेत्, स्त्रियामिव गर्भः स्त्रीगर्भस्तं, यद्वा स्त्रियाः गर्भः स्त्रीगर्भस्तं, स्त्रीपदमुपलक्षणपरं तेनापत्यमात्रसूचकम्, अयं भावः—स्त्रीवेषधारी पुरुषोऽपि उपलक्षणाद् पुरुषवेषधरो वेषरहितोऽपरोऽपि (स्तम्भकुम्भादिर्वा) यदि गर्भाधानहेतुः स्यात्तर्हि पुस्तकमात्रमालोक्य साधुवेषधारी आत्मनोऽपरेषां च धर्मोपदेशद्वारा धर्महेतुः साधुः स्यात्, न चैवं संभवति, तस्मात् कुतस्तीर्थवार्त्ताऽपीति गाथार्थः ॥१३९॥ अथ तीर्थस्वरूपमाह—

तित्थं खलु तित्थयरा अच्छिन्नं जाव तस्स तित्थठिई। उच्छिन्नंमि समत्थो नन्नो संघेउ सव्वण्णू ॥१४०॥

तीर्थं तीर्थकरात् खलुरवधारणे तीर्थकरादेव भवतीतिगम्यं, ततः प्रवृत्तं सद् अच्छिन्नं, कियत्कालं?, यावत्तस्य—तीर्थकरस्य

तीर्थस्थितिः, येन तीर्थकरेण यत्तीर्थं प्रवर्त्तितं तत्तीर्थं यावत्तस्य तीर्थस्य प्रवृत्तिस्तावदच्छिन्नमेव भवति, उच्छिन्ने तीर्थे, आस्तां महान् कालः, समयमात्रमप्युच्छिन्ने तीर्थे तीर्थकरादन्यः, आस्तामन्यः, सर्वज्ञः-केवल्यपि संधातुं न समर्थः, एतच्चातीर्थसिद्धवक्तव्यताया-मागमे प्रतीतमेवेति गाथार्थः ॥१४०॥ अथ तीर्थं किमुच्यते इत्याह—

तित्थं चाउव्वण्णो संघो तत्थेच आइमो समणो । न विणा तित्थं निग्गंथेहिंति पवयणवयणाओ ॥१४१॥

तीर्थं चातुर्वर्णः संघः-साधुसाध्वीश्रावकश्राविकालक्षणः समुदायो, न पुनरुत्सूत्रभाष्यादिसमुदायः, तत्र चादिमः श्रमणः-साधुः, चतुर्ष्वपि वर्णेषु प्रथमः साधुरित्यर्थः, तत्र हेतुमाह-"न विणा तित्थं निग्गंथेहि'न्ति प्रवचनवचनात्, निर्ग्रन्थैर्विना-साधुभिर्विना तीर्थं न स्याद्, यद्यपि चतुर्णां वर्णानामन्योऽन्यानुविद्धत्वादेकाकी वर्णः कोऽपि न स्यात्, एकस्याप्यभावे तीर्थोच्छेदापत्तेः, तथापि साधोर्मुख्यत्वादितिगाथार्थः ॥१४१॥ अथ साधुष्वपि सूरिर्मुख्यः, स च कीदृशः कथं स्यादित्याह—

तत्थवि राया सूरी सो सूरिपरंपराइ अहिसित्तो। सोहम्माओ जंबू जंबूओ पभव इच्चाइ ॥१४२॥

तत्रापि-साधुष्वपि राजा सूरिः-आचार्यः, स च सूरिः सूरिपरम्परयाऽभिषिक्तः-आचार्यपरिपाट्यागतेनाचार्येण सूरिपदे स्थापितः स्यात्, न पुनः स्वयमेव सूरिः स्यात्, "राया न होइ सयमेव धारंतो चामराडोवे"त्ति वचनात्, दृष्टान्तमाह-'सोहम्मा-उ'त्ति सुधर्मतो जम्बूः-श्रीसुधर्मस्वामिना निजपट्टे जम्बूस्वामी सूरिपदे स्थापितः, जम्बूतः प्रभवः-श्रीजम्बूस्वामिनाऽपि श्रीप्रभवः स्वपदे स्थापित इत्यादि यावत्संप्रति श्रीविजयदानसूरिस्थापिताः श्रीहीरविजयसूरयः, एवं परिपाट्या स्थापितः सूरिस्सूरिरुच्यते, न पुनर्लुम्पकादिषु कुपाक्षिकेषु विकल्पिता अपीतिगाथार्थः ॥१४२॥ अथ तीर्थस्वरूपं बहुवक्तव्यं तत्रातिदेशमाह—

**इच्चाइ पुव्वभणिअं इहंपि सव्वंपि होइ भणिअव्वं। तेणं तयंतमेअं जयधम्मो केरिसो धम्मो ? ॥१४३॥**

इति-प्रागुक्तमादिर्यस्य तद् इत्यादि पूर्वभणितं "तत्थवि राया सूरी'त्यादि गाथानन्तरं 'सूरीण संतईओ' इत्यादिका या एकविंशतितमा गाथा तदादिसकलं यत्प्राग्भणितं तदिहापि-अत्राधिकारेऽपि प्रसङ्गप्राप्तं सर्वं भणितव्यं भवति, तेन कारणेन, तदन्तस्याधिकारस्य तीर्थस्वरूपप्ररूपणालक्षणस्यान्तं-पर्यवसानः, किं ?-'जयहम्मो केरिसो धम्मो'त्ति द्विचत्वारिंशत्तमगाथापर्यन्ते तदन्तं वाच्यमिहापीतिगाथार्थः ॥१४३॥ अथ तीर्थसिद्धान्तयोः संगतिमाह—

**एवं तित्थविआरे कसवट्टे परिक्खिअस्स तित्थस्स। आयत्तो सिद्धंतो अत्थि अतित्थस्स नायत्तो ॥१४४॥**

एवं-प्रागुक्तप्रकारेण तीर्थविचारे-किं तीर्थं किं चातीर्थमिति सप्रतिपक्षतीर्थविचारे, किंलक्षणे ? -कषपट्टे-सुवर्णपरीक्षानिमित्तं कषपट्ट इव कषपट्टस्तस्मिन् परीक्षितस्य-परीक्षां प्रापितस्य तीर्थस्यायत्तः-तद्वशः सिद्धान्तोऽस्तीति, अतीर्थस्य नायत्तः-तीर्थव्यतिरिक्तस्य कुपाक्षिकादेरायत्तो नास्तीतिगाथार्थः ॥१४४॥ अथ स सिद्धान्तः किमादिको भवतीत्याह—

**सो सामाइअमाई दुवालसंगित्ति संगओ सयलो। जिणभासिअत्थमूलो सीसपसीसाइकयरयणो ॥१४५॥**

सः-सिद्धान्तः सामायिकादि द्वादशाङ्गीति-सामायिकसूत्रादारभ्य द्वादशाङ्गीपर्यन्तमिति सकलः-संपूर्णः अपिरध्याहार्यः संपूर्णोऽपि संगतः-परस्परमविरुद्धः, सर्वज्ञभाषितत्वात्, किंलक्षणो ?-जिनभाषितार्थो मूलं यस्य स तथा, शिष्यप्रशिष्यादिभिः कृता रचना-सूत्रादिपाठरूपा यस्य स तथा, क्षायिकभावे प्रवर्त्तमानाद्भगवतो निर्गतस्यार्थस्यैकरूपत्वेऽपि पाठरचनानानात्वात्, शिष्यप्रशिष्यादीनां क्षायोपशमिकभावे प्रवर्त्तमानत्वात्, क्षायोपशमिकस्यैकरूपत्वासंभवादितिगाथार्थः ॥१४५॥ अथ किं संपन्नमित्याह—

तेणेवेगंपि पयं वक्खाणिज्जंतमेव सव्वमुहं। अणुओगदारविहिणा परुप्परं जेण साविक्खं ॥१४६॥

तेनैव कारणेनैकमपि पदम्, उपलक्षणाद्वाक्यादीनां परिग्रहः, व्याख्यायमानं सर्वमुखं-सर्वतोमुखं स्यात्, एकस्यापि पदादेर्व्याख्याने क्रियमाणे सर्वस्याप्यभिलाप्यस्यार्थस्यावतारः स्यात्, तत्कथमित्याह-येन कारणेनानुयोगद्वारविधिना-अनुयोगद्वारसूत्रोक्तपद्धत्या परस्परं सापेक्षं श्रुतमात्रमपीतिगाथार्थः ॥१४६॥ अथ परस्परसापेक्षतायां हेतुमाह—

जमुवक्कमनिक्खेवाणुगमणएहिंपि होइ वक्खाणं। पयमित्तस्सवि सुत्ते सुत्तं पुणऽणेगहा पयडं ॥१४७॥

यद्-यस्मादुपक्रमनिक्षेपानुगमनयैश्चतुर्भिरनुयोगद्वारोक्तैर्द्वारैर्व्याख्यानं सूत्रे पदमात्रस्यापि व्याख्यानं भवति, तत्र सूत्रं पुनरनेकधा-अनेकप्रकारं प्रकटं-प्रसिद्धं वर्त्तते, यतः किंचित्कालिकं किंचिदुत्कालिकं किंचिदङ्गरूपं किंचिदुपाङ्गरूपं किंचिच्छेदरूपं किंचित्प्रकरणरूपं, सूत्रस्वभावमेव किंचिन्निर्युक्तिरूपं सूत्रार्थोभयस्वभावं-स्वव्याख्येयसूत्रापेक्षया व्याख्यानरूपं स्वव्याख्यापेक्षया च सूत्रस्वभावम्, एवमन्यदपि यथासंभवं भाष्याद्यपि बोध्यमितिगाथार्थः ॥१४७॥ अथैवं व्याख्याने प्रकृते किमागच्छतीत्याह—

एवं सुअवक्खाणे पुण्णेहिं पइपयंपि जिणपडिमा। पच्चक्खावि अ आगमभणिआ मुणिआ य तित्थंमि ॥१४८॥

एवं-प्रागुक्तविधिना श्रुतव्याख्याने प्रत्यक्षाऽपि-अच्छिन्नपरम्परामार्गपतितत्वेन तीर्थस्याध्यक्षसिद्धापि जिनप्रतिमा प्रतिपदम्-आस्तामङ्गादि श्रुतं 'नमो अरिहंताण'मित्यादिरूपं यत्पदं तादृशं पदं पदं प्रति प्रतिपदमागमभणिता ज्ञाता स्यात्, कैः?-पुण्यैः-पुण्यभाग्भिः, न पुनरचेतनकल्पैरित्यर्थः, क?-तीर्थे-अच्छिन्नपरम्परागते तीर्थे, तेन कुपाक्षिकादिसमुदाये तत्परिज्ञानाभावेऽपि न दोषः, तस्य तीर्थबाह्यत्वात्, अथ प्रसङ्गतस्तद्व्याख्यानपद्धतेर्दिग्दर्शनं त्वेवं-तथाहि-जैनप्रवचने श्रुतमात्रस्याप्यादिसूत्रं सामायि-

पदमात्र-
व्याख्याने
प्रतिमा-
सिद्धिः

काध्ययनं, तस्याप्यादौ 'नमो अरिहंताणं'मित्यादि नवपदात्मको नमस्कारः, स चाष्टसंपदष्टषष्ट्यक्षरमयोऽङ्गोपाङ्गादि श्रुतादभिन्नः, स चैवं-नमो अरिहंताणं नमो सिद्धाणं नमो आयरिआणं नमो उवज्झायाणं नमो लोए सव्वसाहूणं। एसो पंच नमुक्कारो, सव्वपाव-प्पणासणो। मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥१॥ एवंविधनमस्कारस्याप्यादिपदं 'नमो अरिहंताणमिति' एतत्पदस्य व्याख्यानमुपक्रमादिभिश्चतुर्भिरनुयोगद्वारैः कर्त्तव्यं, यतो जैनप्रवचनप्राकारस्य चत्वार्यनुयोगद्वाराणि भवन्ति, यदागमः-"चत्तारि अणुओगद्दारा पं०, तं०-उवक्कमे निक्खेवे अणुगमे नओ अ"त्ति श्रीअनुयोगद्वारे, एषां निरुक्तिस्त्वेवम्-उपक्रमणं-दूरस्थस्य वस्तुनस्तैस्तैः प्रकारैः समीपनयनमुपक्रमः १. नियतं निश्चितं वा नामादिसंभवत्पक्षरचनात्मकं न्यसनं निक्षेपः २ अनुरूपं-सूत्रार्था-बाधया तदनुगुणं गमनं-संहितादिक्रमेण व्याख्यातुः प्रवर्त्तनमनुगमः ३ नयनम्-अनन्तधर्मात्मकस्य वस्तुनो नियतैकधर्मालम्बनेन प्रतीतौ प्रापणं नयः ४, क्रमप्रयोजनं त्वेवं-नानुपूर्व्यादिभिर्न्यासदेशमनानीतं शास्त्रं निक्षेपैर्निक्षेप्तुं शक्यते १ न चौघनिष्पन्नादिनिक्षेपैरनिक्षिप्तमनुगन्तुं २ नापि सूत्राद्यनुगमेनाननुगतं नयैर्विचारयितुं शक्य ३ मित्यमीषां क्रमः, तत्रोपक्रमोऽपि लौकिक-लोकोत्तरभेदाद्विधा, तत्राद्यो नामस्थापनाद्रव्यक्षेत्रकालभावभेदात्षोढेत्यादि विस्तरजिज्ञासुनाऽनुयोगद्वाराद्यवलोकयं १, तथा निक्षे-पस्त्रिधा-ओघनिष्पन्नो १ नामनिष्पन्नः २ सूत्रालापकनिष्पन्नश्चेति३, तत्रौघनिष्पन्ने सामान्यतो नाम श्रीआवश्यकश्रुतस्कन्ध इत्यादि १ नामनिष्पन्ननिक्षेपे सामायिकाध्ययनमित्यादि २ सूत्रालापकनिष्पन्ननिक्षेपे तु स सति सूत्रे, सूत्रं तु सूत्रानुगमे, सूत्रानुगमस्त्वनुयोगभेदः, यतोऽनुगमो द्विधा-सूत्रानुगमः १ निर्युक्त्यनुगमश्च २, यदागमः-"से किं तं अणुगमे ?, २ दुविहे पं, तं०-सुत्ताणुगमे १ निज्जुत्तिअ-णुगमे २"त्ति श्रीअनु०, तथा निर्युक्त्यनुगमोऽपि त्रिविधः-निक्षेपनिर्युक्त्यनुगमः १ उपोद्घातनिर्युक्त्यनुगमः २ सूत्रस्पर्शिकनिर्युक्त्य-

नुगमश्च ३, यदागमः-निज्जुत्तिअणुगमे तिविहे पं०, तं०-निक्खेवनिज्जुत्तिअणुगमे १ उवग्घायनिज्जुत्तिअणुगमे २ सुत्तफासिअ-निज्जुत्तिअणुगमे"त्ति ३ श्रीअनु०, निक्षेपनिर्युक्त्यादीनां स्वरूपं यथा 'से किं तं निक्खेवनिज्जुत्तिअणुगमे ?, २ अणुगए, से किं तं उवग्घायनिज्जुत्तिअणुगमे ?, २ इमाहिं दोहिं मूलदारगाहाहिं अणुगंतव्वे, तं०-उद्देसे १ निद्देसे अ २ निग्गमे ३ खित्त ४ काल ५ पुरिसे ६ अ। कारण ७ पच्चय ८ लक्खण ९ नए १० समोआरणा ११ णुमए १२ ॥१॥ (१३३) किं १३ कइविहं १४ कस्स १५ कहिं १६ केसु १७ कहिं १८ किचिरं हवइ कालं १९। कइ २० संतर २१ मविरहिअं २२ भवा २३ गरिस २४ फोसण २५ निरुत्ती २६ ॥२॥त्ति(१३४*) सेत्तं उवग्घायनिज्जुत्तिअणुगमे, से किं तं सुत्तफासिअनिज्जुत्तिअणुगमे ?, २ सुत्तं उच्चारेअव्वं अखलिअं अमिलिअमित्यादियावत् 'संहिआ य पयं चेव, पयत्थो पयविग्गहो। चालणा य पसिद्धी अ, छव्विहं विद्धी लक्खणं॥१॥ति(१३५*) श्रीअनु० (१५१), एवं चतुर्भिरप्यनुयोगद्वारैर्व्याख्यानकरणेऽप्यनुयोगं कुर्वद्भिरप्याचार्यैः श्रोतारमासाद्य त्रिधाऽनुयोगः कर्त्तव्यः, प्रथमं सूत्रार्थ एव केवलः १ द्वितीयो निर्युक्तिसहितः २ तृतीयस्तु निरवशेषः ३ इति, यदागमः-"सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसओ भणिओ। तइओ य निरवसेसो एस विही होइ अणुओगे॥१॥इति श्रीभगवत्यां श० २५ उ० २(१२-९४*)नन्दी-सूत्रे (९०*)श्रीआवश्यकनिर्युक्तौ च(२४)अस्या व्याख्या यथा-सूत्रस्यार्थः सूत्रार्थः-सूत्रार्थ एव केवलः प्रतिपाद्यते यस्मिन्ननुयोगेऽसौ सूत्रार्थ इत्युच्यते, सूत्रार्थमात्रप्रतिपादनप्रधानो वा सूत्रार्थः, खलुशब्दस्त्वेवकारार्थः, स चावधारणे, एतदुक्तं भवति-गुरुणा सूत्रार्थमात्राभिधानलक्षण एव प्रथमोऽनुयोगः कार्यः, मा भूत्प्राथमिकविनेयानां मतिसम्मोह इति, द्वितीयोऽनुयोगः सूत्रस्पर्शिकनिर्युक्तिमिश्रकः कार्यः इत्येवंभूतो भणितो जिनैश्चतुर्दशपूर्वधरैश्चेति, तृतीयश्च निरवशेषः-प्रसक्तानुप्रसक्तमप्युच्यते यस्मिन् स एवं-

लक्षणो निरवशेषः कार्यः, एपः–उक्तलक्षणः विधानं विधिः–प्रकार इत्यर्थः भवति, क्व?–सूत्रस्य निजेनाभिधेयेन सार्द्धमनुकूलो योगोऽनुयोगः–सूत्रान्वाख्यानं तत्र, व्याख्याविषये इत्यर्थः, ननु परिनिष्ठा सप्तमे इत्युक्तं त्रयश्चानुयोगप्रकारास्तदेतत्कथमिति, उच्यते, उक्तानामनुयोगप्रकाराणामन्यतमेन केनचित्प्रकारेण भूयो भूयो भाव्यमानेन सप्तवारं श्रवणं कार्यं, तेन न कश्चिद्दोषः, अथवा कश्चिन्मन्दमतिविनेयमधिकृत्य तदुक्तं द्रष्टव्यं, न पुनरेष एव सर्वत्र श्रवणविधिः, उद्घटितज्ञविनेयानां सकृच्छ्रवणत एवाशेषग्रहणदर्शनादि"त्यादि श्रीआव० वृ०, न चैवमनुयोगद्वारोक्तविधिना सह भगवत्याद्युक्तप्रकारत्रयस्य कश्चिद्विशेषः शङ्कनीयः, उभयत्रापि तौल्यात्, तथाहि–उपक्रमनयलक्षणं द्वारद्वयं तूपोद्घातनिर्युक्तावन्तर्भवति, निक्षेपस्य तु ओघनिष्पन्ननामनिष्पन्नसूत्रालापकनिष्पन्नलक्षणायां निर्युक्तावन्तर्भावः, निर्युक्तयस्तु सर्वा अपि द्वितीयव्याख्यानप्रकरणे भणिताऽतो द्वितीयभेद एवोपक्रमनिक्षेपनयरूपाणि त्रीण्यपि द्वाराणि संक्रान्तानि,अनुगमोऽपि कथंचित्त्रिष्वपि भेदेष्वन्तर्भूतोऽवगन्तव्य इत्युभयत्रापि व्याख्यानविधेरभेद एव बोध्यः,एवं च सति सूत्रस्य सूत्रगतपदादेरपि च व्याख्यानकरणे निक्षेपोपोद्घातसूत्रस्पर्शिकनिर्युक्तयोऽवश्यं वक्तव्याः, तासामपि सूत्रव्याख्यानरूपत्वाद्, यदागमः–"सुतं पडुच्च तओ पडिणीए–सुत्तपडिणीए अत्थपडिणीए तदुभयपडिणीए"त्ति श्रीस्थानाङ्गादौ(२०८।१२-३३८) अत्रार्थप्रत्यनीको निर्युक्त्यादिप्रत्यनीको भण्यते, निर्युक्तीनामप्यनुयोगो भणितः, यदागमः–"से किं तं अणुगमे?,२ दुविहे पं०,तं०-सुत्ताणुगमे निज्जुत्तिअणुगमे'त्ति, तेन निर्युक्तीनां स्वव्याख्येयसूत्रापेक्षयाऽर्थत्वं स्वव्याख्यानापेक्षया च सूत्रत्वमिति सूत्रार्थोभयस्वभावत्वं बोध्यं, निर्युक्तेरप्यनुगमो निर्युक्तिभाष्यचूर्ण्यादिरूपोऽवगन्तव्यः,न चैवं निर्युक्तेरपि निर्युक्त्यभ्युपगमेऽनवस्थेति शङ्कनीयं,यतो यथा प्रदीपः परं प्रकाशयन्नेव स्वात्मानमपि प्रकाशयति तथा उपोद्घातनिर्युक्तिरप्यन्येषां व्याख्यानभूता सती स्वस्या अपि व्याख्यान-

भूतेति नास्त्यनवस्थागन्धोऽपि, ननूपोद्घातनिर्युक्तिस्तावदावश्यकसूत्रसंबन्धिन्येवास्तीति चेन्मैवं, प्रवचनमात्रस्यापीयमेवोद्घातनिर्युक्तिः, यदागमः-"अज्झयणंपिअ तिविहं सुत्ते अत्थे अ तदुभए चेव। सेसेसुवि अज्झयणेसु होइ एसेव निज्जुत्ती ॥१॥"(१५०*) श्रीआवश्यकनिर्युक्तिभाष्ये, अत एवानुयोगद्वारेषु 'उद्देसे निद्देसे अ'त्ति द्वारगाथाभ्यामुपोद्घातनिर्युक्तिः श्रुतमात्रस्याप्यभिहिता, तथा च "एगस्सवि सुत्तस्स संखिज्जाओ निज्जुत्तिउ"त्ति वचनात् सूत्रमात्रस्यापि व्याख्यानान्तर्भूता निर्युक्तयोऽवश्यं व्याख्येयाः, तास्वपि जघन्यतोऽप्युपोद्घातनिर्युक्तिः, शेषास्तु यथागमं यथासंप्रदायं च वाच्याः, निर्युक्तीनामपि व्याख्यानं भाष्यचूर्ण्यादिकमपि वाच्यम्, एवं चागमरीत्या सूत्रव्याख्याने प्रतिपदं जिनप्रतिमोपलम्भः सुलभ एव सुदृशां, तथाहि-अर्हति शक्रादिकृतां पूजामित्यर्हन्तः-तीर्थकराः, ते चातीतानागतवर्त्तमानकालभाविनोऽनन्ता एव, व्यक्त्या च श्रीऋषभादयस्तेभ्यो नमः, अस्तीत्यध्याहार्यमिति नमो अरिहंताणमिति पदस्य प्रथमव्याख्यानभेदः, अथ निर्युक्तिसंयुक्तद्वितीयभेदे ह्युपोद्घातनिर्युक्तिः प्रथमं वक्तव्या, तत्र यथा-"निव्वाणं चिइगाई जिणस्स इक्खाग सेसगाणं तु। सकहा थूभ जिणहरे जायग तेणाहिअग्गित्ति ॥१॥ (४३९) श्रीउपोद्घातनिर्युक्ताावियमपि गाथा सव्याख्याना वक्तव्या, अतोऽस्या अपि सूत्रार्थो यथा-अथ निर्वाणगमनविधिप्रतिपादनायैतां द्वारगाथामाह-'निव्वा०' भगवान् दशसहस्रपरिवारो निर्वाणं प्राप्तः, चितिकाकृतिरिति-देवास्तिस्रश्चिताः वृत्तत्र्यस्रचतुरस्राकृतीः कृतवन्तः, एकां पूर्वेण तीर्थकृतः, अपरां दक्षिणेनेक्ष्वाकूणां, तृतीयामपरेण शेषाणां, ततोऽग्निकुमाराः वदनैः खल्वग्निं प्रक्षिप्तवन्तः, तत एव निबन्धनात् लोकेऽग्निमुखा एव वै देवा इति प्रसिद्धं, वायुकुमारास्तु वातं मुक्तवन्तः, मांसशोणिते च ध्यामिते सति मेघकुमाराः क्षीरोदजलेन निर्वापितवन्तः, 'सकह'त्ति दंष्ट्रोच्यते, तत्र दक्षिणां दंष्ट्रां भगवतः शक्रो जग्राह, वामामीशानः, आधस्त्यद-

क्षिणां पुनश्चमरः, आयस्योत्तरां तु बलिः, शेषदेवाः शेषाङ्गानि, राजानो भस्म, शेषलोका भस्मानि तिलकानि चक्रुः,'स्तूपा जिनगृहं चे'ति भरतो भगवन्तमुद्दिश्य वार्द्धकिरत्नेन योजनायामं त्रिगव्यूतोच्छ्रितं सिंहनिषद्यायतनं कारितवान्, निजवर्णप्रमाणयुक्ताश्चतुर्विंशतिस्तीर्थकरप्रतिमाः जीवाभिगमोक्तपरिवारयुक्ताः, तथा नवनवतिं भ्रातृप्रतिमाः आत्मप्रतिमां च स्तूपशतं च, मा कश्चिदाक्रमणं करिष्यतीति तत्रैकं भगवतोऽन्यानि भ्रातॄणां, लोहमयान् यन्त्रपुरुषान् तद्द्वारपालकांश्चकार, दण्डरत्नेनाष्टापदं सर्वतश्छिन्नवान्, योजनमानान्यष्टौ पदानि च कृतवान्, सगरसुतैस्तु स्ववंशानुरागाद्यथा परिखां कृत्वा गङ्गाऽवतारिता तथा ग्रन्थान्तराद् ज्ञेयं, ज्वलन्त्यां भगवच्चितायां माहनैर्देवास्ते मुहुर्मुहुरग्निं याचमानैरभिद्रुतास्तान् याचकानित्याहुः अहो याचका २ इति, ततो याचका रूढाः, तदग्निमविध्यापितं दुरितोपशान्तिकारित्वात् स्वगृहकुंडेषु धृतवन्तः, तेन कारणेनैते आहिताग्नयो जाताश्चिताग्रयाग्निग्रहणात् अग्नेस्त्रिसंख्यत्वं च, तेषां चाग्नीनां परस्परतः कुण्डसंक्रान्तावयं विधिः-भगवत्संबन्धिभूतोऽग्निः सर्वकुण्डेषु संचरति, इक्ष्वाकुकुण्डाग्निस्तु शेषकुण्डाग्नौ संचरति, न भगवत्कुण्डाग्नौ, शेषानगारकुण्डाग्निस्तु नान्यत्र संक्रामतीति निर्युक्तिद्वारगाथाशब्दार्थः, अस्यां द्वारगाथायां द्वारद्वयाभिधेया भाष्यगाथा, यथा-"थूभसय भाउआणं चउवीसं चेव जिणहरे कासी । सव्वजिणाणं पडिमा वण्णपमाणेहिं निअएहिं ॥१॥" (४५*) इति, अस्या अपि व्याख्यानं, यथा-स्तूपशतं भ्रातॄणां भरतः कारितवान्, तत्रैकं भगवत इति ज्ञेयं, चतुर्विंशतिं चैव जिनगृहे कृतवान्, का इत्याह-सर्वजिनानां प्रतिमाः वर्णप्रमाणैर्निजैः-आत्मीयैः, चकाराद् भ्रातॄणामात्मनश्च प्रतिमाशतमिति, श्रीभरतचक्रवर्तिना प्रतिमाः कारिताः। तथा निक्षेपनिर्युक्तिष्वपि सूत्रालापकनिष्पन्ननिर्युक्तिविचारे 'नमो अरिहंताण'मिति नमः १ अर्हद्भ्यः २ इतिपदद्वयात्मकं सूत्रं, तत्र नम इति नैपातिकं पदं, अर्हन्निति च सान्वर्थं जातिवाचकं नामिकं पदं, तथा च नमःशब्दस्यार्हच्छ-

पदमात्र-
व्याख्याने
प्रतिमा-
सिद्धिः

ब्दस्य च निक्षेपः कार्यः, स च नामस्थापनाद्रव्यभावभेदाच्चतुर्द्धा, यदुक्तं–"जत्थ(य)वि जं जाणिज्जा निक्खेवं निक्खिवे निरवसेसं। जत्थवि य न जाणिज्जा चउक्कयं निक्खिवे तत्थ ॥१॥" (१*) इतिश्री अनु०, तत्र नामनमस्कारो नम इति कस्यचिज्जीवस्याजीवस्य वा संज्ञा क्रियते, स्थापनानमो नम इति पुस्तकादौ लिखितवर्णानुपूर्वी, द्रव्यनमो निह्नवादेः, भावनमस्तूपयुक्तस्य सम्यग्दृष्टेरर्थात्तीर्थकरादिविषये बोध्यः, यदुक्तं–"निण्हादि दव्व भावोवउत्त जं कुज्ज सम्मदिट्ठी उ"त्ति (८९०) श्रीनमस्कारनिर्युक्तौ, अस्यार्थः–निह्नवादिर्द्रव्यनमस्कारो, नमस्कारनमस्कारवतोरव्यतिरेकात् निह्नवादिरपि द्रव्यनमस्कारो भण्यते, भावनमस्कारो यत्कुर्यादुपयुक्तः सम्यग्दृष्टिरित्यादि, एवं नामार्हन्नपि ऋषभादिजिनानामर्हन्निति नाम, स्थापनार्हन् अर्हत्प्रतिमा, द्रव्यार्हन् अर्हज्जीवः श्रेणिकादिः, भावार्हन् समवसरणस्थितः श्रीसीमन्धरादिः, यदुक्तं–"नामजिणा जिणनामा ठवणजिणा पुण जिणिंदपडिमाओ। दव्वजिणा जिणजीवा भावजिणा समवसरणत्था ॥२॥" इत्येवं निक्षेपनिर्युक्तिविचारे भावनमस्कारं प्रतिपद्यमानो दर्शनमोहनीयादिक्षयोपशमेन हेतुनाऽर्हन् अर्हत्प्रतिमा इत्याद्यष्टस्वपि भङ्गेषु लभ्यते, ते चामी–अर्हन् १ अर्हत्प्रतिमा २ अर्हन्तः ३ अर्हत्प्रतिमाः ४ साधुरर्हत्प्रतिमाः–साधुरर्हत्प्रतिमा युगपद् द्वयं ५ साधुर्जिनप्रतिमाश्च ६ साधवो जिनप्रतिमा च ७ साधवो जिनप्रतिमाश्चेति ८,यदुक्तं–"नाणावरणिज्जस्स उ दंसणमोहस्स तह खओवसमे। जीवमजीवे अट्ठसु भंगेसुं होइ सव्वत्थ ॥१॥" (८९२) इतिनमस्कारनिर्युक्तौ, एतट्टीका यथा–मतिज्ञानश्रुतज्ञानावरणीयस्य सम्यग्दर्शनमाहचर्याद् ज्ञानस्य दर्शनमोहनीयस्य च क्षयोपशमेन साध्यते नमस्कारः, केत्याह–जीवे अजीवे इत्याद्यष्टसु भङ्गेषु स्यात् सर्वत्र, तथाहि–"जीवस्स सो जिणस्स व १ अजीवस्स उ जिणिंदपडिमाए २। जीवाण जईणंपि अ ३ अजीवाणं तु पडिमाणं ४ ॥१॥ जीवस्साजीवस्स य जइणो बिंबस्स वेगओ समयं ५ जीवस्सऽजीवाण य

नवाप्तेः,यस्य तु द्रव्यनमस्कारो भावनमस्काररूपफलसंपत्तिहेतुस्तस्य तु शोभन एव, द्रव्यार्हस्तु नियमाद्भावार्हद्धेतुत्वात् फलाव्यभिचारी शोभन एव, तेन यथौचित्येन द्रव्यार्हदाराधनं महानिर्जराङ्गम्, अत एव परिव्राजकवेषधरोऽपि मरीचिर्भरतचक्रवर्त्तिना महाभक्तिपुरस्सरं वन्दितो नमस्कृतश्च, यदाहुः श्रीभद्रबाहुस्वामिपादाः–"अह भणइ नरवरिंदो ताय! इमे संति(एत्ति)आइ परिसाए। अण्णोऽवि कोऽवि होही भरहवासंमि तित्थयरो ॥१॥ (४४ भा.) तत्थ मरीइनामा आइपरिव्वायगो उभयनत्ता। सज्झायझाणजुत्तो एगंते झायइ महप्पा ॥२॥ तं दाएइ जिणिंदो एव नरिंदेण पुच्छिओ संतो। धम्मवरचक्कवट्टी अपच्छिमो वीरनामुत्ति ॥३॥ आइगरु दसाराणं तिविट्ठु नामेण पोअणाहिवई। पिअमित्तचक्कवट्टी मूआय विदेहवासंमि ॥४॥ तं वयणं सोऊणं राया अंचिअतणूरुहसरीरो। अभिवंदिऊण पिअरं मरीइमभिवंदिउं जाइ ॥ ५ ॥ सो विणएण उवगओ काऊण पयाहिणं च तिक्खुत्तो। वंदइ अभित्थुणंतो इमाहिं महुराहिं वग्गूहिं ॥६॥ लाभा हु ते सुलद्धा जंसि तुमं धम्मचक्कवट्टीणं। होहिसि दसचउदसमो अपच्छिमो वीरनामुत्ति ॥७॥ आइगरु०॥८॥(४२५) नवि ते पारिव्वज्जं वंदामि अहं इमं च ते जम्मं। जं होहिसि तित्थयरो अपच्छिमो तेण वंदामि॥९॥ (४२२-४२८) इत्युपोद्घातनिर्युक्तौ, न च 'द्रव्यमप्रधान'मितिवचनात् द्रव्यार्हतोऽकिञ्चित्करत्वमित्याशङ्कनीयम्, अप्राधान्यस्य कयाचिद्विवक्षयाऽभ्युपगमात्, सर्वथाऽप्राधान्ये दानशीलतपश्चारित्रादिधर्मकृत्यानां द्रव्यतोऽकरणत्वापत्त्या प्रवचनव्यवस्थाभङ्गात् प्रवचनस्योच्छेदापत्तिः स्यात्, प्रवचनव्यवस्था च प्रायो द्रव्याश्रितैव, अत एव रजोहरणादिद्रव्यवेषान्वितस्तथाविधचारित्रानुष्ठानपरायणः साधुतया व्यवह्रियते, एवं साधुदानादिष्वपि बोध्यं, ननु तर्हि श्रेणिकादयः श्रीगौतमादिसाधुभिः कथं न नमस्कृता इति चेदहो भ्रान्तस्त्वं, नहि सर्वेऽप्यर्हदादयः सर्वेषां सदृशभावेनाराध्याः, किंतु जिनाज्ञया यथौचित्येन, अत एव साधुनाऽन्नादिदानेनाप्याराध्यो भवति भावार्हन्, तस्य

पदमात्र-व्याख्याने प्रतिमा-सिद्धिः

जइणो चिंताण चेगरथं ६ ॥२॥ जीवाणमजीवस्स य जईण चिंयस्स वेगओ समयं ७। जीवाणमजीवाण य जईण पडिमाण वेगरथं ८ ॥३॥ (विशे० २८७४-५-६) इत्यादि, अत्र मतिश्रुतज्ञानावरणक्षयोपशमपूर्वकमिथ्यात्वमोहनीयकर्मक्षयोपशमहेतुक एव जिनप्रतिमाविषयको भावनमस्कारो भणितः, एवं च सति ये त्वजीवत्वादिहेतुना जिनप्रतिमाविषयं नमस्कारं न मन्यन्ते ते ह्यज्ञानावृता मिथ्यात्वोदयिनः स्वत एव सिद्धाः, तस्मादास्तामर्हदादिनिक्षेपविचारो, नम इति पदमात्रस्यापि व्याख्याने जिनप्रतिमा आराध्यत्वेन सिद्ध्यति, एवमर्हन्निक्षेपेऽपि बोध्यं, ननु नामादिनमस्कारेष्वपि भावनमस्कार एव शोभनस्तथाऽर्हत्स्वपि भावार्हन्नेव शोभनो नापरेऽपीति चेन्मैवं, स्थापनार्हतोऽवश्यं शोभनत्वे सिद्धे एव भावनमस्कारस्य शोभनत्वसिद्धेः, यतो "जीवमजीवे अट्ठसु भंगेसु होइ सव्वत्थ" त्ति प्राग् प्रदर्शितनिर्युक्तिवचनाज्जिनप्रतिमाविषयकनमस्कारो दर्शनमोहनीयक्षयोपशमादेव भणितः, स्थापनार्हतश्चाशोभनत्वे कथं तद्विषयकनमस्कारस्यापि शोभनत्वमिति स्वयमेव पर्यालोच्यं, नन्वस्तु स्थापनार्हतः शोभनत्वं, परं नामनमस्कारद्रव्यनमस्कारयोरिव नामार्हद्द्रव्यार्हतोस्तु कथं शोभनत्वमिति चेद्, उच्यते, नम इतिपदं नैपातिकं,तस्य च नामत्वं तावदुपचरितमेव शुभाशुभवस्तुविषयकं स्यात्, तेन नामनमस्कारस्य शोभनत्वेऽशोभनत्वे वा न काचित्क्षितिः ?, अर्हन्निति पदं तु नामिकं वास्तवमेव, तेन तत्पदं स्ववाच्यविषयप्रवृत्तं शोभनमेव, तदुच्चारे श्रवणे वा तद्वाच्यस्यार्हतः स्मरणादिरेव स्याद्, अर्हदादिस्मरणं तु महानिर्जराङ्गम्, आस्तामन्यद्,नामगोत्रश्रवणेऽपि महाफलमौपपातिकादौ भणितम्,एतच्च प्रकृतकुपाक्षिकस्यापि प्रतीतमेव,अन्यथा नमो अरिहंताणं इत्यादिनमस्कारचतुर्विंशतिस्तवादिपरित्यागापत्त्यापतितशक्तिप्रहतिविमुक्तप्राणो लुम्पको निश्वसितुमप्यशक्तो भवेद्, द्रव्यं तु किंचित् फलव्यभिचारि किंचिच्चाव्यभिचारीतिकृत्वा द्रव्यनमस्कारस्तावन्निह्नवादीनां न शोभनः कथमपि, तेषां तेन भावनमस्काररूपफला-

पदमात्र-
व्याख्याने
प्रतिमा-
सिद्धिः

नवाप्तेः,यस्य तु द्रव्यनमस्कारो भावनमस्काररूपफलसंपत्तिहेतुस्तस्य तु शोभन एव, द्रव्यार्हस्तु नियमाद्भावार्हद्धेतुत्वात् फलाव्यभिचारी शोभन एव, तेन यथौचित्येन द्रव्यार्हदाराधनं महानिर्जराङ्गम्, अत एव परिव्राजकवेषधरोऽपि मरीचिर्भरतचक्रवर्तिना महाभक्तिपुरस्सरं वन्दितो नमस्कृतश्च, यदाहुः श्रीभद्रबाहुस्वामिपादाः–"अह भणइ नरवरिंदो ताय! इमे संति(एत्ति)आइ परिसाए। अण्णोऽवि कोऽवि होही भरहवासंमि तित्थयरो ॥१॥ (४४ भा.) तत्थ मरीइनामा आइपरिव्वायगो उभयनत्ता। सज्झायझाणजुत्तो एगंते झायइ महप्पा ॥२॥ तं दाएइ जिणिंदो एव नरिंदेण पुच्छिओ संतो। धम्मवरचक्कवट्टी अपच्छिमो वीरनामुत्ति ॥३॥ आइगरु दसाराणं तिविठ्ठ नामेण पोअणाहिवई। पिअमित्तचक्कवट्टी मूआय विदेहवासंमि ॥४॥ तं वयणं सोऊणं राया अंचिअतणूरुहसरीरो। अभिवंदिऊण पिअरं मरीइमभिवंदिउं जाइ ॥ ५ ॥ सो विणएण उवगओ काऊण पयाहिणं च तिक्खुत्तो। वंदइ अभित्थुणंतो इमाहिं महुराहिं वग्गूहिं ॥६॥ *लाभा हु ते सुलद्धा जंसि तुमं धम्मचक्कवट्टीणं। होहिसि दसचउदसमो अपच्छिमो वीरनामुत्ति ॥७॥* आइगरु०॥८॥(४३४) नवि ते पारिव्वज्जं वंदामि अहं इमं च ते जम्मं। जं होहिसि तित्थयरो अपच्छिमो तेण वंदामि॥२॥ (४२२-४२८) इत्युपोद्घातनिर्युक्तौ, न च 'द्रव्यमप्रधान'मितिवचनात् द्रव्यार्हतोऽकिञ्चित्करत्वमित्याशङ्कनीयम्, अप्राधान्यस्य कयाचिद्विवक्षयाऽभ्युपगमात्, सर्व्वथाऽप्राधान्ये दानशीलतपश्चारित्रादिधर्मकृत्यानां द्रव्यतोऽकरणत्वापत्त्या प्रवचनव्यवस्थाभङ्गात् प्रवचनस्योच्छेदापत्तिः स्यात्, प्रवचनव्यवस्था च प्रायो द्रव्याश्रितैव, अत एव रजोहरणादिद्रव्यवेषान्वितस्तथाविधचारित्रानुष्ठानपरायणः साधुतया व्यवह्रियते, एवं साधुदानादिष्वपि बोध्यं, ननु तर्हि श्रेणिकादयः श्रीगौतमादिसाधुभिः कथं न नमस्कृता इति चेदहो भ्रान्तत्वं, नहि सर्वेऽप्यर्हदादयः सर्वेषां सदृशभावेनाराध्याः, किंतु जिनाज्ञया यथौचित्येन, अत एव साधुनाऽऽहारादिदानेनाप्याराध्यो भवति भावार्हन्, तस्य

साक्षानीतमेवान्नादिकं कल्प्यं, न पुनर्गृहस्थानीतं, स्थापनार्हतस्तु वैपरीत्यमिति, किंच-श्रावकैरपि यथा स्थापनार्हतः पूजादिविधानं कर्त्तुं शक्यते, न तथा भावार्हतोऽपि, नहि क्वाप्यागमे भावार्हतः पूजा सप्तदशभेदादिरूपा कृतेति श्रूयते, इत्यादि स्वयमेव पर्यालोच्यं, सर्वविरतिनापि गृहस्थलिङ्गी द्रव्यार्हन् धन्यस्त्वं त्रैलोक्यपूजापदवीप्राप्तो धर्मचक्रवर्त्ती भविष्यसीत्यादिस्तुत्यादिवचनैराराध्यो, न पुनर्भावार्हन्निवान्नादिदानादिना प्रदक्षिणादिकरणेन वा, तथैव जिनाज्ञायाः सत्त्वाद्, एवं चत्वारोऽपि निक्षेपा यथायोगं सम्यग्दशामाराध्या एव संपन्नाः, किंच-सर्वासामपि निर्युक्तीनां श्रीभद्रबाहुस्वामिकृतत्वेनैककर्तृकत्वात् परस्परसापेक्षत्वान्नमस्कारनिर्युक्तेः सामायिकनिर्युक्त्यङ्गत्वात् सामायिकनिर्युक्तेरपि भाष्येण व्यक्तीकृतत्वादादिशब्दगृहीतत्वाच्च सामायिकनिर्युक्तिभाष्येऽपि-"गुरुविरहंमि अ ठवणा गुरूवएसोवदंसणत्थं च। जिणविरहंमि अ जिणबिंब सेवणामंतणं सहलं॥१॥"ति सामायिकनि० भाष्ये ( वि. ३४६५ ) तथोपसर्गनिर्युक्तावपि-"तत्तो अ पुरिमताले वग्गुर ईसाण अच्चए पडिमं। मल्लिजिणायणपडिमा उन्नाए वंस बहुगुट्ठी॥१॥त्ति" श्रीआव० (४९०) उपोद्घाते, एवं निर्युक्तिसंयुक्तव्याख्याने स्थापनार्हतः पूज्यत्वं प्रतिपदं सुलभमेव, न च सर्वासां निर्युक्तीनां श्रीभद्रबाहुस्वामिकृतत्वेन श्रीभद्रबाहुस्वामित आरभ्य निर्युक्तिसंयुक्तं व्याख्यानं जातं. परं तत ऊर्ध्वं निर्युक्तिनिरपेक्षमेवासीदिति शङ्कनीयं, सांप्रतीननिर्युक्तिपाठरचनायाः श्रीभद्रबाहुस्वामिकृतत्वेऽपि पाठान्तरेण पूर्वमपि निर्युक्तीनां विद्यमानत्वाद्, अत एव श्रीभद्रबाहुवचनमपि-"सामाइअनिज्जुत्तिं वुच्छं उवएसिअं गुरुजणेण। आयरिअपरंपरएण आगयं आणुपुव्वीए ॥१॥"त्ति श्री आव० नि० (८७) "एअं तु जं पंचमंगलमहासुअक्खंधस्स वक्खाणं तं महया पबंधेण अणंतगमपज्जवेहिं सुत्तस्स य पिहब्भूआहिं निज्जुत्तीभासचुण्णीहिं जहेव अणंतनाणदंसणधरेहिं तित्थयरेहिं वक्खाणिअं तहेव समासओ वक्खाणिज्जंतं आसी"त्यादि श्रीमहानि० वृत्ती-

याध्ययने, अत्र निर्युक्त्यादि तीर्थकरभाषितं भणितं, किं च-अर्हन्ति शक्रादिकृतां पूजामित्यर्हन्तः इतिशब्दव्युत्पत्त्याऽपि अर्हतां पूजा सिद्ध्यन्ती स्थापनार्हतां पूजामादायैव सिद्ध्यति, नान्यथेति, एतच्च लुम्पकस्योपदेशस्वरूपविचारावसरे "सव्वे पाणा भूआ जीवा सत्ता य नेव हंतव्वे'त्यादिगाथाव्याख्यायां दर्शितं बोध्यमिति निर्युक्तिसंयुक्तव्याख्यानदिग्दर्शनेन व्याख्यानस्य द्वितीयभेदो दर्शितः, अथ 'तइओ अ निरवसेसो'त्ति तृतीयभेददिग्दर्शनं, यथा नमस्कारनिर्युक्तौ "अट्ठविहंपि अ कम्मं अरिभूअं होइ सव्वजीवाणं। तं कम्मं अरि हंता अरिहंता तेण वुच्चंती॥१॥(२२०)त्यत्र अरीन् घ्नन्तीति अरिहन्तार इत्युक्ते नार्हतां नमस्कारसिद्धिः,किंतु येऽरिहन्तारो म्लेच्छराजादयोऽपि तेषामेव सिध्यतीत्यतिप्रसक्तिस्तदर्थमरयो विशेष्याः, केऽरयः ?-कर्मारयः, ते चाष्टौ ज्ञानावरणीयादीनि कर्माणि, तेषामुत्तरप्रकृतयोऽष्टपञ्चाशदुत्तरशतं वक्तव्याः, तत्र च प्रसङ्गतस्तद्बन्धकारणानि वक्तव्यानि, तानि चैवं-मत्यादिज्ञानस्य साध्वादीनां ज्ञानिनां पुस्तकादेर्ज्ञानसाधनस्य च प्रत्यनीकतानिह्नवतोपघातात्याशातनादिभिर्ज्ञानावरणीयदर्शनावरणीयलक्षणं मूलप्रकृतिद्विकं बध्नाति २, गुरुभक्तिक्षान्तिकरुणाव्रतयोगकषायविजयादिना सातवेदनीयं बध्नाति, एतद्विपरीतस्तु असातवेदनीयमिति ३ भवहेतोरुन्मार्गस्य मार्गत्वेन देशना मुक्तिपथस्य च ज्ञानदर्शनचारित्रलक्षणस्यापलपनमित्यादिभिर्देवद्रव्यविनाशार्हत्साधुचैत्यसंघादिप्रत्यनीकतया च दर्शनमोहनीयं कर्म बध्नाति, तीव्रकषायनोकषायाद्युदयाच्च चारित्रमोहनीयमिति ४ महारम्भादियुक्तो व्रतरहितो नरकायुर्बध्नाति, उन्मार्गदेशनामार्गनाशनागूढहृदयमायाकुशीलतासशल्यतादिभिस्तिर्यगायुर्बध्नाति, प्रकृत्याऽल्पकषायदानरतः शीलसंयमरहितो मध्यमगुणवान् मनुजायुर्बध्नाति, सर्वदेशविरतिबालतपोऽकामनिर्जरासम्यक्त्वादिभिर्देवायुर्बध्नाति ५ मायागौरवादिरहितः शुभनाम, तद्विपरीतस्त्वशुभनामकर्म बध्नाति ६ गुणप्रेक्षी मायारहितोऽध्ययनाध्यापनादिभिरुच्चैर्गोत्रं तद्विप-

रीतस्तु नीचैर्गोत्रं बध्नाति ७ जिनपूजादिविघ्नकरो हिंसादितत्परोऽन्तरायकर्म बध्नाति ८। यदागमः-'दुविहो अ होइ मोहो' इत्यादिनिर्युक्तिव्याख्याने मोहनीयं कर्म द्विधा भवति-दर्शनमोहनीयं चारित्रमोहनीयं चेति, बन्धहेतोर्द्वैविध्यात्, तथाहि-अर्हत्सिद्धचैत्यतपःश्रुतगुरुसाधुसंघप्रत्यनीकतया दर्शनमोहनीयं कर्म बध्नाति येन चासावनन्तसंसारसमुद्रान्तःपात्येवावतिष्ठते" इत्यादि श्रीआचाराङ्गलोकविजयाख्याध्ययनटीकायां, तथा तत्रैव पत्रद्वयान्तरे-"पडिणीअमंतराओवघातए तप्पओस निण्हवणे। आवरणदुगं भूओ बंधइ अच्चासणाए अ ॥१॥ भूआणुकंपए वयजोगजुओ खंतिदाणगुरुभत्तो। बंधइ भूओ सायं विवरीए बंधइ इअरं ॥२॥ अरहंतसिद्धचेइअतवसुअगुरुसंघसाहुपडिणीओ। बंधइ दंसणमोहं अणंतसंसारिणो जेण ॥३॥" इत्यादि यावत् "पाणवहाईसु रतो जिणपूआमोक्खमग्गविग्घकरो। अज्जेति अंतरायं न लहति जेणिच्छिअं लाहं ॥११॥ इत्यादि श्रीआचा० टीकायां लोकवि०, अत्र दर्शनमोहनीयान्तरायकर्मबन्धकारणं जिनप्रतिमानामाशातनादिकं भणितं, तत्परिजिहीर्षुणा तावदवश्यं जिनप्रतिमा आराध्यैवेति। यद्वा कर्मबन्धहेतवो मिथ्यात्वादयः सप्तपंचाशत्, ते चेमे-अभिगृहीतानभिगृहीताभिनिवेशसंशयानाभोगलक्षणानि पञ्च मिथ्यात्वानि, पञ्चेन्द्रियमनसामनियमः षट्कायवधश्चेति द्वादशाविरतयः, अनन्तानुबन्ध्यादयः षोडश कषायाः, हास्यादयो नव नोकषाया इति पञ्चविंशतिः सामान्यतः कषायाः, सत्यादयश्चत्वारो मनोयोगा वाग्योगाश्च औदारिकवैक्रियाहारकयोगाः समिश्राः षट् सप्तमस्तु कार्मण इति पञ्चदश योगाश्चेति सर्वेऽपि समुदिताः सप्तपंचाशत्संख्याकाः, तेष्वशुभतरक्लिष्टकर्मबन्धकारणं पञ्चधापि मिथ्यात्वं, तत्राप्यभिनिवेशमिथ्यात्वं हालाहलविषकल्पं नियमादनन्तसंसारपरिभ्रमणहेतुः, तच्च समग्रमपि जैनप्रवचनं श्रद्दधतस्तद्गतस्यैकस्याप्यक्षरस्यापलापे तदश्रद्धाने वा स्यात्, यदुक्तं-"पयमक्खरंपि इक्कंपि जं न रोयइ सुत्तनिद्दिट्ठं। सेसं रोअंतोविहु मिच्छद्दिट्ठी जमा-

पदमात्रव्याख्याने प्रतिमासिद्धिः

लिन ॥१॥ (संग्र०) इतिश्रीविशेषावश्यकवृत्तौ, एतच्च लुम्पाकमते स्फुटमेव, यतस्तन्मते यत्र क्वापि सूत्रादौ जिनप्रतिमाया आराध्यत्वेनोपलम्भस्तत्सर्वमप्यप्रमाणमेव, तत्प्रामाण्ये निजमतं दत्ताञ्जलि भवेत्, न च तन्मते गणधरादिसातिशयपुरुषकृतानि सूत्राणि प्रमाणान्येवेति शङ्कनीयं, तत्प्रामाण्ये निर्युक्त्यादीनामवश्यं प्रामाण्यत्वेनाभ्युपगमापत्तेः, यतः सूत्र एव निर्युक्त्यादीनामङ्गीकारो भणितः, स च "सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसिओ भणिउ"त्ति गाथयैव भणितुमुपक्रान्तः, किंच-केवलसूत्रं सिद्धान्त एव न भवतीति प्रागुक्तं, निर्युक्त्याद्यङ्गीकारे च प्रतिमाया आराध्यत्वं स्फुटमेव, न चैतावता केवलसूत्रे जिनप्रतिमा साक्षान्नोपलभ्यते इति शङ्कनीयम्,अग्रे सूत्रेऽप्युपलम्भो दर्शयिष्यते,तस्मादभिनिवेशपरित्यागविचारणायां सूत्रनिर्युक्त्यादिकं परंपरासंयुक्तमभ्युपगन्तव्यं स्यात्, तथा च प्रसङ्गतो विचारणेऽपि जिनप्रतिमोपलम्भः सुलभ एव, एवमनुप्रसङ्गतोऽपि विचारणीये सूत्रादौ प्रतिमातत्प्रतिष्ठादिविध्युपलंभो यथा-दर्शनमोहनीयकर्मबन्धहेतुर्जिनप्रतिमादिप्रत्यनीकता प्रसंगतो भणिता, सा चानेकप्रकारैर्भवन्ती केन कृतेतिदृष्टान्तो वक्तव्यः, स चानुप्रसङ्गतः समागतोऽनुप्रसक्तो भण्यते, यथा देवद्रव्यविनाशेन संकाशश्रावको जिनप्रतिमाप्रत्यनीकतामापन्नो दुरन्तसंसारकान्तारं भ्रान्त इत्यादि, यद्वा भरतेन जिनप्रतिमा कारिता इति निर्युक्तिव्याख्याने प्रसङ्गतो भरतचरित्रं वक्तव्यं, तत्र श्रीनाभसूरिणाऽष्टापदाद्रौ जिनप्रतिमा प्रतिष्ठिता, तत्र प्रतिष्ठाविधिर्वक्तव्यः, स चानुप्रसक्तः प्रतिष्ठाकल्पोक्तो वाच्यः, अनया रीत्या तृतीयव्याख्यानभेदोऽवगन्तव्यः, तृतीयव्याख्यानभेदे च प्रसक्तानुप्रसक्तवक्तव्यतायां तत्किमपि नास्ति यन्नावतरति, अत एव य एकं जानाति स सर्वं जानाति, यः सर्वं जानाति स एकं जानातीति प्रवचने प्रतीतं, एवमश्रद्धानेऽपि बोध्यं, यः सम्यगेकं वस्तु श्रद्दधाति स सर्वमपि श्रद्दधाति, यः सर्वं सम्यग् श्रद्दधाति स एकमपि, तेनैव जिनोक्तस्यैकस्याप्यर्थस्याश्रद्धाने सर्वेषा-

मप्यश्रद्धानमेवागमे भणितं, यदुक्तं-"पयमक्खरंपीत्यादि" प्रागेवेति, तृतीयव्याख्यानभेदविधेर्दिग्दर्शनं ३। अथोक्तप्रकारेण प्रवचनसंबन्धिपदमात्रस्यापि व्याख्याने प्रतिमाप्रासादप्रतिष्ठादीनां तद्विधायकादीनां च सिद्धेऽपि कालानुभावान्मुग्धजनप्रत्यायनार्थं सिद्धान्तोक्तसम्मतिदिग्दर्शनं यथा-तत्र प्रथमं श्रावकविधावाह-"समणं भगवं महावीरं वंदइ नमंसइ, वंदित्ता नमंसित्ता नो खलु मे भंते! कप्पति अज्जप्पभिई अण्णउत्थिए वा अण्णउत्थिअदेवयाणि वा अण्णउत्थिअपरिग्गहिआणि चेइआणि वा वंदित्तए वा नमंसित्तए वा पुव्विं अणालित्तएण आलवित्तए वा संलवित्तए वा तेसिं असणं वा ४ दाउं वा, नन्नत्थ रायाभिओगेण गणाभिगेण बलाभिओगेण देवयाभिओगेण गुरुनिग्गहेण वित्तिकंतारेण, कप्पति मे समणे निग्गंथे फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेण वत्थपडिग्गहकंबलपायपुंछणेण पाडिहारिअपीढफलगसिज्जासंथारेण ओसहभेसज्जेण पडिलाभेमाणस्स विहरित्तएत्तिकट्टु, इमं एआरूवं अभिग्गहं अभिगिण्हामि"त्ति श्रीउपासकदशाङ्गे, एतद्वृत्त्येकदेशो यथा 'नो खल्वि'त्यादि, नो खलु मम भदन्त!-भगवन्! कल्पते-युज्यते 'अद्य प्रभृति' इतः-सम्यक्त्वप्रतिपत्तिदिनादारभ्य निरतिचारसम्यक्त्वपरिपालनार्थं, तद्यतनामाश्रित्य "अण्णउत्थिए व"त्ति जैनयूथादन्यद् यूथं-सङ्घांतरं तीर्थान्तरमित्यर्थः, तदस्ति येषां तेऽन्ययूथिकाः-चरकादिकुतीर्थिकास्तान् अन्ययूथिकानां दैवतानि वा-हरिहरादीनि अन्ययूथिकैः परिगृहीतानि वा चैत्यानि-अर्हत्प्रतिमालक्षणानि, यथा भौतपरिगृहीतानि वीरभद्रमहाकालादीनि वन्दितुं वा-अभिवादनं कर्तुं नमस्यितुं वा-प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्त्तनं कर्तुं, तद्भक्तानां मिथ्यात्वस्थिरीकरणादिदोषप्रसङ्गादित्यभिप्रायः, तथा पूर्वं-प्रथमनामलप्तेन सताऽन्यतीर्थिकैस्तानेवालप्तुं-सकृत्संभाषितुं वा संलपितुं-पुनः पुनः संलापं कर्तुं वा, यतस्ते तप्ततरायोगोलकल्पाः खल्वासनादिक्रियायां नियुक्ता भवन्ति, तत्प्रत्ययश्च कर्मबन्धः स्यात्, तथाऽऽला-

सूत्रानुसारेण प्रतिमादिसिद्धिः

पादेः सकाशात् परिचयेन तस्यैव तत्परिजनस्य वा मिथ्यात्वमाप्तेरिति, प्रथमालस्येन त्वसंभ्रमं लोकापवादभयात् कीदृशस्त्वमित्यादि वाच्यमिति, तथा तेभ्योऽन्ययूथिकेभ्योऽशनादि दातुं वा–सकृददनुप्रदातुं वा–पुनः पुनरित्यर्थः, अयं च निषेधो धर्मबुद्ध्यैव, करुणया तु दद्यादपि, किं सर्वथैव न कल्पते इत्यत आह–'नन्नत्थ'त्ति 'रायाभिओगेण' तेन इति, न कल्पते इति योऽयं निषेधः सोऽन्यत्र राजाभियोगात्, तृतीयायाः पञ्चम्यर्थत्वाद्राजाभियोगं वर्जयित्वेत्यर्थः, राजाभियोगस्तु–राजपरतन्त्रता गणः–समुदायस्तदभियोगः–अवशता गणाभियोगस्तस्मात्, बलाभियोगो नाम राजगणव्यतिरिक्तस्य बलवतः पारतन्त्र्यं, देवताभियोगो–देवपरतन्त्रता, गुरुनिग्रहो–मातृपितृपारवश्यं गुरूणां वा–चैत्यसाधूनां निग्रहः–प्रत्यनीककृतोपद्रवो गुरुनिग्रहस्तत्रोपस्थिते तद्रक्षार्थमन्ययूथिकेभ्यो दददपि न निष्क्रामति सम्यक्त्वमिति, "वित्तीकंतारेणं"ति वृत्तिः–जीविका तस्याः कान्तारम्–अरण्यं तदेव कान्तारं–क्षेत्रं कालो वा वृत्ति-कान्तारं, निर्वाहाभाव इत्यर्थः, तस्मादन्यत्र निषेधो दानप्रणामादेरिति प्रकृतमिति, 'पीढं'ति पट्टादिकं 'फलगं'ति अवष्टम्भादिफलकं 'भेसज्जं'ति पथ्यं ['अट्ठाइं'ति उत्तरभूतानर्थान् आददातीति] अत्रानन्दश्रावकेण सम्यक्त्वोच्चारेऽन्यतीर्थिकादयस्त्रयोऽपि वन्दनाद्यर्थम-कल्प्यत्वेन भणिताः, अर्थात् तत्प्रतिपक्षभूताः स्वतीर्थिकस्वतीर्थिकदेवान्यतीर्थिकापरिगृहीतार्हच्चैत्यानि अविकल्प्यत्वेनैवाभ्युपगतानि, तथा गुरुनिग्रहेणेत्यत्रापि चैत्यादिनिमित्तमुक्तं। तथा 'अंबडस्स नो कप्पति अण्णउत्थिए वा अण्णउत्थिअदेवयाणि वा अण्णउत्थि-अपरिग्गहिआणि चेइआणि वा वंदित्तए वा नमंसित्तए वा जाव पज्जुवासित्तए वा, नन्नत्थ अरिहंते वा अरिहंतचेइआणि' वा इत्या-द्यौपपातिकोपाङ्गे, एतद्वृत्त्येकदेशो यथा–अन्ययूथिकाः–आर्हतसङ्घापेक्षयाऽन्ये शाक्यादयः 'चेइआइं'ति अर्हच्चैत्यानि, जिनप्रतिमा इत्यर्थः, 'नन्नत्थ अरिहंते व'त्ति न कल्पते, इह योऽयं नेति निषेधः सोऽन्यत्रार्हद्भ्योऽर्हतो वर्जयित्वेत्यर्थः, स हि किल परिव्राजक-

वेषधारकोऽतोऽन्ययूथिकदेवतावन्दननिषेधेऽर्हतामपि वंदनादिनिषेधो मा भूदितिकृत्वा नन्नत्थेत्याद्यधीतं ॥ तथा श्राविकोदाहरणमप्याह–"तए णं सा दोवती रायवरकण्णा जेणेव मज्जणघरे तेणेव उवागच्छइ २ मज्जणघरं अणुपविसति २ ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं पवराइं वत्थाइं परिहिआ मज्जणघराओ पडिनिक्खमइ २ जेणेव जिणघरे तेणेव उवागच्छइ २ जिणघरं अणुपविसइ २ जिणपडिमाणं आलोए पणामं करेइ २ लोमहत्थयं परामुसइ २ एवं जहा सूरिआभो जिणपडिमाओ अचेइ २ तहेव भाणिअव्वं जाव धूवं डहति २ वामं जाणुं अंचेति दाहिणं जाणुं धरणीअलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणीतलंसि निवेसेइ २ ईसिं पच्चुण्णमति २ करयलजावकट्टु एवं वयासी–नमोऽत्थु णं अरहंताणं भगवंताणं जाव संपत्ताणं, वंदइ णमंसइ" इत्यादिज्ञाताधर्म० सूत्रे, एतद्वृत्त्येकदेशो यथा 'जिणपडिमाणं अच्चणं करेइ'त्ति एकस्यां वाचनायामेतावदेव दृश्यते, वाचनान्तरे तु ण्हाया जावसव्वालंकारविभूसिआ मज्जणघराओ पडिनिक्खमइ २ जेणामेव जिणघरे तेणामेव उवागच्छइ २ जिणघरं अणुपविसति २ जिणपडिमाणं आलोए पणामं करेइ २ लोमहत्थयं परामुसइ २ एवं जहा सूरिआभो जिणपडिमाओ अचेइ तहेव भाणिअव्वं जाव धूवं डहेति" इह यावत्करणादर्थत इदं दृश्यं–लोमहस्तकेन जिनप्रतिमाः प्रमार्ष्टि, सुरभिणा गन्धोदकेन स्नपयति, गोशीर्षचन्दनेनानुलिम्पति, वस्त्राणि निवासयति, ततः पुष्पाणां माल्यानां–ग्रथितानामित्यर्थः गन्धानां–चूर्णानां वस्त्राणामाभरणानां चारोपणं करोति स, मालाकलापावलम्बनं पुष्पप्रकरं तन्दुलैर्दर्पणाद्यष्टमङ्गलालेखनं च करोति, 'वामं जाणुं अंचेइ'त्ति उत्क्षिपतीत्यर्थः, दाहिणं जाणुं धरणीतलंसि निहट्टु–निहत्य स्थापयित्वेत्यर्थः "तिक्खुत्तो मुद्धाणं धरणीतलंसि निवेसेइ" निवेशयतीत्यर्थः, ईसिं पच्चुण्णमति २ करयलपरिग्गहिअं अंजलिं मत्थए कट्टु एवं वयासी–नमोऽत्थु णं अरहंताणं जाव संपत्ताणं, वंदति नमंसति २

जिणघराओ पडिणिक्खमइ"त्ति, तत्र वन्दते-चैत्यवन्दनविधिना प्रसिद्धेन नमस्यति-पश्चात्प्रणिधानादियोगेनेति वृद्धाः, नच द्रौपद्याः प्रणिपातदण्डकमात्रं चैत्यवन्दनमभिहितं सूत्र इति सूत्रमात्रप्रामाण्यादन्यस्यापि श्रावकादेस्तावदेव तदितिमन्तव्यमिति। नच द्रौपदी श्राविका न भविष्यतीति शङ्कनीयम्, अन्यस्यापि श्रावकादेरित्यादिटीकाकारवचनादस्या अपि श्राविकात्वमेव सिद्धं, किंवान्यदपि तल्लक्षणं सूत्र एव स्फुटं, तथाहि-"तए णं सा दोवई कच्छुल्लनारयं अस्संजयअविरयअप्पडिहयपच्चक्खायपावकम्मंतिकट्टु नो आढाति णो परिजाणाति णो अब्भुट्ठेति णो पज्जुवासति"त्ति श्रीज्ञाता०, एतद्वृत्तिदेशो यथा-'अस्संजयअविरयअप्पडिहयअपच्चक्खायपावकम्मंतिकट्टु'त्ति असंयतः-संयमरहितत्वाद् अविरतो-विशेषतस्तपस्यरतत्वात् न प्रतिहतानि-न प्रतिषेधितानि अतीतकालकृतानि निन्दनतः न प्रत्याख्यातानि च-भविष्यत्कालभावीनि पापकर्माणि-प्राणातिपातादिक्रिया येन, अथवा न प्रतिहतानि-सागरोपमकोटीकोट्यन्तः प्रवेशनेन सम्यक्त्वलाभतः न प्रत्याख्यातानि-सागरोपमकोटीकोट्याः संख्यातसागरोपमैर्न्यूनताकरणेन सर्वविरतिलाभतः पापकर्माणि-ज्ञानावरणादीनि येन स तथेति, पदत्रयस्य कर्मधारयः," एवंविधविचारणायाः संभवः सम्यग्दृशामेव भवेत्, मिथ्यादृशां तथाविधविचारणाया गन्धस्याप्यभावश्चेति द्रौपदी परमश्राविकेति श्रद्धेयमिति ॥ अथ साधूदाहरणेऽपि सामान्यतः साध्वाचारमधिकृत्याह-"एवं विहारभूमिं वा विआरभूमिं वा अण्णं वा जंकिंचि पओअणं"ति श्रीपर्युषणाकल्पे सामाचार्यां, विहारभूमिः-चैत्यादिगमनं विचारभूमिः-शरीरचिन्ताद्यर्थं गमनं अन्यद्वा प्रयोजनं लेपसीवनलिखनादि उच्छ्वासादिवर्जं सर्वमापृच्छयैव कर्त्तव्यमिति तत्त्वं, गुरुपारतन्त्र्यस्यैव ज्ञानादिमत्त्वादिति कल्पावचूर्णौ। तथा "कुलगणसंघचेइअट्ठे निज्जरट्ठी वेयावच्चं अणिस्सिअं दसविहं बहुविहं वा करेइ"त्ति श्रीप्रश्नव्याकरणाङ्गे, एतद्वृत्तिलेशो यथा-चैत्यानि-जिनप्रतिमा एतासां योऽर्थः स तथेति,

सूत्रैः
प्रतिमा-
सिद्धिः

तथा "दो दिसाओ अभिगिज्झ कप्पति णिग्गंथाण वा निग्गंथीण वा पव्वावित्तए-पाईणं चेव उदीणं चेव" त्ति श्रीस्थानाङ्गे, एतद्वृत्तिदेशो यथा-'दो दिसाउ' इत्यादि, द्वे दिशौ-काष्ठे अभिगृह्य-अङ्गीकृत्य तदभिमुखीभूयेत्यर्थः कल्पते-युज्यते निर्गता ग्रन्थात्-धनादेरिति निर्ग्रन्थाः-साधवस्तेषां निर्ग्रन्थ्यः-साध्व्यस्तासां प्रव्राजयितुं-रजोहरणादिदानेन, प्राचीनां-प्राचीं पूर्वामित्यर्थः उदीचीनाम्-उदीचीमुत्तरामित्यर्थः, उक्तं च-"पुव्वामुहो व उत्तरमुहो व देज्जा ऽहवा पडिच्छेज्जा। जीए जिणादओ वा हवेज्ज जिणचेइआई वा॥१॥"त्ति, अत्र यस्यां दिशि जिनचैत्यानि भवन्ति सा दिग् प्रव्राजनादिधर्मानुष्ठानायोचिता भणिता, तथा 'पंचहिं ठाणेहिं जीवा सुलहबोधित्ताए कम्मं पकरेंति, तं०-अरहंताणं वण्णं वदमाणे १ अरहंतपण्णत्तस्स धम्मस्स व० २ आयरिअउवज्झायाणं वण्णं० ३ चाउव्वण्णस्स संघस्स व० ४ विविक्कतवबंभचेराणं देवाणं व०५ इतिश्रीस्थानाङ्गे पञ्चमस्थानके द्वितीयोद्देशके(४२६) एतद्वृत्तिलेशो यथा-चतुर्वर्णश्रमणसङ्घवर्णो यथा 'एयंमि पूइयंमि नत्थि तयं जं न पूइयं होति। भुवणेऽवि पूयणिज्जो न गुणी संघाओ जं अण्णो॥१॥'त्ति देववर्णवादो यथा-"देवाण अहो सीलं विसयविमोहिआवि जिणभवणे। अच्छरसाहिंपि समं हासाइं जेण न करिंति॥१॥'त्ति, अत्र चतुर्वर्णश्रमणसङ्घस्य वर्णवादस्तावदुत्सूत्रभाषिमात्रस्यापि न स्यात्, तस्य तीर्थप्रतिकूलमार्गप्ररूपकत्वेन तीर्थप्रतिपक्षभूतत्वात् तीर्थस्यावर्णवादित्वमेवेति प्रागुक्तमपि प्रसङ्गतो भणितं बोध्यं, देववर्णवादस्तु चतुर्णां श्रमणादीनां सम्मतसूत्रजिनप्रतिमानामाशातनापरित्यागादिगुणानुमोदनैव बोधिसुलभताहेतुर्दर्शिता तर्हि साक्षात्तदाराधनं तु बोधिसुलभताहेतुर्भवत्येवेति बोध्यं, तथा "तिहिं ठाणेहिं जीवा सुहदीहाउअत्ताए कम्मं पकरेंति, तं०-णो पाणे अइवाइत्ता भवति १ णो मुसं वइत्ता भवति २ तहारूवं समणं वा माहणं वा वंदित्ता नमंसित्ता सक्कारित्ता सम्माणित्ता कल्लाणं मंगलं देवयं चेइअं पज्जुवासेत्ता मणुण्णेणं पीइकरेणं अस-

णपाणखाइमसाइमेणं पडिलाभेत्ता भवति ३, इच्चेतेहिं तिहिं ठाणेहिं जीवा सुहदीआउत्ताए कम्मं पकरिंति" त्ति श्रीस्थानाङ्गतृतीयस्थानकप्रथमोद्देशके, (१२९) एतद्वृत्तिलेशो यथा–वंदित्ता–स्तुत्वा नमस्यित्वा–प्रणम्य सत्कारयित्वा वस्त्रादिना सन्मानयित्वा प्रतिपत्तिविशेषेण कल्याणं–समृद्धिस्तद्धेतुत्वात्साधुरपि कल्याणमेव मङ्गलं–विघ्नक्षयस्तद्धेतुत्वान्मङ्गलं दैवतमिव दैवतं चैत्यमिव–जिनादिप्रतिमेव चैत्यं श्रमणं पर्युपास्य–उसेव्य, अत्र जिनप्रतिमावत्साधोरपि पर्युपासनादि भणितं, जिनप्रतिमापरित्यागे च साधोरपि परित्याग एव संपद्येतेति स्वयमेव पर्यालोच्यं॥ अथ नामग्राहं साधूदाहरणं यथा–"कइविहा णं भंते! चारणा पं० ?, गो० ! दुविहा चारणा पं०, तं०–विज्जाचारणा य जंघाचारणा य, से केणट्ठेणं भंते! एवं वुच्चति ?–विज्जाचारणा वि० ?, २ गो०! तस्स णं छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं विज्जाए उत्तरगुणलद्धिं खममाणस्स विज्जाचारणालद्धी नाम लद्धी समुप्पज्जति, से तेणट्ठेणं जाव विज्जाचारणा वि० २, विज्जाचारणस्स णं भंते! कहिं सीहा गई कहिं सीहे गइविसए पं० ?, गो०! अयं णं जंबूदीवे २ जाव किंचिविसेसाहिए परिक्खेवेणं, देवेणं महिड्ढीए जाव महासुक्खे जाव इणामेवत्तिकट्टु केवलकप्पं जंबूदीवं २ तिहिं अच्छरानिवाएहिं तिक्खुत्तो अणुपरिअट्टित्ताणं हव्वमागच्छेज्जा, विज्जाचारणस्स णं गो०! तहा सीहे गई० विसए पं०, विज्जाचारणस्स णं भंते! तिरिअं केवइए गइविसए पं० ?, गो०!–से णं इओ एगेणं उप्पाएणं माणुसोत्तरपव्वए समोसरणं करेइ, मा० तहिं चेइआइं वंदति तहिं २ त्ता वितीएण उप्पाएणं नंदीसरवरदीवे समोसरणं करेति, नंदी० २ तहिं चेइआइं वंदति, तहिं २ त्ता ततो पडिनिअत्तति, प० २ त्ता इहमागच्छति २ त्ता इह चेइआइं वंदति, विज्जाचारणस्स णं गो०! तिरिअं एवइए गइविसए पं०, विज्जाचारणस्स णं भंते! उड्ढं केवइए गइविसए पं० ?, गो०!–से णं इओ एगेणं उप्पाएणं णंदणवणे समोसरणं करेति, नंद० २ त्ता तहिं चेइआइं वंदति, तहिं २

सूत्रैः
प्रतिमा-
सिद्धिः

त्ता नितीएणं उप्पाएणं पंडगवणे समोसरणं करेति, पंड २ त्ता तहिं चेइआइं वंदति तहिं २ त्ता ततो पडिनिअत्तति, ततो इह आगच्छति, इह २ त्ता इहं चेइआइं वंदति, विज्जाचारणस्स णं गो०! उड्ढं एवइए गइविसए पण्णत्ते, से णं तस्स ठाणस्स अणालोइयपडिकंते कालं करेति नत्थि तस्स आराहणा, से णं तस्स ठाणस्स आलोइअपडिकंते कालं करेति अत्थि तस्स आराहणा(६८४) से केणट्ठेणं भंते! एवं वुचति-जंघाचारणा जंघाचारणा ?, गो०! तस्स णं अट्ठमंअट्ठमेणं अणिक्खित्तेणं तवोकम्मेणं अप्पाणं भावेमाणस्स जंघाचारणलद्धिनामं लद्धी समुप्पज्जइ से तेणट्ठेणं जाव जंघाचारणे, जंघाचारणस्स णं भंते! कहं सीहा गई कहं सीहे गइविसए पं० ?, गो०!-अयं णं जंबूदीवे २ एवं जहेव विज्जाचारणस्स नवरं तिसत्तखुत्तो अणुपरिअट्टित्ता णं हव्वमागच्छेज्जा, जंघाचारणस्स णं गो० तहा सीहा गती तहा सीहे गतिविसए पं०, सेसं तं चेव, जंघाचारणस्स णं भंते! तिरिअं केवइए गइविसए पं० ?, गो०! से णं इओ एगेणं उप्पाएणं रुअगवरे दीवे समोसरणं करेति, रुअ० २ तहिं चेइआइं वंदति, तहिं २ त्ता तओ पडिनिअत्तमाणे बितिएणं उप्पाएणं णंदीसरवरदीवे समोसरणं करेति,नंदी० २ त्ता तहिं चेइआइं वंदति, तहिं २ त्ता इहमागच्छति २ इह चेइआइं वंदति, जंघाचारणस्स णं गोअमा! तिरिअं एवइए गतिविसए पं०। जंघाचारणस्स णं भंते! उड्ढं केवइए गतिविसए पं० ?, से णं इतो एगेण उप्पाएणं पंडगवणे समोसरणं करेति, सम० त्ता तहिं चेइआइं वंदति, तहिं २ त्ता तओ पडिनिअत्तमाणे बितीएणं उप्पाएणं नंदणवणे समोसरणं करेति, नंद २ त्ता तहिं चेइआइं वंदति, तहिं २ त्ता इहमागच्छति, २ त्ता इहं चेइआइं वंदति, जंघाचारणस्स णं गो०! उड्ढं एवइए गइविसए पं०, से णं तस्स ठाणस्स अणालोइअपडिकंते कालं करेति नत्थि तस्स आराहणा, से णं तस्स ठाणस्स आलोइअपडिकंते कालं करेति अत्थि तस्स आराहणा, सेवं भंतेत्ति (६८५) इतिश्री भग० श० २०-उ० ९ एवं चिदेयो

सूत्रैः प्रतिमा-सिद्धिः

एतद्वृत्तिदेशो यथा–'कइ ण'मित्यादि, तत्र चरणं–गमनमतिशयवदाकाशे एषामस्तीतिचारणाः, 'विज्जाचारण'त्ति विद्या–श्रुतं तच्च पूर्वगतं तत्कृतोपकाराश्चारणा विद्याचारणाः,'जंघाचारण'त्ति जङ्घाव्यापारकृतोपकाराश्चारणाः जङ्घाचारणाः, इहार्थे गाथाः–अतिसय-चरणसमत्था जंघाविज्जाहिं चारणा मुणओ। जंघाहिं जाइ पढमो निस्सं काउं रविकरेवि ॥१॥ एगुप्पाएण गओ रुअगवरंमि उ तओ पडिनिअत्तो। बीएणं नंदिस्सरमिहं तओ एइ तइएणं ॥२॥ पढमेणं पंडगवणे बीउप्पाएण णंदणं एइ। तइउप्पाएण तओ इह जंघा-चारणो एइ ॥३॥ पढमेण माणुसोत्तरनगंमि नंदीसरं च बीएणं। एइ तओ तइएणं कयचेइअवंदणो इहयं ॥४॥ पढमेण णंदणवणं बीउप्पाएण पंडगवणंमि। एइ इहं तइएणं जो विज्जाचारणो होइ॥५॥"त्ति, 'तस्स णं'ति यो विद्याचारणो भविष्यति तस्य षष्ठंषष्ठेन तपःकर्मणा विद्यया च पूर्वगतश्रुतविशेषरूपया करणभूतया 'उत्तरगुणलद्धी'ति उत्तरगुणाः–पिंडविशुद्ध्यादयः, तेषु चेह प्रक्रमात् तपो गृह्यते, ततश्च उत्तरगुणलब्धिं–तपोलब्धिं क्षममाणस्य–अधिसहमानस्य, तपः कुर्वत इत्यर्थः,'कहं सीहा गई'त्ति कीदृशी शीघ्रा गतिः–गमनक्रिया 'कहिं सीहे गतिविसए'त्ति कीदृशः शीघ्रो गतिविषयः ?, शीघ्रत्वेन तद्विषयोपचाराच्छीघ्र उक्तः, गतिविषयो–गतिगोचरः, गमनाभावेऽपि शीघ्रगतिगोचरभूतं क्षेत्रं किमित्यर्थः, 'अयं ण'मित्यादि अयं जंबूद्वीप एवंभूतो भवति, ततश्च 'देवे ण'मित्यादि 'हव्वमागच्छेज्जा' इत्यत्र यथा शीघ्रा अस्य देवस्य गतिरित्ययं वाक्यशेषो दृश्यः, 'से णं तस्स ठाणस्से'त्यादि, अयमत्र भावार्थो–लब्ध्युपजीवनं किल प्रमादः, तत्र चासेवितेऽनालोचिते न भवति चारित्रस्याराधना, तद्विराधकश्च न लभते चारित्राराधना-फलमिति, यच्चेहोक्तं विद्याचारणस्य गमनमुत्पादद्वयेनागमनं चैकेन, जङ्घाचारणस्य तु गमनमेकेनागमनं च द्वयेनेति, तल्लब्धिस्वभा-वात्, अन्ये त्वाहुः–विद्याचारणस्यागमनकाले विद्याऽभ्यस्ततरा भवतीत्येकेनागमनं, गमने तु न तथेति द्वाभ्यां, जङ्घाचारणस्य तु

लब्धिरुपजीव्यमानाऽल्पसामर्थ्या भवतीति आगमनं द्वाभ्यां गमनं त्वेकेनैवेति इति भग० टीका, न चात्र चैत्यशब्देन जिनप्रतिमा न व्याख्याताऽतः कथं तन्निर्णय इति शङ्कनीयं, 'ग्रन्थस्य ग्रन्थान्तरं टीके'तिवचनादन्यत्र बहुषु स्थानेषु तथाव्याख्यानात्, किंच–चैत्यशब्देन लुम्पकविकल्पितसाध्वाद्यर्थानभिधायकत्वेन जिनप्रतिमाभिधायकत्वेन च सूत्रपदैरेव दर्शितत्वात् नात्र शङ्कालेशोऽपीति, अत्र चालोचना लब्ध्युपजीवनहेतुका भणिता, न पुनर्जिनप्रतिमावन्दनादिहेतुका, साऽप्यालोचनाऽल्पविराधनाजन्या मिथ्यादुष्कृतमात्ररूपा, न पुनर्गुरुममक्षतपःप्रतिपत्तिरूपा, अन्यथा ऊर्ध्वलोकसमुद्रादौ सिद्धिगमनासंभवेन "चउरुड्ढलोए अ दुवे समुद्दे, तओ जले वीसमहे तहेव । सयं च अट्ठुत्तर तिरिअलोए, समएण एगेण य सिज्झई धुवं ॥१॥ (१४२७*) इतिश्रीउत्तराध्ययनाद्यागमबाधा स्यात्, तत्र च सिद्धिगमनं लब्ध्युपजीवनेन चैत्यादिनमस्कृत्यर्थं गतानां गच्छतां वा साधूनामेव स्यात्, न च प्रयोजनान्तरमेव किंचित्कल्पनीयं, कार्यात्कारणानुमानाच्चैत्यादिनमस्कृतिव्यतिरिक्तं किमपि कार्यं कृतं नास्ति, तेन तदर्थमेव लब्धिमुपजीव्य गमनं बोध्यं, किंच–प्रयोजनान्तरकल्पनायामपि यदि चैत्यनमस्कृतिः साधूनामकल्प्या सावद्या वा स्यात्तर्हि तत्र गतानामपि साधूनां चैत्यनमस्कृतेरसंभवात्, नहि प्रयोजनान्तरगतोऽपि साधुरकल्प्यसावद्यानुष्ठानपरो भवेत्, अतिप्रसङ्गात्, लुम्पकस्यापि तथा कर्त्तव्यतापत्तेश्च, एतेन तत्र चैत्यवन्दनाप्रभवपातकस्यालोचनं भणितमिति कुवचनं ब्रुवाण एव लुम्पको निरस्तो बोध्यः, तत्र तद्विकल्पवचनावकाशस्यासंभवात्, चैत्यपरिपाट्यर्थमेव तद्गमनस्योपलभ्यमानत्वात्, ननु लब्धौ समुत्पन्नायां तल्लब्धिपरीक्षानिमित्तमेव नन्दीश्वरादौ गमनं जङ्घाचारणविद्याचारणानां, न पुनः केवलं चैत्यवन्दनार्थमेव तत्र गमनमितिचेदहो भ्रान्तत्वं लुम्पकस्य, यतः तत्र गमनेन लब्धिपरीक्षा उत चैत्यनमस्कृत्या वा ?, आद्ये गत्वैवायान्ति किमर्थं तवाभिप्रायेण पापहेतुमपि चैत्यनमस्कृतिमपि

कुर्वन्ति, अथ तथैव तस्य जीतकल्प इतिचेत्सत्यं, सिद्धा तर्हि तथाविधसाधूनां चैत्यनमस्कृतिर्जीतकल्पत्वेन यथा तथा तद्दृष्टान्ते-
नान्येषामपि साधूनां जिनप्रतिमानमस्कृतिः प्रत्यहं जीतकल्प इति चारित्राराधनवत् तदाराधनमपि मोक्षाङ्गं संपन्नम्, अथ नन्दी-
श्वरादिचैत्यनमस्कृत्यैव तल्लब्धिपरीक्षेति द्वितीयो विकल्पस्तर्हि अनवरतं षष्ठाष्टमादितपसापि या लब्धिः समुत्पन्ना साऽपि नन्दी-
श्वरादिगतजिनप्रतिमावन्दनसामर्थ्यजनिका सिद्धा, तत्सिद्धौ च चारित्रावाप्तिवत्तत्सामर्थ्यावाप्तिरपि पुण्यप्रकृतिजन्या तज्जनिका
चेति संपन्नं लुम्पकमतं निराश्रयमिति। किंच–लुम्पकमताभिप्रायेण विद्याचारणादयः समुत्पन्नलब्धयो नन्दीश्वरादौ चैत्यानि नम-
स्कुर्वन्ति, आगताश्चात्रत्यान्यप्यशाश्वतानि चैत्यानि नमस्कुर्वन्ति, पश्चाचालोच्य चारित्राराधका भवन्ति, न पुनरन्यथापि, अन्यथा
चैत्यनमस्कृतेरसंभवात्, यतो न चैत्यनमस्कृत्यर्थं केनापि बलवत्ता प्रेरिता न वा लज्जया तत्परित्यागाशक्ताश्च, किंतु निजश्रद्धयै-
वेति, यद्यपि 'किंच लुम्पकमताभिप्रायेणे'त्याद्यनतरोक्तं लुम्पकस्य गलपादुकाकल्पमपि नास्माकमभीष्टम्, अनागमिकत्वात्, तथा-
विधपरंपरानागतत्वात्तथाभिप्रायस्य तथापि तत्रैवं पृष्टव्यं–भो लुम्पक! एवंविधवाग्रचना तत् स्वतः सिद्धा कुतश्चिच्छिक्षिता वा?,
तत्र द्वितीयविकल्पस्त्वसंभव्येवाच्छिन्नपरम्परागतगुर्वभावात्, किंतु द्वितीयो (प्रथमो) वक्तव्यः, स च संमूर्च्छिमदर्दुरवाक्पद्धतिरिव
संज्ञिनां विचारणानुपयोगीत्यलं विस्तरेण। अथ साध्व्युदाहरणं तु साधूदाहरणान्तर्भूतमेव बोध्यं, तदनुयायित्वात्, तथा भृगुकच्छे
द्वीपान्तरागतेन केनचिन्मिथ्यादृशा वणिजा रूपवतीः साध्वीर्निरीक्ष्य तदपहरणाय कपटश्रावको जातः, पश्चात् ताः विश्वास्य चल-
नावसरे वस्त्रादिनिमित्तं निमन्त्रिताः साध्व्यः, पण्यभृतपोतपार्श्वे समानीयोक्तवान्–पोतमध्ये जिनप्रतिमाः सन्ति ताः नमस्कुरुत, सा-
ध्व्यश्च सरलाभिप्रायत्वात् पोतमध्ये चैत्यनमस्कृत्यर्थमारूढाः, तेन च पोतं जलमध्ये प्रवाह्य ता द्वीपान्तरं नीता इत्यादि निशीथभाष्य-

पूर्वादिषु प्रतीतमेव, भाष्यादीनां च सिद्धान्तता प्रागेव समर्थिता बोध्या। तथा सम्यग्दृक्सूर्याभादिदेवैरपि जिनप्रतिमाः पूजिताः, तथाहि–'तए णं तस्स सूरिआभस्स पंचविहाए पज्जत्तीए पज्जत्तिभावं गयस्स समाणस्स इमेएआरूवे अब्भत्थिए पत्थिए चिंतिए मणोगए संकप्पे समुप्पज्जित्था–किं मे पुव्विं करणिज्जं ? किं मे पच्छा करणिज्जं ? किं मे पुव्विं सेयं ? किं मे पच्छा सेयं ? किं मे पुव्विंपि पच्छावि हिआए सुहाए खमाए निस्सेसाए आणुगामित्ताए भविस्सति ?, तए णं तस्स सूरिआभस्स देवस्स सामाणिअपरिसोववन्नगा देवा सूरिआभस्स देवस्स इमं एआरूवं अब्भत्थिअं जाव समुप्पण्णं समभिजाणित्ता जेणेव सूरिआभे देवे तेणेव उवागच्छंति २ सूरिआभं देवं करयलपरिग्गहिअं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेंति २ एवं वयासी–एवं खलु देवाणुप्पिआ! सूरिआभे विमाणे सिद्धाययणंसि जिणपडिमाणं जिणुस्सेहपमाणमेत्ताणं अट्ठसयं सन्निखित्तं चिट्ठति, सभाए णं सुहम्माए माणवयचेइअखंभे वयरामएसु गोलवट्टएसु समुग्गएसु बहुईओ जिणसकहाओ सन्निखित्ताओ चिट्ठंति, ताओ णं देवाणुप्पिआणं अण्णेसिं च बहूणं वेमाणिआणं देवाणं देवीण य अच्चणिज्जाओ पूअणिज्जाओ वंदणिज्जाओ नमंसणिज्जाओ सक्कारणिज्जाओ सम्माणणिज्जाओ कल्लाणं मंगलं देवयं चेइअं पज्जुवासणिज्जाओ भवंति, तं एअं णं देवाणुप्पिआणं पुव्विं करणिज्जं तं एयं णं देवाणुप्पिआणं पच्छा करणिज्जं तं एअण्णं देवाणुप्पिआणं पुव्विंपि पच्छावि हिआए सुहाए खमाए निस्सेसाए, तं एयं देवाणुप्पियाणं पुव्विं सेयं तं एयं देवाणुप्पियाणं पच्छा सेयं २ तं एयं आणुगामिअत्ताए भविस्सति" त्ति श्रीराजप्रश्नीयोपाङ्गे, एतद्वृत्तिदेशो यथा–'तए णं'मित्यादि सुगमं, नवरमिह भाषामनःपर्याप्त्योः समाप्तिकालान्तरस्य प्रायः शेषपर्याप्तिसमाप्तिकालान्तरापेक्षया स्तोकत्वादेकत्वेन विवक्षणमिति 'पंचविहाए पज्जत्तीए पज्जत्तीभावं गच्छइ' इत्युक्तः, 'तए णं'मित्यादि, ततस्तस्य सूर्याभस्य देवस्य पञ्चविधया पर्याप्त्या पर्याप्तिभाव-

मुपगतस्य सतोऽयमेतद्रूपः संकल्पः समुदपद्यत, 'अब्भत्थिए' इत्यादि पदव्याख्यानं पूर्ववत्, किं 'मे' मम पूर्वं करणीयं ? किं मे पश्चात् करणीयं ? किं मे पूर्वं कर्तुं श्रेयः ? किं मे पश्चात् कर्तुं श्रेयस्तथा किं मे पूर्वमपि च पश्चादपि च हिताय, भावप्रधानोऽयं निर्देशो, हितत्वाय-परिणामसुन्दरतायै सुखाय-शर्मणे क्षमायै, अयमपि भावप्रधानो निर्देशः संगतत्वाय, निःश्रेयसाय-निश्चितकल्याणायानुगामिकतायै-परम्परशुभानुबन्धसुखाय भविष्यतीति इति श्रीराज० वृ०, अत्र यदेव भावजिनवन्दने फलं तदेव जिनप्रतिमावन्दनेऽप्युक्तं, न चैतत्सूर्याभदेवस्य सामानिकदेववचनं न सम्यग् भविष्यतीति शङ्कनीयं, सम्यग्दृशां देवानामप्युत्सूत्रवादित्वासंभवात्, नहि क्वाप्यागमे 'किं मे पुव्विं करणिज्ज'मित्यादिके सम्यग्दृष्टिना पृष्टेऽप्यैहिकसुखमात्रनिमित्तं स्रक्चन्दनाङ्गनादिकं 'हिआय सुहाए' इत्यादिरूपेण केनापि प्रत्युत्तरविषयीकृतं दृष्टं श्रुतं चेत्यत्र बह्व्यो युक्तयः स्वयमभ्यूह्याः। तथा "तए णं से सूरिआभे देवे पोत्थयरयणं गिण्हति २ पोत्थयरयणं विहाडेइ २ पोत्थरयणं वाएइ २ धम्मिअं ववसायं गिण्हति २ पोत्थयरयणं पडिनिक्खिवति २ सीहासणाओ अब्भुट्ठेति २ ववसायसभाओ पुरिच्छिमिल्लेण दारेणं पडिणिक्खमति, पुरच्छिमिल्लेणं दारेणं पडिनिक्खमित्ता जेणेव नंदापुक्खरणी तेणेव उवागच्छति, नन्दापुक्खरणिं पुरिच्छिमिल्लेण तोरणेण पुरिच्छिमिल्लेण तिसोवाणपडिरूवएणं पच्चोरुहइ २ त्ता हत्थपायं पक्खालेति २ आयंते चोक्खे परमसुइभूए एगं महं सेअं रययामयं विमलसलिलपुण्णं मत्तगयमुहागितिकुंभसमाणं भिंगारं गिण्हति २ जाइं तत्थ उप्पलाइं जाव सहस्सपत्ताइं ताइं गिण्हति २ नन्दाओ पुक्खरिणिओ पच्चोरुहति २ जेणेव सिद्धायपयणे तेणेव पहारेत्थ गमणाए, तए णं तं सूरिआभं देवं चत्तारि य सामाणियसाहस्सीओ जाव सोलस आयरक्खदेवसाहस्सीओ अन्ने य बहवे जाव देवा य देवीओ अ अप्पेगइआ कुलसहत्था जाव अप्पेगइआ धूवकडुच्छुयहत्थगया हट्ठतुट्ठ जाव सूरिआभं देवं

पिङ्खओ २ समणुगच्छंति, तए णं से सूरिआभे देवे चउहिं सामाणिअसाहस्सीहिं जाव अण्णेहिं बहूहिं देवेहिं देवीहिं अ सद्धिं संपरिवुडे सव्वबलेहिं जाव वाइअरवेण जेणेव सिद्धायययणे तेणेव उवागच्छति, सिद्धाययणं पुरच्छिमिल्लएणं दारेणं अणुपविसइ २ जेणेव देवच्छंदए जेणेव जिणपडिमाओ तेणेव उवागच्छइ २ आलोए जिणपडिमाणं पणामं करेइ २ लोमहत्थयं गिण्हति २ लोमहत्थएणं जिणपडिमाओ परामुसइ २ गंधोदएण ण्हावेति २ गोसीसचंदणेणं गायाइं अणुलिंपति २ जिणपडिमाणं अहयाइं देवदूमजुअलाइं निअंसेइ २ पुप्फारुहणं २ चुण्णारुहणं २ वण्णारुहणं वत्थारुहणं आभरणारुहणं ६ पकरेति, आसत्तोसत्तवट्टवग्घारिअमल्लदामकलावं करेति २ त्ता कयग्गाहगहिअकरयलपब्भट्ठविप्पमुक्केणं दसद्धवण्णकुसुमेण मुक्कपुप्फपुंजोवयारकलिअं करेति २ त्ता जिणपडिमाणं पुरतो अच्छेहिं सण्हेहिं रययामएहिं अच्छरसाहिं तंदुलेहि अ अट्ठट्ठमंगलं आलिहति, तंजहा–सोत्थिअं जाव दप्पणं, तयाणंतरं च णं चंदप्पहरयणवयरवेरुलिअविमलदंडकंचणमणिरयणभत्तिचित्तं कालागरुपवरकुंदुरुक्कडज्झंतधूवमघमघंतगंधुद्धुआभिरामं, गंधवट्टिं विणिम्मुअंतं वेरुलिअमयं कडुच्छुअं पग्गिहिऊणं पयत्तेणं धूवं दाऊण जिणवराणं अट्ठसयसुद्धगंथजुत्तेहिं अट्ठजुत्तेहिं अपुणरुत्तेहिं महावित्तेहिं संथुणइ, पच्छा सत्तट्ठ पयाइं पच्चोसक्कइ २ वामं जाणुं अंचेइ २ दाहिणं जाणुं धरणितलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवाडेइ २ त्ता ईसिं पच्चुन्नमइ २ त्ता करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी–नमोत्थुणं जाव ठाणं संपत्ताणं" इतिश्रीराजप्रश्नीयोपाङ्गे, एतद्वृत्तिर्यथा "पोत्थयरयणं मुअइ" इति उत्सङ्गे स्थानविशेषे वा उत्तमे इति द्रष्टव्यं, 'विहाडेइ'त्ति उद्घाटयति "धम्मिअं ववसायं ववसइ"त्ति धार्मिकं–धर्मानुगतं व्यवसायं व्यवस्यति–कर्तुमभिलषतीतिभावः, 'अच्छरसातंदुलेहिं' अच्छो रसो येषु तेऽच्छरसाः, प्रत्यासन्नवस्तुप्रतिबिम्बाधारभूता इवातिनिर्मला इत्यर्थः, अच्छरसाश्च ते तन्दुलाश्च तैर्दिव्यतन्दु-

लैरितिभावः, पुप्फपुंजोवयारकलिअं करेत्ता चंदप्पभवयरवेरुलिअविमलदंडमिति चन्द्रप्रभवज्रवैडूर्यमयो विमलो दण्डो यस्य स तथा तं कांचनमणिरत्नभक्तिचित्रं कालागरुप्रवरकुन्दुरुष्कतुरुष्कसत्केन धूपेनोत्तमगन्धिनाऽनुविद्धा प्राकृतत्वात्पदव्यत्ययः धूपवर्त्तिं विनिर्मुञ्चन्तं वैडूर्यमयधूपकडुच्छुकं प्रगृह्य प्रयत्नतो धूपं दत्त्वा जिनवरेभ्यः, सूत्रे षष्ठी प्राकृतत्वात्, सप्ताष्टानि पदानि पश्चादपसृत्य दशाङ्गुलिमञ्जलिं मस्तके रचयित्वा प्रयत्नतो 'अट्ठसयविसुद्धगंथजुत्तेहिं' विशुद्धो-निर्मलो लक्षणदोषरहित इतिभावः यो ग्रन्थः-शब्दसंदर्भस्तेन युक्तान्यष्टशतं च तानि विशुद्धग्रन्थयुक्तानि च तैरर्थयुक्तैः-अर्थसारैरपुनरुक्तैर्महावृत्तैः, तथाविधदेवलब्धिप्रभाव एपः, संस्तौति, संस्तुत्य वामं जानुमञ्चतीत्यादिना विधिना प्रणामं कुर्वन् प्रणिपातदण्ककं पठति,तद्यथा-नमोत्थुणमित्यादि इतिश्री राज०वृत्तिः, अत्र पुस्तकरत्नं वाचयित्वा धार्मिकव्यवसायं गृह्णातीत्युक्तं तदनन्तरं जिनप्रतिमापूजनादिपूर्वकशक्रस्तवपठनमित्यादिव्यतिकरं सम्यग्दृशः सूर्याभदेवस्यापि श्रुत्वा देवकृत्यमित्युपेक्षावचनं ब्रुवाणः पापात्मा लुम्पकोऽप्युपेक्षणीय एवाश्राव्यप्रलापित्वात्, यतो देवकृत्यमपि सांसारिकं धार्मिकं च, तत्र सम्यग्दृशां यद्धार्मिकं कृत्यं तज्जिनोदितमेव धर्मत्वेन बोध्यम्, अन्यथा मिथ्यादृष्टित्वमेव स्याद्, अधर्मे धर्मसंज्ञाया निवेशाद्, अस्ति च जिनप्रतिमापूजादिकं धर्मः, अन्यथा धार्मिकव्यवसायं गृह्णातीत्युक्तेरसंभवात्, प्रतिमापुरस्ताच्छक्रस्तवपाठासंभवाद्,एवंविधेः सम्यग्दृशां क्वापि सांसारिककृत्येऽनुपलम्भात् सुलभबोधिताहेतुदेववर्णवादस्यापि प्रतिमाविषयकाशातनापरित्यागानुमोदनपूर्वकभणितत्वाच्च। किंच 'जेणेव सिद्धायपणे' तथा 'जेणेव जिणघरे' तथा 'धूवं दाऊण जिणवराण'मिति गणधरवचनं जिनप्रतिमाजिनवरयोः कथञ्चिदभेदबुद्ध्यैव जिनप्रतिमाविषयं सम्यग् स्यान्नान्यथेति जिनवरवज्जिनप्रतिमापि सम्यग्दृशामाराध्यैवेत्यलं प्रसङ्गेन ॥ "तए णं से विजये देवे केसालंकारेणं वत्थालंकारेणं मल्लाकारेणं आभरणालंकारेणं चउव्विहेणं

अलंकारेणं अलंकियभूसिए समाणे पडिपुण्णालंकारेण सीहासणाओ अब्भुट्ठेति २ त्ता अलंकारिअसभाओ पुरच्छिमिल्लेणं दारेणं पडिनिक्खमति २ मित्ता जेणेव ववसायसभा तेणेव उवागच्छति २ त्ता ववसायसभं अणुप्पदाहिणं करेमाणे २ पुरच्छिमिल्लेणं दारेणं अणुपविसति २ त्ता जेणेव सीहासणे तेणेव उवागच्छति २ त्ता सीहासणवरगए पुरच्छाभिमुहे सन्निसण्णे। तए णं तस्स विजयस्स देवस्स आभियोगिअदेवा पोत्थयरयणं उवठविंति, तए णं से विजए देवे पोत्थयरयणं गेण्हति २ पोत्थयरयणं मुअइ पोत्थयरयणं मुएत्ता पोत्थयरयणं विहाडेइ २ त्ता पोत्थयरयणं वाएइ पोत्थयरयणं वाएत्ता धम्मिअं ववसायं पगिण्हति २ त्ता पडिणिक्खिवति पोत्थयरयणं पडिनिक्खिविता सीहासणाओ अब्भुट्ठेति २ ववसायमभाओ पुरच्छिमिल्लेण दारेण पडिणिक्खमति २ त्ता जेणेव णंदा पोक्खरणी तेणेव उवागच्छति २ णंदं पुक्खरणिं अणुप्पयाहिणीकरेमाणे पुरच्छिमिल्लेणं तोरणेणं अणुपविसति २ पुरच्छिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहति २ त्ता हत्थपायं पक्खालेति २ त्ता एगं महं सेअं रययामयं विमलसलिलपुण्णं मत्तगयमुहाकितिसमाणं भिंगारं पगिण्हति २ त्ता जातिं तत्थ उप्पलाइं पउमाइं जाव सयसहस्सपत्ताइं ताइं गिण्हेति २ णंदाओ पुक्खरणीओ पच्चुत्तरति २ जेणेव सिद्धायणे तेणेव पहारेत्थ गमणाए, तए णं तं विजयं देवं चत्तारि अ सामाणिअसाहस्सीओ जाव अण्णे बहवे वाणमंतरा देवा देवीओ अ अप्पेगइआ उप्पलहत्थगया जाव सयसहस्सपत्तहत्थगया विजयं देवं पिट्ठतो २ अणुगच्छंति, तए णं तस्स विजयस्स देवस्स बहवे आभिओगिआ देवा देवीओ अ कलसहत्थगया जाव धूवकडुच्छुयहत्थगया य विजयं देवं पिट्ठओ अणुगच्छंति, तए णं से विजए देवे चउहिं सामाणिअसहस्सेहिं जाव अण्णेहिं बहूहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे सव्विड्ढीए सव्वजुत्तीए जाव निग्घोसनाइयरवेण जेणेव सिद्धाययणे तेणेव उवागच्छति २ सिद्धाययणं अणुपयाहिणीकरेमाणे २ पुरच्छिमि-

हत्थं दारेणं अणुपविसइ २ जेणेव देवच्छंदए तेणेव उवागच्छइ २ आलोए जिणपडिमाणं पणामं करेइ २ त्ता लोमहत्थयं गिण्हति २ जिणपडिमाणं लोमहत्थएणं पमज्जति २ त्ता सुरभिणा गंधोदएण ण्हाणेति २ दिव्वाए सुरभीए गंधकासाईए गायाइं लूहेति २ त्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपति २ त्ता जिणपडिमाणं अहयाइं सेआइं दिव्वाइं देवदूसजुअलाइं निअंसेइ २ अग्गेहिं वरेहिं गंधेहिं मल्लेहिं अचेति २ त्ता पुप्फारुहणं गंधारुहणं मल्लारुहणं वण्णारुहणं चुण्णारुहणं आभरणारुहणं करेति २ त्ता अच्छेहिं सण्हेहिं सेतेहिं रययामएहिं अच्छरसातंदुलेहिं जिणपडिमाणं पुरओ अट्ठट्ठमंगलाई आलिहित्ता करग्गगहितकरतलपब्भट्ठविप्पमुक्केण दसद्धवण्णेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलितं करेति २ त्ता चंदप्पभवयरवेरुलिअविमलदंडं कंचणमणिरयणभत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवगंधुत्तमाणुविद्धं धूमवट्टिं विणिम्मुअंतं वेरुलिअमयं धूवकडुच्छुअं पग्गहेत्तु पयत्तेणं धूवं दाऊण जिणवराणं अट्ठसयविसुद्धगंथजुत्तेहिं महावित्तेहिं अत्थजुत्तेहिं अपुणरुत्तेहिं संथुणइ २ त्ता सत्तट्ठ पयाइं ओसरइ २ त्ता वामं जाणुं अंचेइ २ त्ता दाहिणं जाणुं धरणियलंसि निवेसेइ २ त्ता तिक्खुत्तो मुद्धाणं धरणितलंसि नमेइ २ त्ता ईसिं पच्चुण्णमति २ त्ता कडगतुडिअथंभियाओ भुआओ पडिसाहरति २ करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी नमोत्थुणं अरहंताणं भगवंताणं जावसिद्धिगइणामधेयं ठाणं संपत्ताणंतिकट्टु वंदति नमंसति २ त्ता' इत्यादि श्रीजीवाभिगमे, एतद्वृत्तिर्यथा—एवंविधेन चतुर्विधेन माल्येन कल्पवृक्षमिवात्मानमलङ्कृतविभूषितं करोति, कृत्वा च परिपूर्णालङ्कारः सिंहासनादभ्युत्तिष्ठति, अभ्युत्थायालङ्कारसभातः पूर्वेण द्वारेण निर्गत्य यत्रैव व्यवसायसभा तत्रैवोपागच्छति, उपागत्य सिंहासनवरगतः पूर्वाभिमुखः सन्निषण्णः, 'तए ण'मित्यादि, ततस्तस्य विजयस्य देवस्याभियोग्याः पुस्तकरत्नमुपनयन्ति, 'तए ण'मित्यादि ततः स विजयो देवः पुस्तकरत्नं गृह्णाति, गृहीत्वा

च पुस्तकरत्नमुत्सङ्गादावितिगम्यते मुञ्चति, मुक्त्वा विघाटयति,विघाट्य अनुप्रवाचयति' अनु-परिपाट्या प्रकर्षेण-विशिष्टार्थावगम-रूपेण वाचयति, वाचयित्वा धार्मिकं-धर्मानुगतं व्यवसायं व्यवस्यति, कर्तुमभिलषतीतिभावो, व्यवसायसभायाः शुभाध्यवसाय-निबन्धनत्वात्,क्षेत्रादेरपि कर्मक्षयोपशमादिहेतुत्वात्, उक्तं च-"उदयक्खयक्खओवसमोवसमावि जयं च कम्मुणो भणिआ। दव्वं खित्तं कालं भवं च भावं च संपप्पे ॥१॥"ति, धार्मिकं च व्यवसायं व्यवसाय पुस्तकरत्नं प्रतिनिक्षिपति, प्रतिनिक्षिप्य सिंहासना-दभ्युत्तिष्ठति, अभ्युत्थाय व्यवसायसभातः पूर्वद्वारेण विनिर्गच्छति, विनिर्गत्य यत्रैव व्यवसायसभायाः एव पूर्वा नन्दा पुष्करणी तत्रैवोपागच्छति, उपागत्य नन्दापुष्करणीमनुप्रदक्षिणीकुर्वन् पूर्वतोरणेनानुप्रविशति, प्रविश्य पूर्वेण त्रिसोपानप्रतिरूपकेण प्रत्यव-रोहति-मध्ये प्रविशतीतिभावः, प्रत्यवरुह्य हस्तपादौ प्रक्षालयति, प्रक्षाल्यैकं महान्तं श्वेतं रजतमयं विमलसलिलपूर्णं मत्तकरिमहा-मुखाकृतिसमानं भृङ्गारं गृह्णाति, गृहीत्वा यानि तत्रोत्पलानि पद्मानि कुमुदानि नलिनानि यावच्छतपत्रसहस्रपत्राणि तानि गृह्णाति, गृहीत्वा नन्दातः पुष्करणीतः प्रत्युत्तरति, प्रत्युत्तीर्य यत्रैव सिद्धायतनं तत्रैव प्रधारितवान् गमनाय, 'तए णं'मित्यादि ततस्तस्य विजयस्य देवस्य चत्वारि सामानिकदेवसहस्राणि चतस्रः सपरिवाराः अग्रमहीष्यः तिस्रः पर्षदः सप्तानीकानि सप्तानीकाधिपतयः षोडश आत्मरक्षकदेवसहस्राणि अन्ये च बहवो विजयराजधानीवास्तव्या वानमन्तरा देवाश्च देव्यश्च अप्येकका उत्पलहस्तगताः अप्येकका पद्महस्तगताः अप्येकका कुमुदहस्तगताः एवं नलिनसुभगसौगन्धिकपुण्डरीकमहापुण्डरीकशतपत्रसहस्रपत्रशतसहस्रपत्रहस्तगताः क्रमेण प्रत्येकं वाच्याः विजयं देवं पृष्ठतः २ परिपाट्येतिभावः अनुगच्छन्ति, 'तए णं'मित्यादि, ततस्तस्य विजयस्य देवस्य बहव आभियोग्या देवा देव्यश्च अप्येककाः चन्दनकलशहस्तगता अप्येकका भृङ्गारहस्तगताः अप्येकका आदर्शहस्तगता एवं स्थालीपात्र-

सुप्रतिष्ठवातकरकचित्ररत्नकरण्डकपुष्पचङ्गेरीयावल्लोमहस्तचङ्गेरीपुष्पपटलकयावल्लोमहस्तपटलकसिंहासनच्छत्रचामरतैलसमुद्गकयावद्-ञ्जनसमुद्गकधूपकडुच्छुकहस्तगताः क्रमेण प्रत्येकमभिज्ञाप्याः,विजयं देवं पृष्ठतः पृष्ठतोऽनुगच्छन्ति,ततश्च विजयदेवस्य चतुर्भिः सामानिकसहस्रैश्चतसृभिः सपरिवाराभिः अग्रमहीषिभिस्तिसृभिः पर्षद्भिः सप्तभिरनीकैः सप्तभिरनीकाधिपतिभिः षोडशभिरात्मरक्षकदेवसहस्रैरन्यैश्च बहुभिर्विजयराजधानीवास्तव्यैर्वानमन्तरैर्देवैर्देवीभिश्च सार्द्धं संपरिवृत्तः सर्व्वर्द्ध्या यावन्निर्घोषनादितरवेणमिति यावत्करणादेवं परिपूर्णः पाठो द्रष्टव्यः, 'सव्वजुईए सव्वबलेणं सव्वसमुदएणं सव्वविभूईए सव्वसंभमेणं सव्वगंधपुप्फमल्लालंकारेणं सव्वतुडिअसद्दनिनाएणं महया इड्डीए महया जुईए महया बलेणं महया समुदएणं महया वरतुडिअजमगसमगपडुप्पवाइअरवेणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कदुंदुहिनिग्घोसनाइयरवेणं' अस्य व्याख्या प्राग्वत्, यत्रैव सिद्धायतनं तत्रोपागच्छतीति, उपागत्य सिद्धायतनमनुप्रदक्षिणीकुर्वन् पूर्वद्वारेण प्रविशति, प्रविश्यालोके जिनप्रतिमानां प्रणामं करोति, कृत्वा यत्रैव मणिपीठिका यत्रैव देवच्छन्दको यत्रैव जिनप्रतिमास्तत्रोपागच्छति, उपागत्य लोमहस्तकं परामृशति, परामृश्य जिनप्रतिमाः प्रमार्जयति, प्रमार्ज्य दिव्योदकधारया स्नपयित्वा सरसेनार्द्रेण गोशीर्षचन्दनेन गात्राण्यनुलिम्पयति, अनुलिप्याहतानि–अपरिमलितानि दिव्यानि देवदूष्ययुगलानि 'निअंसेइ'त्ति परिधापयति, परिधाप्य अग्र्यैः–अपरिभुक्तैर्वरैः–प्रधानैर्गन्धैर्माल्यैश्चार्चयति, एतदेव सविस्तरमुपदर्शयति–पुष्पारोपणं माल्यारोपणं वर्णकारोपणं चूर्णारोपणं गन्धारोपणं आभरणारोपणं करोति, कृत्वा तासां जिनप्रतिमानां पुरतोऽच्छैः–स्वच्छैः श्लक्ष्णैर्मसृणैः रजतमयैः,अच्छो रसो येषां ते अच्छरसाः, प्रत्यासन्नवस्तुप्रतिबिम्बाधारभूता इवातिनिर्मला इतिभावः, ते च ते तन्दुलाश्च अच्छरसतन्दुलाः, पूर्वपदस्य दीर्घान्तता प्राकृतत्वाद्यथा वयरामया नेमा इत्यादौ, तैरष्टावष्टौ स्वस्तिकादीनि मङ्गलका-

न्यालिखति, आलिख्य 'कयग्गाहगहिअ'मित्यादि मैथुनप्रथमसमारम्भे मुखचुम्बनाद्यर्थं युवत्याः पञ्चाङ्गुलिभिः केशेषु ग्रहणं कचग्राहस्तेन कचग्राहेण गृहीतं करतलाद्विमुक्तं सत् प्रभ्रष्टं करतलप्रभ्रष्टविमुक्तं, प्राकृतत्वादेवं पदव्यत्ययः, तेन दशार्द्धवर्णेन-पञ्चवर्णेन कुसुमेन-कुसुमसमूहेन पुष्पपुञ्जोपचारकलितः पुष्पपुञ्ज एवोपचारः-पूजा पुष्पपुंजोपचारस्तेन कलितं-युक्तं-करोति, कृत्वा च 'चंदप्पहवइरवेरुलिअविमलदंडं' चंद्रप्रभवज्रवैडूर्यमयो विमलो दण्डो यस्य स तथा तं, काञ्चनमणिरत्नभक्तिचित्रं कालागुरुप्रवरकुंदुरुक्कतुरुष्कधूपेन गन्धोत्तमेनानुविद्धा कालागुरुप्रवरकुंदुरुष्कतुरुष्कधूपगन्धोत्तमानुविद्धा प्राकृतत्वात् पदव्यत्ययस्तां धूपवर्त्तीं विनिर्मुञ्चन्तं वैडूर्यमयं धूपकडुच्छुगं प्रगृह्य धूपं दत्त्वा जिनवरेभ्यः, सूत्रे षष्ठी प्राकृतत्वात्, सप्ताष्टानि पदानि पश्चादपसृत्य दशाङ्गुलिमञ्जलिं मस्तके कृत्वा प्रयतः 'अट्ठसयविसुद्धगंथजुत्तेहिं' इति विशुद्धो-निर्मलो लक्षणदोषरहित इतिभावः, यो ग्रन्थः शब्दसंदर्भस्तेन युक्तानि विशुद्धग्रन्थयुक्तानि अष्टशतं च तानि विशुद्धग्रन्थयुक्तानि च तैरर्थयुक्तैः-अर्थसारैरपुनरुक्तैर्महावृत्तैः तथाविधदेवलब्धिप्रभाव एषः, संस्तौति, संस्तुत्य वामं जानुमञ्चति-उत्पाटयति, दक्षिणं जानुं धरणितले 'निवाडेइ'त्ति निपातयति लगयतीत्यर्थः, त्रिकृत्वः-त्रीन् वारान् मूर्द्धानं धरणितले 'नमेइ'त्ति नमयति, नमयित्वा चेषत्प्रत्युन्नमयति, प्रत्युन्नम्य कटकत्रुटितस्तम्भितौ भुजौ संहरति-संकोचयति संहृत्य करतलपरिगृहीतं शिरसावर्त्तं मस्तकेऽञ्जलिं कृत्वा एवमवादीत्-'नमोत्थुणं'मित्यादि, नमोस्तु णमिति वाक्यालङ्कारे देवादिभ्योऽतिशयपूजामर्हन्तीति अर्हन्तस्तेभ्यः, सूत्रे षष्ठी प्राकृतत्वात्, 'छट्ठीविभत्तीएँ भण्णइ चउत्थी' इति प्राकृतलक्षणात्, ते चार्हन्तो नामादिरूपा अपि सन्ति अतो भावार्हत्प्रतिपत्त्यर्थमाह-भगवद्भ्य इत्यादि श्रीजी० सू० ॥ अथ यथा घटमानयेत्यादिवाक्यान्येव स्वत एव गृहीतसंकेतकानां स्ववाच्यविषयकज्ञानजनकानि तथा जिनप्रतिमानामाराध्यत्वं जिनप्रतिमा एव तथाविधसं-

शिष्यः संशयपतीति दर्शयितुमाह—"तत्थ णं देवच्छंदए अट्ठसयं जिणपडिमाणं जिणुस्सेहपमाणमेत्ताणं सन्निखित्तं चिट्ठति, तासि णं जिणपडिमाणं अयमेआरूवे वण्णावासे पण्णत्ते, तंजहा—तवणिज्जमया हत्थतला पायतला अंकमयाइं नक्खाइं अंतोलोहिअक्खपडिसेआइं कणगमया पाया कणगमया गोप्फा कणगमईओ जंघाओ कणगमया जाणू कणगमया ऊरू कणगमईओ गायलट्ठीओ तवणिज्जमईओ नाभिओ रिट्ठमईओ रोमराईओ तवणिज्जमया चुचुआ तवणिज्जमया सिरिवच्छा कणगमईआओ बाहाओ कणगमईओ पासाओ कणगमईओ गीवाओ रिट्ठामए मंसू सिलप्पवालमया ओट्ठा फलिहामया दंता तवणिज्जमयीओ जीहाओ तवणिज्जमया तालुआ कणगमईओ नासाओ अंतोलोहिअक्खपरिसेआओ अंकमयाइं अच्छीणि अंतोलोहिअक्खपरिसेआइं पुलकामईओ दिट्ठीओ रिट्ठामईओ तारगाओ रिट्ठामयाइं अच्छीपत्ताइं रिट्ठामईओ भमुहाओ कणगामया कवोला कणगामया सवणा कणगामया णिडालवट्टा वयरमईओ सीसयडीओ तवणिज्जमईओ केसंतकेसभूमीओ रिट्ठामया उवरिमुद्धया, तासि णं जिणपडिमाणं पिट्ठतो पत्तेअं २ छत्तधारगपडिमाओ पण्णत्ताओ, ताओ णं छत्तधारगपडिमाओ हिमरययकुंदिंदुसप्पकासाइं सकोरंटमल्लदामाइं धवलाइं आतपत्ताइं सलीलं ओहारेमाणीओ चिट्ठंति, तासि णं जिणपडिमाणं उभओ पासिं पत्तेअं २ चामरधारपडिमाओ पं०, ताओ णं चामरधारपडिमाओ चंदप्पहवइरवेरुलियनाणामणिकणगरयणविमलमहरिहतवणिज्जुज्जलविचित्तदंडाओ चिल्लिआओ संखंककुंददगरयममहितफेणपुंजसन्निकासाओ सुहुमरययदीहवालाओ धवलाओ चामराओ सलीलं ओहारेमाणीओ २ चिट्ठंति, तासि णं जिणपडिमाणं पुरओ दो दो नागपडिमाओ दो दो जक्खपडिमाओ २ भूअपडिमाओ २ कुंडधारगपडिमाओ विणतोणयाओ पायवडिआओ पंजलिउडाओ सन्निक्खित्ताओ चिट्ठंति सव्वरयणामईओ अच्छाओ सण्हाओ घट्ठाओ मट्ठाओ नीरयाओ निप्पंकाओ जावपडिरूवाओ, तासि णं जिण-

पडिमाणं पुरओ अट्ठसयं घंटाणं अट्ठसयं चंदणकलसाणं अट्ठसयं भिंगाराणं आयंसकाणं थालाणं पातीणं सुपतिट्ठगाणं मणुगुलिगाणं वातयरयाणं चित्ताणं रयणकरंडगाणं हयकंठाणं जाव उसभकंठगाणं पुप्फचंगेरीणं जाव लोमहत्थचंगेरीणं पुप्फपडलगाणं अट्ठसयं तेल्लसमुग्गाणं जावधूवकडुच्छुगाणं सन्निखित्तं चिट्ठति इतिश्रीजीवाभिगमसूत्रे, एतद्वृत्तिर्यथा–'तत्थ ण'मित्यादि, तत्र देवच्छन्दके अष्टशतम्–अष्टाधिकं शतं जिनप्रतिमानां जिनोत्सेधप्रमाणमात्राणां, पञ्चधनुःशतप्रमाणानामिति भावः, सन्निक्षिप्तं तिष्ठति, 'तासि णं जिणपडिमाण'मित्यादि, तासां जिनप्रतिमानामयमेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तपनीयमयानि हस्ततलपादतलानिअङ्कमया–अङ्करत्नमया अन्तः–मध्ये लोहिताक्षरत्नप्रतिसेका नखाः कनकमय्यो जङ्घाः कनकमयानि जानूनि कनकमया उरवः कनकमय्यो गात्रयष्टयः तपनीयमया नाभयः अरिष्ठरत्नमय्यो रोमराजयः तपनीयमयाश्चुचुकाः–स्तनाग्रभागाः तपनीयमयाः श्रीवत्साः शिलाप्रवालमया विद्रुममया ओष्ठाः स्फटिकमया दन्ताः तपनीयमय्यो जिह्वाः तपनीयमयानि तालुकानि कनकमय्यो नासिकाः अन्तोलोहिताक्षरत्नप्रतिसेकाः अङ्कमयान्यक्षीण्यन्तर्लोहिताक्षप्रतिसेकानि रिष्ठरत्नमय्योऽक्षिमध्यगतास्तारिकाः अरिष्ठरत्नमयानि अक्षिपत्राणि रिष्ठमय्यो भ्रुवः कनकमयाः कपोलाः कनकमयाः श्रवणाः कनकमय्यो ललाटपट्टिकाः वज्रमय्यः शीर्षघटिकाः तपनीयमय्यः केशान्तकेशभूमयः केशानामन्तभूमयः केशभूमयश्चेतिभावः रिष्ठमया उपरि मूर्धजाः–केशाः, तासां जिनप्रतिमानां पृष्ठत एकैका छत्रधरा प्रतिमा हेमरजतकुन्देन्दुप्रकाशं सकोरण्टमाल्यदामधवलमातपत्रं गृहीत्वा सलीलं धरन्ती तिष्ठति, 'तासि णं जिणपडिमाण'मित्यादि, तासां जिनप्रतिमानां प्रत्येकमुभयोः पार्श्वयोः द्वे द्वे चामरधरप्रतिमे प्रज्ञप्ते, "चंदप्पभवयरवेरुलिअनाणामणिकणगरयणखचितचित्तदंडाओ" इति चन्द्रप्रभः–चन्द्रकान्तो वज्रं वैडूर्यं च प्रतीते चन्द्रप्रभवज्रवैडूर्याणि रूपाणि च नाना-

मणिरत्नानि खचितानि येषु दण्डेषु ते तथा, एवंरूपाश्चित्रा-नानाप्रकारा दण्डा येषां तानि तथा, यत्रे स्त्रीत्वं प्राकृतत्वात् "सुहुमरयत-दीहवालाओ" इति सूक्ष्माः-श्लक्ष्णा रजतमया दीर्घा वाला येषां तानि तथा "संखंककुंददगरयरयममयमहिअफेणपुंजसन्निकासाओ धव-लाओ चामराओ" इति प्रतीतं, चामराणि गृहीत्वा सलीलं वीजयन्त्यस्तिष्ठन्ति, 'तासि णं'मित्यादि, तासां जिनप्रतिमानां पुरतो द्वे द्वे नागप्रतिमे द्वे द्वे यक्षप्रतिमे द्वे द्वे कुण्डधारप्रतिमे संनिक्षिप्ते तिष्ठतः, ताश्च सव्वरयणामईओ अच्छाओ इत्यादि प्राग्वत्, 'तत्थ णं'मित्यादि तस्मिन् देवच्छन्दके जिनप्रतिमानां पुरतोऽष्टशतं घण्टानां अष्टशतं चन्दनकलशानामष्टशतं भृङ्गाराणामष्टशतमादर्शानां अष्टशतं स्थालीनां अष्टशतं पात्रीणां अष्टशतं सुप्रतिष्ठानां अष्टशतं मनोगुलिकानां-पीठिकाविशेषरूपाणां अष्टशतं वातकरकाणां अष्टशतं चित्राणां रत्नकरण्डकानां अष्टशतं हयकण्ठानां अष्टशतं गजकण्ठनां अष्टशतं नरकण्ठानां अष्टशतं किन्नरकण्ठानां अष्टशतं किंपुरुषकण्ठानां अष्टशतं महोरगकण्ठानां अष्टशतं गन्धर्वकण्ठानां अष्टशतं वृषभकण्ठानामष्टशतं पुष्पचङ्गेरीणां अष्टशतं माल्यचङ्गे-रीणां अष्टशतं चूर्णचङ्गेरीणां अष्टशतं गन्धचङ्गेरीणां अष्टशतं वस्त्रचङ्गेरीणां अष्टशतमाभरणचङ्गेरीणां अष्टशतं लोमहस्तचङ्गेरीणां, लोमहस्तका-मयूरपिच्छपुञ्जनिकाः, अष्टशतं पुष्पपटलकानामष्टशतं माल्यपटलकानां, मुत्कलानि पुष्पाणि ग्रथितानि माल्यानि, अष्टशतं चूर्णपटलकानाम्, एवं गन्धवस्त्राभरणसिद्धार्थकलोमहस्तपटलकानामपि प्रत्येकं २ अष्टशतं द्रष्टव्यम्, अष्टशतं सिंहासनानाम-ष्टशतं छत्राणामष्टशतं चामराणामष्टशतं तैलसमुद्गकानामष्टशतं कोष्ठसमुद्गकानामष्टशतं चोयगसमुद्गकानामष्टशतं तगरसमुद्गकाना-मष्टशतमेलासमुद्गकानामष्टशतं हरितालसमुद्गकानामष्टशतं हिङ्गुलिकसमुद्गकानामष्टशतं मनःशिलासमुद्गकानामष्टशतमञ्जनसमुद्गकानां, सर्वाण्यप्येतानि तैलादीनि परमसुरभिगन्धोपेतानि द्रष्टव्यानि, अष्टशतं ध्वजानामित्यादि० श्रीजीवा० वृत्तौ। एवं विषराजसिद्धपुत्राः

कालमपि-प्रातः सायम्, अपिशब्दात् मध्याह्ने च, चैत्यानि-अर्हद्बिम्बलक्षणानि स्तवा-भक्तामराद्याः स्तुतयो-याः कायोत्सर्गपर्यन्तेषु दीयन्ते तत्परमः-तत्प्रधानः सन्, तथा जिनवराणां प्रतिमागृहं जिनवरप्रतिमागृहं तस्मिन्नुयुक्तः-कृतोद्यम इति। तथा-संवच्छरचाउम्मासिएसु अट्ठाहिआसु अ तिहीसु। सव्वायरेण लग्गइ जिनवरपूआतवगुणेसु ॥२४१॥ साहूण चेइआण य पडिणीअं तह अवण्णवायं च। जिणपवयणस्स अहिअं सव्वत्थामेण वारेइ ॥२४२॥ अनयोर्व्याख्या-संवत्सरचातुर्मासिकेष्वष्टाह्निकासु-चैत्रादियात्रासु, चो व्यवहितसंबन्धः, तिथिषु च-चतुर्दश्यादिषु, किं?-सर्वादरेण लगति, क्व?-'जिनवरपूजातपोगुणेषु' भगवदर्चने चतुर्थादिकरणे ज्ञानादिषु चेत्यर्थः ॥२४१॥ साहू० साधूनां चैत्यानां च प्रत्यनीकं क्षुद्रोपद्रवकारितया अवर्णवादिनं च-वैभाष्यकरणशीलं, किं बहुना?-जिनप्रवचनस्याहितं-शत्रुभूतं 'सव्वत्थामेणं'ति समस्तप्राणेन प्राणात्ययेनापि वारयति, तदुन्नतिकरणस्य महोदयहेतुत्वादिति ॥२४२॥ इतिश्रीउपदेशमालावृत्तौ ॥ एवमन्येष्वपि प्रकरणादिषु सुप्रतीतमेव, तथा-हेऊ चउविहे पं०, तं०-अत्थित्तं अत्थि सो हेऊ १ अत्थित्तं नत्थि सो हेऊ २ नत्थित्तं अत्थि सो हेऊ ३ नत्थित्तं नत्थि सो हेऊ ४ इति (३३८) श्रीस्थानाङ्गचतुर्थस्थानकतृतीयोद्देशकवचनात् साध्याविनाभूतः प्रमेयप्रमितौ कारणं हेतुरनुमानं भण्यते, अतः सिद्धान्तोक्तानुमानगम्यत्वमपि, अनुमानप्रयोगो यथा-अर्हत्प्रतिमा आराध्यत्वेनोपादेयाः, आराध्यविषयकज्ञानजनकत्वात्, यद्विषयकज्ञानजनकं तत्तत्त्वेनोपादेयं हेयं चेति सामान्यव्याप्तिबलाद्भावार्हद्विषयकज्ञानजनकत्वेनार्हत्प्रतिमा आराध्यत्वेन सिद्ध्यति, सिध्यति च हेयत्वेन तथाविधविषयकज्ञानजनिका चित्रलिखिता योषिदिति दृष्टान्तसिद्ध्यर्थं, तत्रागमोऽपि, यथा-"चित्तभित्तिं न निज्झाए, नारिं वा सुअलंकिअं। भक्खरंपिव दट्ठूण, दिट्ठिं पडिसमाहरे।।१॥"त्ति (३८९) श्रीदशवै०, एवमागमोक्तवचनेन प्रत्यक्षानुभवेन

यथोचितव्यापारनियुक्तनागादिप्रतिमापरिसेव्यमानाः चङ्गेर्यादिपूजोपकरणसमन्विताश्च जिनप्रतिमाः शाश्वतभावेन स्वत एवात्मनो जगत्पूज्यत्वं ख्यापयति, अन्यथा तथाविधचिह्नाद्युपेतत्वासंभवाद्, एवंविधव्यतिकरमाकर्ण्यापि ये जिनप्रतिमामाराध्यत्वेन नाङ्गीकुर्वन्ति तेषां परमक्लिष्टकर्मोदयिनां जात्यन्धानां प्रदीपशतमिवापरग्रन्थसम्मतिशतमप्यकिञ्चित्करमेव । किंच–प्रतिमात्वेन साम्येऽपि सर्वत्रापि जिनप्रतिमा नियमेन प्रभुत्वादिचिह्नसमन्विता एव, जिनप्रतिमानां पुरस्तान्नागादिमूर्त्तयस्तु सेवकभावमापन्ना एवेत्यत्र सम्यग्धिया पर्यालोच्यमाने सम्यग्दृशां जिनप्रतिमा आराध्यत्वेनैव ज्ञानगोचरीभवंतीति, न चैवंपरिवारोपेताः शाश्वतप्रतिमा एव भवन्ति, नान्या इतिवाच्यं, अष्टपदाद्रौ भरतकारितानामृषभादिवर्द्धमानान्तानां चतुर्विंशतेरपि जिनप्रतिमानां तथापरिवारोपेतत्वात्, 'जीवाभिगमोक्तपरिवारयुक्ता' इति वचनात्, किंच–देवलोकादावपि "जेणेव देवच्छंदए" इत्यागमवचनाज्जिनप्रतिमा एव शाश्वतभावेन देवशब्दवाच्याः सन्ति, न तथाऽन्यतीर्थिकाभिमतहरिहरादिदेवमूर्त्तयोऽपि देवशब्दवाच्याः, तेषां देवानामनैयत्यात्, ननु तर्हि तेषां मिथ्यादृशां देवानां देवत्वेन श्रद्धानं किंविषयकमिति चेदुच्यते, गुरुद्वारा देवत्वेन श्रद्धानं मिथ्यादृशां, न पुनः साक्षात्, तत्कथमितिचेच्छृणु, तेषां देवानां गुरवस्तु मनुष्यलोकवर्त्तिनो यमदग्नितापसादयः, तैश्च यो देवत्वेनाभ्युपगतः स एव विपर्यस्तमतीनां तेषां देवानामपीति गुरुद्वारा देवश्रद्धानं, न पुनस्तदीयाः शाश्वतमूर्त्तयोऽपि देवलक्षणोपेता नियताः श्रद्धीयन्ते तैरिति स्वयमेव पर्यालोच्यमिति । तथा श्रीसुधर्मस्वामिनेव श्रीमहावीरदीक्षितेन धर्मदासगणिना कृतायां नमस्कारवदाबालाबलादिप्रतीतायां साध्वादीनां चतुर्णामप्यध्ययनार्हायां श्रीउपदेशमालायामपि जिनप्रतिमानामाराधनं स्फुटमेव, तथाहि–"वंदइ उभओकालंपि चेइआइं थयथुईपरमो । जिणवरपडिमावरधूवपुप्फगंधच्चणुज्जुत्तो २२९ ॥" (२३०) अस्या व्याख्या–स श्रावको वन्दते उभय-

कालमपि-प्रातः सायम्, अपिशब्दात् मध्याह्ने च, चैत्यानि-अर्हद्विम्बलक्षणानि स्तवा-भक्तामराद्याः स्तुतयो-याः कायोत्सर्ग-पर्यन्तेषु दीयन्ते तत्परमः-तत्प्रधानः सन्, तथा जिनवराणां प्रतिमागृहं जिनवरप्रतिमागृहं तस्मिंश्चयुक्तः-कृतोद्यम इति। तथा-संवच्छरचाउम्मासिएसु अट्ठाहिआसु अ तिहीसु। सव्वायरेण लग्गइ जिनवरपूआतवगुणेसु ॥२४१॥ साहूण चेइआण य पडिणीअं तह अवण्णवायं च। जिणपवयणस्स अहिअं सव्वत्थामेण वारेइ ॥२४२॥ अनयोर्व्याख्या-संवत्सरचातुर्मासिकेष्वष्टाह्निकासु-चैत्रादियात्रासु, चो व्यवहितसंबन्धः, तिथिषु च-चतुर्दश्यादिषु, किं?-सर्वादरेण लगति, क?-'जिनवरपूजातपोगुणेषु' भगवदर्चने चतुर्थादिकरणे ज्ञानादिषु चेत्यर्थः ॥२४१॥ साहू० साधूनां चैत्यानां च प्रत्यनीकं क्षुद्रोपद्रवकारितया अवर्णवादिनं च-वैभाष्यकरणशीलं, किं बहुना?-जिनप्रवचनस्याहितं-शत्रुभूतं 'सव्वत्थामेणं'ति समस्तप्राणेन प्राणात्ययेनापि वारयति, तदुन्नतिकरणस्य महोदयहेतुत्वादिति ॥२४२॥ इतिश्रीउपदेशमालावृत्तौ ॥ एवमन्येष्वपि प्रकरणादिषु सुप्रतीतमेव, तथा-हेऊ चउविहे पं०, तं०-अत्थित्तं अत्थि सो हेऊ १ अत्थित्तं नत्थि सो हेऊ २ नत्थित्तं अत्थि सो हेऊ ३ नत्थित्तं नत्थि सो हेऊ ४ इति (३३८) श्रीस्थानाङ्गचतुर्थस्थानकतृतीयोद्देशकवचनात् साध्याविनाभूतः प्रमेयप्रमितौ कारणं हेतुरनुमानं भण्यते, अतः सिद्धान्तोक्तानुमानगम्यत्वमपि, अनुमानप्रयोगो यथा-अर्हत्प्रतिमा आराध्यत्वेनोपादेयाः, आराध्यविषयकज्ञानजनकत्वात्, यद्विषयकज्ञानजनकं तत्तथात्वेनोपादेयं हेयं चेति सामान्यव्याप्तिबलाद्भावार्हद्विषयकज्ञानजनकत्वेनार्हत्प्रतिमा आराध्यत्वेन सिद्ध्यति, सिध्यति च हेयत्वेन तथाविधविषयकज्ञानजनिका चित्रलिखिता योषिदिति दृष्टान्तसिद्ध्यर्थं, तत्रागमोऽपि, यथा-"चित्तभित्तिं न निज्झाए, नारिं वा सुअलंकिअं। भक्खरंपिव दट्ठूण, दिट्ठिं पडिसमाहरे ॥१॥"त्ति (३८९) श्रीदशवै०, एवमागमोक्तवचनेन प्रत्यक्षानुभवेन

वा यथा नारीरूपदर्शनात् नारीविषयकं ज्ञानं भवति तथाऽर्हद्विम्बदर्शनादर्हद्विषयकं ज्ञानं भवतीति, किंच-लुम्पकेन यत्स्थापना-जिनं परित्यज्य नामजिनोऽभ्युपगतस्तदत्यन्तमसंगतं, यतो नामापेक्षया स्थापनाया विशिष्टफलजनकत्वेनाधिक्याद्, यदागमः- "तओ इंदा पं०, तं०-नामिंदे १ ठवणिंदे २ दव्विंदे" त्ति स्थानाङ्गे त्रिस्थानकप्रथमोद्देशकादिसूत्रं (११९) एतद्वृत्तिदेशो यथा-ननु नामस्थापनाद्रव्येष्विन्द्राभिधानं विवक्षितभावशून्यत्वाद्व्यत्वं च समानं वर्त्तते ततश्च क एषां विशेषः?, आह च-"अभिहाणं दव्वत्तं तदत्थसुन्नत्तणं च तुल्लाइं। को भाववज्जिआणं नामाईणं पइविसेसो? ॥१॥" त्ति, अत्रोच्यते-यथा हि स्थापनेन्द्रे खल्विन्द्राकारो लक्ष्यते तथा कर्तुः सद्भूतेन्द्राभिप्रायो भवति तथा द्रष्टुस्तदाकारदर्शनादिन्द्रप्रत्ययः तथा प्रणतिकृतधियश्च फलार्थिनः स्तोतुं प्रवर्त्तन्ते फलं च प्राप्नुवन्ति केचिद्देवतानुग्रहात् न तथा नामद्रव्येन्द्रयोरिति, तस्मात्स्थापनायास्तावदित्थं भेद इति, आह च-"आगारोऽभिप्पाओ बुद्धी किरिआ फलं च पाएण। जह दीसइ ठवणिंदे न तहा नामिंद(नामे न)दव्विंदे ॥२॥" त्ति, यथा च द्रव्येन्द्रो भावेन्द्रकारणतां प्रतिपद्यते तथोपयोगापेक्षायामपि तदुपयोगतामासादयत्यवाप्तवांश्च न तथा नामस्थापनेन्द्रावित्ययं विशेष इति इतिश्रीस्था० वृ० । यद्वा जिनप्रतिमा जिनवदाराध्या जिनाराधनजन्यैकफलजनकत्वाद्, दृष्टान्तस्तु 'नमो बंभीए' त्ति प्रवचनवचनात्सिद्धं द्रव्यश्रुतं पुस्तकादि, न च जिनाराधनजन्यैकफलजनकत्वमिति हेतुरप्रसिद्धः "हिआए सुहाए खमाए निस्सेसाए आणुगामिअत्ताए भविस्सति" श्रीराजप्रश्नीयोपाङ्गवचनेन सिद्धान्तसिद्धत्वात्, तदभावादिसाध्यसाधकहेत्वन्तराभावाच्च। किंच-"दाणं च माहणाणं वेआ कासीअ पुच्छ निव्वाणं। कुंडा थूभ जिणहरे कविलो भरहस्स दिक्खा य ॥१॥ निव्वाणं चिइगागिइ जिणस्स इक्खाग सेसगाणं तु। सकहा थूभ जिणहरे जायग तेणाहिअग्गिन्ति ॥२॥ थूभसय भाऊआणं चउवीसं चेव जिणहरे कासी। सव्वजिणाणं

पडिमा वण्णपमाणेहि निअएहि ॥१॥" न्ति इत्याद्युपोद्घातप्रवचनवचनाद्भरतकारितानां जिनप्रतिमानां सिद्धौ तज्जन्यं फलमपि महानुभावमेव सिद्ध्यति, महानुभावपुरुषप्रवृत्तिविषयत्वाद्यनुमेयत्वात्, तदनुमानं यथा–जिनभवनादिनिर्म्मापणमैहिकपारत्रिकापायपराकरणपूर्वकाभिमतसंपत्संपादकं बहुवित्तव्ययायासान्यतरसाध्यत्वे सति धर्मबुद्धिपूर्वकमहापुरुषप्रवृत्तिविषयत्वात् तीर्थकृदुपात्तचारित्रवद्, अत्रार्थे सिद्धान्तोऽपि यथा "तिहिं ठाणेहिं जीवा अप्पाउत्ताए कम्मं पकरेंति, तं०–पाणे अइवाइत्ता भवति मुसं वतित्ता भवति तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेत्ता भवति"त्ति। श्रीस्थानाङ्गे त्रिस्थानके प्रथमोद्देशके (१२८) एतद्वृत्त्येकदेशो यथा–तथा च गृहिणं प्रति जिनभवनकारणफलमुक्तम्–'एतदिह भावयज्ञः सद्गृहिणो जन्मफलमिदं परमम्। अभ्युदयाव्युच्छित्त्या नियमादपवर्गबीज ॥१॥"मिति श्रीस्थानाङ्गवृत्तौ, तथा शाश्वताशाश्वतानि तीर्थान्याचार्यादींश्च प्रत्यभिमुखगमनसंपूजनादिना सम्यक्त्वनैर्मल्यमप्युक्तं, तथाहि–तित्थयराणं भगवओ पवयण पावयणि अइसइड्ढीणं। अहिगमणनमणदरिसणकित्तणसंपूअणा थुणणा ॥१॥ जम्माभिसेअनिक्खमणचरणनाणुप्पयाण निव्वाणे। दिअलोअभवणमंदरनंदीसरभोमनगरेसु ॥२॥ अट्ठावयमुज्जिंते गयग्गपयए अ धम्मचक्के अ। पासरहावत्तणयं चमरुप्पायं च वंदामि ॥३॥ (३३३–५) इतिश्रीआचाराङ्गनिर्युक्तौ, तद्वृत्तिर्यथा "दर्शनभावनार्थमाह–'तित्थय' गाहा, तीर्थकृतां भगवतां प्रवचनस्य–द्वादशाङ्गस्य गणिपिटकस्य तथा प्रावचनिनाम्–आचार्यादीनां युगप्रधानानां तथाऽतिशयिनाम्–ऋद्धिमतां केवलिमनःपर्यायावधिमचतुर्दशपूर्वविदां तथाऽऽमर्षौषध्यादिप्राप्तर्द्धीनां यदभिमुखगमनं गत्वा च नमनं नत्वा च दर्शनं तथा गुणोत्कीर्त्तनं संपूजनं गन्धादिना स्तोत्रैः स्तवनमित्यादिका दर्शनभावना, अनया हि दर्शनभावनया नवरं भाव्यमानया दर्शनशुद्धिर्भवतीति ॥ किंच–"जम्माभिसेअ" गाहा "अट्ठावय" गाहा,

श्रीजिन-
भवनादि-
सिद्धिः

तीर्थकृतां जन्मभूमिषु तथा निष्क्रमणचरणज्ञानोत्पत्तिनिर्व्वाणभूमिषु तथा देवलोकभवनेषु मन्दरेषु नन्दीश्वरद्वीपादौ भौमेषु च-पातालभवनेषु यानि शाश्वतानि चैत्यानि तानि वन्देऽहमिति द्वितीयगाथान्ते क्रिया, इत्येवमष्टापदे तथा श्रीमदुज्जयन्तगिरौ गजाग्रपदे दशार्णकूटवर्त्तिनि तथा तक्षशिलायां धर्मचक्रे तथा अहिच्छत्रायां श्रीपार्श्वनाथस्य धरणेन्द्रमहिमस्थाने, एवं रथावर्त्तपर्व्वते वैरस्वामिना यत्र पादपोपगमनं कृतं, यत्र च श्रीवर्द्धमानस्वामिनमाश्रित्य चमरेन्द्रेणोत्पतनं कृतम्, एतेषु यथासंभवमभिगमनवन्दनपूजनोत्कीर्त्तनादिकाः क्रियाः कुर्वतो दर्शनशुद्धिर्भवतीति इतिश्री आचा० चू० । तथा "अरहंत १ सिद्ध २ चेइअ ३ गुरू ४ सुअधम्म ५ साहुवग्गे अ ६। आयरिअ ७ उवज्झाया ८ पवयणे ९ सव्वसंघे अ १० ॥१॥ एएसु भत्तिजुत्ता पूअंता अहारिहं अणन्नमणा। सम्मत्तमणुसरंता परित्तसंसारिआ भणिआ ॥२॥ इति मरणसमाधिप्रकीर्णके (२७-३४५*) इत्याद्यनेकस्थानेषु जिनप्रतिमाः स्वयमेव बोध्या इति गाथार्थः ॥१४८॥ अथ केन श्रावकेण प्रतिमा कारिता केन साधुना प्रतिष्ठिता केन साध्वादिना वन्दिता स्तुता चेति वचोभिर्मुग्धजनभ्रान्त्युत्पादनार्थं कश्चिदज्ञो वाचाटो ब्रूते तदप्राकृतये गाथायुगममाह—

**अह भरहचक्कवट्टिप्पमुहेहिं कराविआ य जिणपडिमा। सिरिनाभसूरिपमुहप्पइट्ठिआ पुण्णचुण्णेणं ॥१४९॥**
**गोअमपमुहमुणीहिं थुणिआ तह वंदिआ य भत्तीए। सुत्तत्थो खलु पढमो इच्चाइअ भगवईभणिअं ॥१५०॥**

अथेति प्रकारान्तरद्योतने मङ्गलवाची, भरतचक्रवर्त्तिप्रमुखैः कारिता जिनप्रतिमा, यदागमः—"निव्वाणं चिइगागिइ जिणस्स इक्खाग सेसगाणं तु। सकहा थूभ जिणहरे जायग तेणाहिअग्गि ॥१॥"त्ति श्रीआव० नि० "थूभसय भाऊणं चउवीसं चेव जिणहरे कासी। सव्वजिणाणं पडिमा वण्णपमाणेहिं निअएहिं ॥२॥ श्रीआव० भाष्ये। आदिशब्दात्सगरचक्रवर्त्तिसुतैस्तादृग्जिनभव-

नादिनिर्मापणेच्छयाऽष्टापदसदृगगिरिमन्वेषयद्भिस्तदलाभादष्टापदप्रासादरक्षापि महानिर्जराहेतुरितिकृत्वा तत्परितः परिखानिर्मापणेन तद्रक्षा कृता, यदागमः—"सगरोवि सागरंतं, भरहवासं नरीसरो। इस्सरिअं केवलं हिचा, दया परिनिव्वुडो ॥१॥" त्ति (५८२*) श्रीउत्तराध्ययने,तट्टीकायां तच्चरित्रे—अजिअरायावि तित्थप्पवत्तणसमए ठवेऊण रज्जे सगरं निक्खंतो,सगरोवि उप्पण्णचउद्दसरयणो साहिअछक्खंडभरहो पालेइ रज्जं, जाया य तस्स सूराणं वीराणं पुत्ताणं सट्ठिसहस्सा, तेसिं जेट्ठो जण्हुकुमारो, अण्णया तोसिओ जण्हुकुमारेण कहंचि सगरो, भणिओ तेण जण्हुकुमारो—वरसु वरं, तेण भणिअं—ताय! अत्थि मम अभिलासो जइ तुब्भेहिं अणुण्णाओ चउदसरयणसमेओ भाइबंधुसंजुओ वसुमइं परिब्भमामि, पडिवण्णं राइणा, सव्वबलेण य पसत्थमुहुत्ते निग्गओ सव्वसहोअरसमेओ, परिब्भमंतो अणेगे जणवए पिच्छंतो गामनगरागरसरिगिरिसरकाणणाई पत्तो अट्ठावयगिरिं, ठिच्चा सिविरं निवेसेऊण आरूढो उवरिं, दिट्ठं भरहनरिंदकारिअं मणिकणगरयणकणगमयं चउवीसजिणपडिमाहिट्ठिअं थूभसयसंगय जिणाययणं, वंदिऊण य जिणिंदे पुच्छिओ मंती—केणेयं सुकयकम्मुणा अइसयरमणीअं कारिअं जिणभवणं?, कहिओ तेण भरहवइअरो, तं सोऊण भणिअं जण्हुकुमारेण—निरूवेह अण्णं अट्ठावयसरिसं सेलं जेण तत्थ चेइअहरं कारवेमो, निउत्तपुरिसेहि अ समंतओ निरूविऊण साहिअं, जहा नत्थि देव! एरिसो अण्णो गिरी, तेण भणिअं—जइ एवं ता करेमो एअस्सेव रक्खं, जओ होहिंति कालेण लुद्धा सढा य नरा, अहिनयकारावणाओ अ पुव्वकयपरिपालणं वरं, तओ दंडरयणं गिण्हित्ता समंतओ महीहरस्स पासेसु तलागो खणिओ, तं च दंडरयणं सहस्सं जोअणाणं भिंदिऊण पत्तं नागभवणेसु, भिन्नाइं ताइं, तं च अचक्खुअं पिच्छंता भीआ नागकुमारा सरणं मग्गमाणा गया जलणप्पहनागरायस्स समीवं, साहिओ अ वइअरो, सोऽवि संभंतो उट्ठिओ, ओहिणा आभोएत्ता आसुरुत्तो समागओ

सगरसुअसगासं, भणिअं च-भो भो किं तुब्भेहिं दंडरयणेण महिं भिंदिऊण कओ भुवणभिंदणेण उवद्दवो नायलोकस्स ?, ता अप्पवहाय तुब्भेहिं कयमेअं, जओ-अप्पवहाए नूणं होइ बलं उत्तणाण भुवणंमि। निअपक्खबलेणं चिअ पडइ पयंगो पईवंमि॥१॥ तओ तस्स उवसमणनिमित्तं भणिअं जण्हुणा-भो नागराय! करेसु पसायं, उवसंहरसु संरंभं, खमसु अम्ह अवराहमेअं, न अम्हेहिं तुम्होवद्दवनिमित्तमेअं कयं, अट्ठावयचेइअरक्खट्ठा फरिहा कया एसत्ति, न पुणो एवं काहामो, उवसंतकोवो गओ सठाणं जलण प्पहो, तंमि गए भणिअं जण्हुकुमारेणेत्यादि" तथा महापद्मचक्रवर्त्तिनाऽपि कोटिशः प्रासादा निर्मापिताः, यदागमः-"चइत्ता भारहं वासं, चक्कवट्टी महिड्ढिओ। चइत्ता उत्तमे भोए, महापउमे तवं चरे ॥१॥"त्ति श्रीउत्त० (७८५*) अस्या वृत्तौ-तओ सोहणंमि दिणे महाविभूईए अ कओ महापउमस्स रज्जाभिसेओ, पव्व इ ोअ सुव्वयसूरिसमीवे पउमुत्तरो सविण्हुकुमारो,जाओ अ महापउमो विक्खायसासणो चक्कवट्टित्ति, ते अ रहा इत्तिअं कालं तत्थेव ठिआ, तओ महापउमचक्कवट्टिणा भमाडिओ अ नयरीए जणणीसंतिओ जिणिंदरहो, कया उन्नती जिणपवयणस्स, तप्पभिर्तिं च धम्मुज्जयमई बहुगो लोगो पवन्नो जिणसासणं, तेण य महापउमेण चक्कवट्टिणा सव्वंमि भरहखित्ते गामागरनगरनगुज्जाणाईसु काराविआइं अणेगकोडिलक्खप्पमाणाइं जिणभवणाइं"ति श्रीउत्त०वृत्तौ॥ तथा जिनप्रतिमा केन कृता केन प्रतिष्ठिता केन च पूजितेत्यत्र सामुदायिकनिदर्शने उदायनराजव्यतिकरः प्रतीत एव, यदागमः-"सोवीररायवसहो, चइत्ताण मुणी चरे। उदायणो पव्वइओ, पत्तो गइमणुत्तरं ॥१॥ इत्युत्तरा० (४९४*) अस्या व्याख्या-तथा सौवीरेषु राजवृषभस्तत्कालभाविनृपतिप्रधानत्वात् सौवीरराजवृषभः 'चइत्त'त्तित्यक्त्वा राज्यमितिशेषः, मुनिः-त्रैकाल्यावस्थावेदी सन्नचारीत्, कोऽसौ ?-'उदायण'त्ति उदायननामा प्रव्रजितः, चरित्वा च किमित्याह-प्राप्तो गतिमनुत्तरां, तथाहि-उदायननामा

चेटकराजसुताप्रभावतीपतिः कुमारनन्दीसुवर्णकारजीवहासाप्रहासापतिविद्युन्मालिसुरकृतदेवाधिदेवप्रतिमापूजाकृच्चरमराजर्षिश्च प्रव्रजितः, प्रव्रज्य च प्राप्तो गतिमनुत्तरामितिभावः, तथा एतद्वृत्तिगतकथानकविस्तारस्त्वेवं—तेणं कालेणं तेणं समएणं सिंधुसोवीरेसु जणवएसु वीइभए नामं नयरे होत्था, उदायणे नामं राया, पभावती से देवी, तीसे जेट्ठे पुत्ते अभीइनाम जुवराया होत्था, निअए भाइणिज्जे केसीनामं होत्था. से णं उदायणे राया सिंधुसोवीरपामोक्खाणं सोलसण्हं जणवयाणं वीइभयपामुक्खाणं तिण्हं तेवट्ठाणं नगरसयाणं महसेणपामोक्खाणं दसण्हं रायाणं बद्धमउडाणं विइण्णसेअच्छत्तचामरवालवीअणाणं अण्णेसिं च राईसरतलवरपभिईणं आहेवच्चं कुणमाणे विहरति, एवं च ताव एअं, इओ अ तेणं कालेणं तेणं समएणं चंपाए नगरीए कुमारनंदीनामं सुवण्णयारो इत्थीलोलो परिवसइ. सो जत्थ सुरूवं दारिअं पासइ सुणेइ वा तत्थ पंचसया सुवण्णस्स दाऊण तं परिणेइ, एवं च तेण पंचसया पिंडिआ, ताहे सो ईसालुओ एक्कखंभं पासायं करेत्ता ताहिं समं ललइ, तस्स य मित्तो नाइलो नाम समणोवासओ, अन्नया पंचसेलदीववत्थव्वाओ वाणमंतरीओ सुरवइनिओएणं नंदीसरवरदीवं जत्ताए पत्थिआओ, ताणं च भत्ता विज्जुमालीनाम पंचसेलाहिवई सो चुओ, ताओ चिंतंति—किंपि वुग्गाहेमो जो अम्हं भत्ता भवइ, नवरं वच्चंतीहिं चंपाए कुमारनंदी पंचमहिलासयपरिवारो उवललंतो दिट्ठो, ताहिं चिंतिअं—एस इत्थीलोलो, एअं वुग्गाहेमो, पच्चक्खीभूआओ, ताहे सो भणइ काओ तुब्भे?, ताओ भणंति—अम्हे हासप्पहासा-भिहाणाओ देवयाओ, सो मुच्छिओ ताओ पत्थेइ, ताओ भणंति—जइ अम्हेहिं कज्जं तो पंचसेलगदीवं एज्जाहित्ति भणिऊण उप्पइऊण गयाओ, सो तासु मुच्छिओ राउले सुवण्णं दाऊण पडहगं णीणेति, कुमारनंदिं जो पंचसेलगं नेइ तस्स धणकोडिं सो [illegible] पडहो वारिओ, पवहणं कारियं, पत्थयणस्स य भरियं, थेरो तं दव्वं पुत्ताणं दाऊण कुमारनंदिणा सह जाणवत्तेण पट्ठिओ,

जाहे दूरं समुद्दे गओ ताहे थेरेण भण्णइ-किंचि पेच्छसि ?, सो भणइ-किंपि कालयं दीसइ, थेरो भणइ-एस वडो समुद्दकूले पव्वयपाए जाओ, एअस्स हेट्ठेणं एअं पवहणं जाहित्ति, तो तुम अमूढो वडे विलग्गेज्जासि, ताहे पंचसेलयाओ भारुंडपक्खी एहिंति, तेसिं जुगलस्स तिण्णि पाया, तओ तेसु सुत्तेसु मज्झिल्ले पाए सुविलग्गो होज्जासि पडेणं अप्पाणं बंधिउ, तो ते पचसेलगं णेहिंति, अह तं वड न विलग्गसि तो एअं वहणं वलयामुहे पविसिहिति, तत्थ विणस्सिहिसि, एवं सो विलग्गो, नीओ पक्खीहिं, ताहे ताहिं वाणमंतरीहिं दिट्ठो, रिद्धी अ से दाइआ, सो पगूहिओ, ताहिं भणिओ-न एएण सरीरेण भुंजामो, किंचि जलणप्पवेसमणाइ करेहि, जहा पंचसेलाहिवई होज्जासित्ति, तो कहं जामि ?, ताहे करयलपुडेण नीओ, सउज्जाणे छड्डिओ, ताहे लोगो आगंतूण पुच्छेइ, किं तुमे तत्थच्छेरं दिट्ठं ?, सो भणइ-दिट्ठं सुअमणुभूअं जं वित्तं पंचसेलए दीवे। पसियच्छि चंदवयणे, हाहा हासे पहासे य ॥१॥ आढत्तं च तेण तदभिसंधिणा जलणासेवणं, वारिओ अ मित्तेण-भो मित्त! न जुत्त तुह काउरिसजणोचिअं चेट्ठिअं, ता महाणुभाव!-दुलहं माणुसजम्मं मा हारसु तुच्छभोगसुहहेउं। वेरुलिअमणीमुल्लेण कोइ किं किणइ कायमणिं ? ॥ १ ॥ अन्नं च-जइवि तुम भोगत्थी तहावि सद्धम्माणुट्ठाण चेव करेसु, जओ-धणओ धणत्थिआणं कामट्ठीणं च सव्वकामकरो। सग्गापवग्गसंगमहेऊ जिणदेसिओ धम्मो ॥२॥ एवमाइअणुसासणेण्ण वारिज्जंतोवि मित्तेण इंगिणीमरणेण मओ पंचसेलगाहिवई जाओ, सड्ढस्स निव्वेओ जाओ, भोगाण कज्जे किं किलिस्सइत्ति, अम्हे जाणंता कीस अच्छामोत्ति पव्वइओ, कालं काऊणं अच्चुए उववण्णो, ओहिणा त पिच्छइ। अण्णया नंदीसरवरजत्ताए पलायंतस्स पडहओ गलए ओलइओ, ताहे वायतो नदीसरं गओ, सड्ढो आगओ तं पिच्छइ, सो तस्स तेअं असहमाणो पलायइ, सो तेअं साहरित्ता भणइ-भो ममं जाणासि ?, सो भणइ-को सक्काइए देवे न याणाइ ?, ताहे तं सावगरूवं दसेइ,

जाणाविओ, ताहे संवेगमावण्णो भणेइ-संदिसह किमिआणिं करेमि ?, भणइ-वद्धमाणसामिस्स पडिमं करेहि, तओ ते सम्मत्त-बीअं होहित्ति, भणियं च-जो कारवेइ पडिमं जिणाण जिअरागदोसमोहाणं। सो पावइ अण्णभवे सुहजणणं धम्मवररयणं ॥ १ ॥ अण्णं च-"दारिद्दं दोहग्गं कुजाइकुसरीरकुमइकुगईओ। अवमाणरोअसोआ न हुंति जिणबिंबकारीणं ॥ २ ॥ ताहे महाहिमवंताओ गोसीसचंदणदारुं छेत्तूण तत्थ पडिमं निव्वत्तेऊण कट्ठसंपुडे छुभइ, पवहणं च पासइ समुद्दमज्झे उप्पाएण छम्मासे भमंतं, ताहे अणेण तं उप्पायं उवसामिउं संजत्तिआण सा खोडी दिण्णा, भणिआ य-देवाहिदेवस्स एत्थ पडिमा चिट्ठइ, ता तस्स नामेण विहाडेअव्वा खोडी, एवंति पडिवज्जिअ गया वणिआ, उत्तिण्णा समुद्दं, पत्ता वीइभयं, तत्थ उदायणो राया तावसभत्तो, दंसिआ खोडी, तस्स साहियं सुरवयणं, मिलिओ सरक्खमाहणाई पभूओ लोओ, रुद्दगोविंदाइनामेण वाहिंति परसुं, तहाहि-केइ भणंति-बंभो चेव देवाहिदेवो, जओ सो चउम्मुहो सव्वजयसिद्धिकारओ वेआणं च पणेआ, अण्णे विण्हुपहाणोत्ति भणंति, जओ सो चेव सव्वगओ लोगोवद्दवकारए अ दाणवे विणासेइ, संहारकाले अ उअरगयं जयं धारेइ, अवरे महेसरो उत्तमदेवोत्ति भणंति, जओ सो चेव सिट्ठिसंहारकारओ अजोणिसंभवो तस्स चेव भागा बंभविण्हू, एमाइविगप्पणाहिं वाहिज्जमाणो उप्फिडइ परसू, एत्थंतरंमि आगया तत्थ उदायणस्स रण्णो महादेवी चेडगरायधूआ समणोवासिआ पभावती, तीए काऊण पूअं भणियं-"राय-रागदोसमोहो सव्वण्णू अट्ठ पाडिहेरजुओ। देवाहिदेवरूवो अरिहा मे दंसणं देउ ॥ १ ॥ वाहाविओ परसू, पडंतस्सवि घायस्स विघडिआ खोडी, जाव दिट्ठा सव्वंगपडिपुण्णा अमिलाणमल्लदामालंकिआ वद्धमाणसामिपडिमा, अईव आणंदिआ पभावती, जाया जिणधम्मप्पभावणा, पढियं च तीए-सव्वण्णु सोमदंसण! अपुणब्भव! भवियजणमणाणंद!। जगचिंतामणि! जगगुरू

जय जय जिणवीर ! अकलंक ॥१॥ अंतेउरे अ चेइअघरं कारिअं, पंहावई ण्हाया तेसंझं पूएति, अण्णया देवी नच्चेइ, राया वीणं वाएइ, सो देवीए सीसं न पिच्छइ, अद्धिई से जाया, वीणावायणं हत्थाओ भट्ठं, देवी रुट्ठा भणइ-किं दुट्ठु नच्चिअं ?, निब्बंधे से सिट्ठं, सा भणइ-किं मम ?, सुचिरं सावयधम्मो पालिओ, अण्णया देवी ण्हाया चेडीं भणइ-पोत्ताइं आणेहित्ति, ताहे रत्तगाणि आणिआणि, रुट्ठाए अद्दाएण आहया, जिणघरं पविसंतीए रत्तगाणि देसित्ति, मया चेडी, ताहे चिंतेइ-मए वयं खंडिअं, ता किं जीविएणंति ?, रायाणं पुच्छइ-भत्तं पच्चक्खामि, निब्बंधे जइ परं बोहिसि, पडिसुयं, भत्तपच्चक्खाणेण मया देवी देवलोगं गया, जिणपडिमं देवदत्ता दासचेडी खुज्जा सुस्सूसइ, देवो उदायणं संबोहेइ, न संबुज्झइ, सो तावसभत्तो, ताहे देवो तावसरूवं काऊण अमिअफलाणि गहाय आगओ, रण्णा आसाइआणि, पुच्छिओ-कहिं एआणि फलाणि ?, भणइ-नगरअदूरसामंते आसमो तहिं, तेण समं गओ, भीमायारेहिं तावसेहिं हंतुं पारद्धो, नासंतो वणसंडे साहवो पेच्छइ, तेसिं सरणमल्लीणे, मा भीयसुत्ति समासासिओ तेहिं, निअत्ता ते तावसा, अणुसासिओ अ साहूहिं, 'धम्मो चेवेत्थ सत्ताणं, सरणं भवसायरे। देवं धम्मं गुरुं चेव, धम्मत्थी अ परिक्खए ॥१॥ दसअट्ठदोसरहिओ देवो धम्मो उ निउणदयसहिओ । सुगुरू अ बंभयारी आरंभपरिग्गहा विरओ ॥२॥ एव-माइउवएसेण पडिबुद्धो, पडिवण्णो जिणधम्मं, देवो अत्ताणं दरिसेइ, धम्मे अ थिरीकाऊण गओ सुरो जाव अत्थाणे चेव अत्ताणं पेच्छइ, एवं सड्ढो जाओ । इओ अ गंधारओ सावओ, सव्वाओ जिणजम्माइभूमीओ वंदित्ता वेअड्ढे कणगपडिमाओ सुणेत्ता उववासेण ठिओ, जइ वा मओ दिट्ठाओ वा, देवयाए दंसिआओ, तुट्ठा य सव्वकामिआण गुलिआण सयं देइ, तओ निअत्तो सुणेइ-वीइभए जिणपडिमं गोसीसचंदणमइअं, तं वंदओ एइ, वंदइ, तत्थ पडिभग्गो, देवदत्ताए पडिअरिओ, तुट्ठेण य से ताओ गुलि-

आओ दिण्णाओ, सो पव्वइओ। अण्णया गुलिअमेगं खाइ-मे कणयसरिसो वण्णो होउत्ति, तओ जाया परमरूवा, घंतकणगसरिसवण्णा जाया, सुवण्णगुलिअत्ति नामं तीए जायं, पुणो सा चिंतेइ-भोगे भुंजामि, एस राया ताव मम पिआ, अण्णे अ गोहा, ताहे पज्जोयं रोएइ, तं मणसीकाउं गुलिअं खाइ, तस्स देवयाए कहिअं-एरिसी रूववईत्ति, तेण सुवण्णगुलिआए दूओ पेसिओ, तीए भणियं-पेच्छामि ताव तुमं, सोऽनलगिरिणा रत्तिं आगओ,दिट्ठो, तीए अभिरुइओ अ, सा भणइ-जइ पडिमं नेसि तो जामि, ताहे पडिमा नत्थि तट्ठाणट्ठवणजोग्गत्ति, रत्तिं वसिऊण पडिगओ, अण्णं जिणपडिमरूवं काऊण आगओ, तत्थ ठाणे ठवित्ता जीवंतसामिं सुवण्णगुलियं च गहाय उज्जेणिं गओ, तत्थऽनलगिरिणा मुत्तपुरिसाणि मुक्काणि, तेण गंधेण हत्थी उम्मत्ता, तं च दिसं गंधो एइ जाव पलोइअं, नलगिरिस्स दिट्ठं पयं, किं निमित्तमागउत्ति जाव चेडीन दीसइ, राया भणइ-चेडी नीया नाम,पडिमं पलोएह, नवरं अच्छइत्ति निवेइयं, तओ राया अच्चणवेलाए आगओ,पेच्छइ पडिमापुप्फाणि मिलाणाणि,तओ निव्वण्णंतेण णायं पडिरूवगंति, हरिआ पडिमा, तओ तेण पज्जोअणस्स दूओ विसज्जिओ,न मम चेडीए कज्जं, पडिमं विसज्जेहि। इत्यादि यावच्छ्रीमहावीरसमीपे प्रव्रज्य जाव दुक्खप्पहीणे'त्ति पर्यन्तं श्रीउत्तराध्ययनटीकागतं कथानकं बोध्यमत्र 'जो कारवेइ पडिमं जिणाणमित्यादि फलप्रतिपादकवचनपुरस्सरमच्युतदेवलोकोत्पन्नदेववचनाद्विद्युन्मालिदेवेन निजबोधिहेतवे श्रीमहावीरप्रतिमा कृता, प्रभावत्या राज्या गन्धारश्रावकेण च पूजिता, प्रतिष्ठिता च कपिलकेवलिनेत्यत्रानुक्तमपि ग्रन्थान्तरादवसेयं, यदुक्तं-"ततश्चावन्तिनाथेन, प्रार्थितः कपिलो मुनिः। प्रत्यष्ठात्प्रतिमां मन्त्रपूतचूर्णं विनिक्षिपन्॥१॥" इत्यादिश्रीमहावीरचरित्रे,चण्डप्रद्योतेन कपिलकेवलिना प्रतिष्ठाप्योदायनराजगृहे मुक्तेति प्रतीतमेव, एतदर्थव्यञ्जकं श्रीप्रश्नव्याकरणाङ्गमपि, तथाहि-"सीताते दोवतीए कते रुप्पिणीए पउमा-

वतीए ताराए कंचणाते रत्तसुभद्दाए अहिल्लिआते सुवण्णगुलिआंते अ अण्णेसु अ एवमाइएसु बहवो महिलाकएसु सुव्वंतीत्यादि श्रीप्रश्नव्याकरणाङ्गसूत्रं,तत्र सुवर्णगुलिकेतिनामसिद्धिपरिज्ञानार्थंतत्पदस्य टीका यथा,तथा सुवर्णगुटिकायाः कृते संग्रामोऽभूत्, तथाहि–सिन्धुसौवीरेषु जनपदेषु विदर्भकनगरे उदायनस्य राज्ञः प्रभावत्या देव्याः सत्का देवदत्ताभिधाना दास्यभवत्, सा च देवनिर्मितां गोशीर्षचन्दनमयीं श्रीमन्महावीरप्रतिमां राजमन्दिरान्तर्वर्त्तिचैत्यभवनव्यवस्थितां प्रतिचरति स्म, तद्वन्दनार्थं च श्रावकः कोऽपि देशान्तरात् संचरन् समायातः, तत्र चागतोऽसौ रोगेणापटुशरीरो जातः, तया च सम्यग् प्रतिचरितः, तुष्टेन च तेन सर्वकामिकमाराधितदेवतावितीर्णं गुटिकाशतमदायि, तया चाहं कुब्जा विरूपा सुरूपा भूयासमिति मनसि विभाव्यैका गुटिका भक्षिता, तत्प्रभावात् सा सुवर्णवर्णा जातेति सुवर्णगुटिकेतिनाम्ना प्रसिद्धिमुपगता, ततोऽसौ चिन्तितवती–जाता मे रूपसंपद्,एतया च किं भर्तृविहीनया?, तत्र तावदयं राजा पितृतुल्यो, न कामयितव्यः, शेषास्तु पुरुषमात्रमतः किं तैः?, तत उज्जयिन्याः पतिं चण्डप्रद्योतं राजानं मनस्याधाय गुटिका भक्षिता, ततोऽसौ देवतानुभावात् तां विज्ञाय तदानयनाय हस्तिरत्नमारुह्य तत्रायातः, आकारिता च तेन सा, तयोक्तम्–आगच्छामि यदि प्रतिमां नयसि, तेनोक्तं–तर्हि श्वो नेष्यामि, ततो गतोऽसौ स्वनगरीं, गत्वा तद्रूपां प्रतिमां कारयित्वा तामादाय तथैव रात्रावायातः, स्वकीयप्रतिमां देवतानिर्म्मितप्रतिमास्थाने विमुच्य तां च सुवर्णगुटिकां च गृहीत्वा गतः, प्रभाते च चण्डप्रद्योतगन्धहस्तिविमुक्तमूत्रपुरीषगन्धेन विमदान् स्वहस्तिनो विज्ञाय ज्ञातचण्डप्रद्योतागमोऽवगत-प्रतिमासुवर्णगुलिकानयनोऽसावुदायनराजा परं कोपमुपागतो दशभिर्महाबलै राजभिः सहोज्जयिनीं प्रति प्रस्थितः, अन्तरा पिपासा-बाधितसैन्यस्त्रिपुष्करकरणेन देवतया निस्तारितसैन्योऽक्षेपेणोज्जयिन्याः बहिः प्राप्तः, रथारूढश्च धनुर्वेदकुशलतया सन्नद्धहस्तिरत्नारूढं

चण्डप्रद्योतं प्रजिहीर्षुं मण्डलया भ्रमन्तं चलनतलशरव्यथितहस्तिनो भुवि निपातेन वशीकृतवान्, मम दासीपतिरिति ललाटपट्टे मयूरपिच्छेनाङ्कितवानिति श्रीप्रश्न० टीकायां,अत्र सुवर्णगुटिकेतिनामनिदानं देवनिर्म्मितश्रीमहावीरप्रतिमावन्दनार्थमागतस्य श्रावकस्य देवार्पितगुटिकाशतमिति सिद्धमुदायनचरित्र एव केन कृतेत्यादि प्रश्नव्याकरणं, अथ केन प्रतिष्ठितेति दर्शयति-'सिरिनाभे'-त्यादि, श्रीनाभसूरिप्रमुखप्रतिष्ठिता-श्रीनाभसूरिप्रमुखैराचार्यैः श्रीशत्रुञ्जयादौ जिनप्रतिमा प्रतिष्ठिता, यदुक्तं-"सर्वैतीर्थोदकैः सर्वौषधिभिर्देवताहृतैः। शास्त्रोक्तविधिना भूपः, प्रतिष्ठामप्यकारयत् ॥१॥ वासाक्षताः सूरिमन्त्रेणाभिमन्त्र्य पवित्रिताः। क्षिप्ता ध्वजेषु दण्डेषु, चैत्यबिम्बेषु सूरिभिः ॥२॥" इतिश्रीशत्रुञ्जयमाहात्म्ये, तथाऽष्टापदप्रासादप्रतिष्ठाधिकारे "एवं सिंहनिषादाख्यं, प्रासादं भरताधिपः। कारयित्वा प्रतिष्ठाप्य, जिनांश्चापूजयत्ततः ॥१॥" तथा "मृन्मयं हैमनं रत्नमयं वा बिम्बमार्हतम्। कारयित्वा निजगृहे, साधुभिः प्रत्यतिष्ठपत् ॥१॥" इतिश्रीशत्रुं०, न चैतदाधुनिकं भविष्यतीति शङ्कनीयं,श्रीविक्रमतः सप्तसप्तत्यधिकचतुःशतसंवत्सरभाविश्रीधनेश्वरसूरिकृतत्वेन जीर्णत्वात् सर्व्वसम्मतत्वाच्च,आदिशब्दाच्चण्डप्रद्योतविज्ञप्तेन कपिलकेवलिना श्रीमहावीरप्रतिमा प्रतिष्ठिता,यदुक्तं-"ततश्चावन्तिनाथेन,प्रार्थितः कपिलो मुनिः। प्रत्यष्ठात्प्रतिमां मन्त्रपूतचूर्णं विनिक्षिपन् ॥१॥" इतिश्रीमहावीरचरित्रे, तथा विधिग्रन्थेऽपि-"निअदव्वमउव्वजिणिंदभवणजिणबिंबवरपइट्ठासु। विअरइ पसत्थपुत्थयदय सुतित्थयरपूआसु॥१॥"त्ति इतिश्रीभक्तप्रकीर्णके, तथा श्रीसिद्धसेनदिवाकरश्रीहरिभद्रसूरिश्रीउमास्वातिवाचकप्रमुखकृतश्रीप्रतिष्ठाकल्पादिषु साधूनामेव प्रतिष्ठाकृत्यस्योपदिष्टत्वात्, तथा जीर्णप्रतिमानामपि सिंहासनादिष्वमुकसूरिभिः प्रतिष्ठितमित्याद्युपलम्भात्साधुना प्रतिष्ठितेति सिद्धम्। अथ केन साधुना वन्दितेत्यत्र दर्शयति-'गोअमपमुहे'त्यादि, गौतमप्रमुखमुनिभिः-श्रीगौतमस्वामिप्रभृतिभिर्वन्दिता, तथाहि-"दुमपत्तए

पंडुरए जहा निवडइ रायगणाण अच्चए। एवं मणुआण जीविअं समयं गोअम ! मा पमायए॥१॥" इतिश्रीउत्तराध्ययनं १०(२९०*) एतन्निर्युक्तिर्यथा–चंपाइ पुण्णभद्दंमि चेइए नायओ पहिअकित्ती। आमंतेउं समणे कहेइ भयवं महावीरो ॥१॥ अट्ठविहकम्ममहणस्स तस्स पगईविसुद्धलेसस्स। अट्ठावए नगवरे निसीहिआनिट्ठिअट्ठस्स ॥ २ ॥ उसभस्स भरहपिउणो तेलुक्कपयासनिग्गयजसस्स। जो आरोढुं वंदइ चरमसरीरो अ सो साहू ॥३॥ साहुं संवासेइ अ अस्साहुं न किर संवसावेइ। अह सिद्धपव्वओ सो पासे वेअड्ढसिहरस्स ॥४॥ चमरसरीरो साहू आरुहइ नगरवरं न अन्नोत्ति। एअं तु उदाहरणं कासी अ तहिं जिणवरिंदो ॥५॥ सोऊणं तं भगवउ गच्छइ तहिं गोअमो पहिअकित्ती। आरुब्भ तं नगवरं पडिमाओ वंदइ जिणाणं ॥ ६ ॥ अह आगओ सपरिसो सव्विड्ढीए तहिं तु वेसमणो। वंदित्तु चेइआइं अह वंदइ गोअमं भयवं ॥७॥ (२८६-९२)इत्यादि, एतट्टीकागतं कथानकं यथा–तेणं कालेणं २ पिट्ठिचंपा नाम नयरी, तत्थ सालो नाम राया, महासालो जुवराया, तेसिं सालमहासालाणं भगिणी जसमई, तीसे पिठरो भत्तारो, जसमतीए अत्तओ पिठरपुत्तो गांगली नाम कुमारो, अण्णया समणे भगवं महावीरे आइगरे तित्थयरे सयंसंबुद्धे जाव सिद्धिगइनामधेयं ठाणं संपाविउकामे आगासगएणं छत्तेणं आगासगएणं सव्वरयणामएणं धम्मचक्केणं आगासगएणं फालिआमएणं सीहासणेणं आगासगयाहिं कुंदिंदुसंखप्पगासाहिं चामराहिं पुरओ पगढिज्जमाणेणं धम्मज्झएणं समंता मग्गओवि फुरंतेण भामंडलेणं अणेगदेवकोडिसंपरिवुडे चउदसहिं समणसाहस्सीहिं छत्तीसाए अज्जिआसाहस्सीहिं अणुगम्ममाणे भविअकमलपडिबोहदिवायरे भवजलहिपरमजाणवत्ते तिलोअचिंतामणी चउतीसाइसयसंपउत्ते चंदुव्व सोमलेसे सूरुव्व तेअस्सिरीए मंदरो इव निप्पकंपे कुंजरो इव सोंडीरे सीहो इव दुद्धरिसे गयणमिव निरुवलेवे संखो इव निरंजणे वाउरिव अप्पडिबद्धे अट्ठसहस्सपुरिसलक्खणधरे पुव्वाणुपुव्विं चरमाणे

गामाणुगामं दूइज्जमाणे सुरविरइएहिं हेममएहिं नवहिं पउमेहिं चरणकमले ठाविंते, अविअ–अग्गिल्लं अग्गिल्लं पयाहिणाए अ ठाइ पअठाणे। दोहिं पउमेहि पाया मग्गेण य हुंति सत्तन्ने ॥१॥ जेणेव पिट्ठिचंपा तेणेव उवागए, उज्जाणंमि समोसढे, सालो महासाल-सहिओ महयाए विभूईए निग्गओ भगवओ वंदणवडिआए, तिक्खुत्तो पयाहिणीकाऊण वंदिओ भयवं, उवविट्ठो धरणिअले, कहिओ भगवया जीवदयाइओ धम्मो, वण्णिआ माणुसत्ताई अइदुल्लहा धम्मसाहणसामग्गी, परूविआ मिच्छत्ताईआ कम्मबंधहेऊ, उवदिट्ठाणि महारंभाइआणि निरयगइकारणाणि, परूविओ जम्माइदुक्खपउरो संसारो, परूविअं कोहाइकसायाणं भवभमणहेउत्तणं, पयडिओ सम्मदंसणाइओ मोक्खमग्गो, इमं च सोऊण संवेगमुवगओ सालो भणइ–जं नवरं महासालं रज्जे ठावेमि ताव तुम्ह पाय-मूले गिण्हामि पव्वज्जं, पविट्ठो नयरिं, भणिओ महासालो–तुहं गिण्ह रज्जं, अहं पव्वयामि, तेण भणिअं–अलं मे महारंभनिबंधणेणं महामोहहेउणा विवेगपडिवक्खेणं दोग्गइसहस्सुप्पायगेण अभिमाणमित्तसुहेण रज्जेण, अहंपि संसारभयउव्विग्गो भीओ जम्ममर-णाणं, ता जहा तुब्भे मम इहं मेढी पमाणं तहा पव्वइअस्सवि, ताहे गागली कंपिल्लाओ सद्दावेऊण पट्टो बद्धो अभिसित्तो अ राया जाओ, पुण तेसिं दो सिविआओ करेइ जाव ते पव्वइआ, सा भगिणी समणोवासिआ जाया, तत्तेणं ते समणा हुंतगा इक्कारस अंगाइं अहिज्जिआ, तए णं समणे भगवं महावीरे बहिआ जणवयविहारं विहरइ, तेणं कालेणं २ रायगिहं नाम नयरं, तत्थ सामी समो-सढे, पडिबोहिऊण भव्वसत्ते ततो निग्गओ चंपं जओ विहरिओ, ताहे सालमहासाला सामिं आपुच्छंति–अम्हे पिट्ठिचंपं वच्चामो जइ नाम ताण कोइ बुज्झेज्जा सम्मत्तं वा लभेज्जा, सामीवि जाणइ जहा ताणि संबुज्झिहिंति, ताहे सामिणा से गोअमसामी बितिज्जिओ दिण्णो, गोअमसामी पिट्ठिचंपं गओ, तत्थ समोसरणं, गागली पिठरो जसमई अ निग्गयाणि, भयवं धम्मं कहेइ, जहा–भो

भो भव्यसत्ता! मा चिट्ठह विसयपसत्ता, अणेअदुहसयदारुणो संसारप्पबंधो, मा करेह एअंमि पडिबंधो, किच्छेण माणुसत्ताइसामग्गी पाविज्जइ, अकयधम्माणं सा निप्फला संपज्जति, चोल्लगाइदिट्ठंतेहिं पुणो दुल्लहा वण्णिज्जति, जओ अहम्मेण जीवो कुजोणीसु भामिज्जइ, असारमणिचं वित्तं मा तंमि मुच्छावेह चित्तं, निरसावसाणा कामभोगा तप्पमत्ताणं जायंति पए २ वसणभोगा, संझ-ब्भरागसरिसं जोव्वणं मा करेह तंमि उम्मत्तं मणं, खणनट्ठदिट्ठो इट्ठजणसंजोगो मा करेह तंमि गरुओ मणरंगो, कुसग्गजलबिंदुचंच-लमाउं उज्झह धम्मं काउं, जिणिंदपण्णत्तो धम्मो चेवेत्थ सरणं जो रक्खइ जम्मजरमरणं, देइ सयलसोक्खं, अइरेण पावेइ मोक्खं, विअरइ सुरासुररिद्धिं, करेइ सयलसमीहिअसिद्धिं, आवईओ निवारेति, संसारसायरमुत्तारेइ, ता सव्वहा पयट्टहणधम्मे, मा रमह पावकम्मे, एवं च सोऊण ताणि पडिबुद्धाणि, ताहे गागली भणइ-जं नवरं अम्मापिअरे पुच्छामि जेट्ठपुत्तं रज्जे ठावेमि ताव तुम्ह पायमूले गहेमि पव्वज्जं, ताणि आपुच्छिआणि भणंति-जइ तुमं संसारभयउव्विग्गो परिचयसि घरवासं तो अम्हेवि, ताहे सो पुत्तं रज्जे ठवित्ता-अम्मापिईहिं समं पव्वइओ, गोअमसामीवि ताणि घेत्तूण चंपं वच्चति, तेसिं सालमहासालाणं पंथं वच्चंताणं हरिसो जाओ जहा इमाइं संसाराउ उत्तारिआणि, एवं तेसिं सुहेण अज्झवसाएणं केवलणाणं उप्पण्णं, इअरेसिंपि चिंता जाया जहा एएहिं अम्हे रज्जे ठाविआणि, पुओ संसाराओ मोइआणि, एवं चिंततााण सुहेणं अज्झवसाणेणं तिण्हंपि केवलनाणं उप्पन्नं, एवं ताणि उप्पण्णकेवलणाणाणि चंपं गयाणि, सामी पयाहिणीकरेमाणाणि तित्थं पणमिऊण केवलिपरिसं पहाविआणि, गोअमसामीवि भगवं वंदिऊण तिक्खुत्तो पाएसु वडिओ, उट्ठिओ भणइ-कहिं वच्चह?, एह तित्थयरं वंदह, ताहे सामी भणइ-मा गोअमा! केवली आसा-एहि, ताहे आउट्टो खामेइ, संवेगं च गओ, तत्थ गोअमसामिस्स चिंता जाया-मा णं न सेज्झिज्जामित्ति, इओ अ देवाणं संलावो

वट्टइ-अन्न भगवया वागरिअं-जो अट्ठावयं विलग्गइ चेइआणि वंदइ धरणीगोअरोससत्तीए सो तेणेव भवग्गहणेण सिज्झइ, ताहे सामी तस्स चित्तं जाणइ तावसाण य संबोहणयं, एअस्सवि थिरया भविस्सइत्ति दोवि कयाणि भविस्संति, सोऽवि सामिमापुच्छइ-अट्ठावयं जामित्ति, तओ भगवया भणिओ-वच्च अट्ठावयं चेइआणं वंदओ, भगवं हट्ठतुट्ठो वंदित्तुं गओ, तत्थ य अट्ठावए जणवायं सोऊणं तिन्नि तावसा पंचपंचसयपरिवारा पत्तेअं ते अट्ठावयं विलग्गामोत्ति तत्थ किलिस्संति-कोडिण्णो दिण्णो सेवाली, जो सो कोडिण्णो सो चउत्थं २ काउण पच्छा मूलकंदाणि आहारेइ सच्चित्ताणि, सो पढमं मेहलं विलग्गो, दिण्णो छट्ठंछट्ठेणं काऊणं परिसडिअपंडुपत्ताणि आहारेइ सो बीअं मेहलं विलग्गो, सेवाली अट्ठमं काऊण जो सेवालो मइलओ तं आहारेइ, सो तइअं मेहलं विलग्गो, एवं तेऽवि तावसा किलिस्संति, भगवं च गोअमे उरालसरीरे हुअवहतडितरुणरविसरिसतेए, तं एरिसं एज्जंतं पेच्छित्ता ते भणंति-एस किर एत्थ थुल्लओ समणो विलग्गिहित्ति, जं अम्हे महातवस्सी सुक्का भुक्खा न तरामो विलग्गिउं, भगवं च गोअमे जंघाचारणलद्धीए लूआतंतुपुडगंपि नीसाए उप्पयइ जाव ते पलोएंति, एस आगओ २ त्ति, एसो अदंसणं गओत्ति २, ताहे ते विम्हिआ जाया पसंसंति, अच्छंति य पलोअंता, जइ ओअरइ तो वयं एअस्स सीसा एव, ते पडिच्छंता अच्छंति, गोअमसामीवि पत्तो निअणियवण्णपमाणजुत्ताहिं भरहचक्किणा काराविआहिं चउवीसाए उसभाइजिणिंदपडिमाहिं मज्झावासिअं अट्ठावयगिरिसिहरसंठिअभाययणं, आगमभणिअविहाणेण य वंदिआइं चेइआइं, कया य संथुई-पढमपयासिअनीई पढमजिणो धम्मसारही पढमो। पढमो अ महापुरिसो अट्ठावयसंठिओ जयइ ॥१॥ पणमामि विमलणाणं समदमखमसव्वदयगुणपहाणं। अवगयकम्मकलंकं उसभजिणं तिहुअणमिअंकं ॥२॥ जो तुह नाह! निअच्छइ निम्मलु मुहकमलु, नासइ तासु निस्सेसु महंतुवि पावमलु। भत्तिभरेण नमंसइ जोविअ संथुणइ, सो

सिरिउसभ! करठिओ सिद्धत्तणु कुणइ ॥३॥ जगचिंतामणि जगह नाह जगगुरू जगरक्खण जगबंधव! जगसत्थवाह! जगभावविअक्खण! । अट्ठावयसंठविअरूव कम्मट्ठविणासण! चउवीसवि जिणवर जयंतु अप्पडिहयसासण ॥ ४ ॥ तओ–सासयमउलमणंतं जम्मणजरमरणराअतमग्गुक्कं। मह नाह! मोक्खमोक्खं संपज्जउ तुह पभावेण ॥५॥ काऊण य पणिहाणं गंतूण उत्तरपुरच्छिमे दिसीभाए पुढविसिलापट्टए असोअवरपायवस्स अहे तं रयणिं वासाए उवगओ । इओ अ सक्कस्स लोगपालो वेसमणोऽवि अट्ठावयचेइअवंदओ आगओ, सो चेइआणि वंदित्ता गोअमसामिं वंदइ, भयवंपि धम्मं कहेइ, धम्मो अत्थो कामो पुरिसत्था तिन्नि हुंति लोगंमि। धम्माउ जेण इअरे तम्हा धम्मो पहाणो उ ॥१॥ धम्मोऽवि एत्थ सिज्झइ देवाण जईण भत्तिरागेण। तो तंमि चेव पढमं पयट्टिअव्वं विसेसेणं ॥२॥ देवो पुण एत्थ सो चेव जो सव्वण्णू सव्वदंसी अट्ठारसदोसेहि अ वज्जिओ, जओ भणिअं–अण्णाणकोहमयमाणलोहमायारईअरई अ। निद्दासोअअलिअवयण चोरिआ मच्छरभया य ॥१॥ पाणिवह पेमकीडा पसंगहासाइ जस्स ए दोसा। अट्ठारसवि पणट्ठा नमामि देवाहिदेवं तं ॥२॥ एवंविहो अ भयवं तित्थयरो अरहंतो, तस्स चेव भत्ती कायव्वा, सा य पूआवंदणाईहिं हवइ, पूअंपि पुप्फामिसथुइपडिवत्तिभेएण चउव्विहंपि जहासत्तीए कुज्जा, जओ–"उत्तमगुणबहुमाणो पयमुत्तमसत्तमज्झयारंमि। उत्तमधम्मपसिद्धी पूआए जिणवरिंदाणं ॥ १ ॥ वंदणंपि कायव्वं तिसंझं, तंपि अ विहिणा आगमभणिएणं, भणिअं च–"तिन्नि निसीही तिन्नि अ पयाहिणा तिन्नि चेव य पणामा। तिविहा पूआ य तहा अवत्थतिअभावणं चेव॥१॥"त्यादि श्रीउत्तरा० टीकायां, आदिशब्दाज्जङ्घाचारणविद्याचारणादीनां परिग्रहः,तैस्तु नन्दीश्वरादिद्वीपे चैत्यानि नमस्कृतानि, एतच्च 'दुविहा चारणे'त्यादिना प्रागुक्तं बोध्यं, मदनरेखाप्रभृतिश्राविकावर्गोऽपि बोध्यः, अथैवं सूत्रोक्तमपि निर्युक्त्याद्यङ्गीकारेणैव सिद्धं यच्चक्रणितं, परं सूत्रानुयायि न

भविष्यतीति पराशङ्कानिरासार्थमाह–'सुत्तत्थो खल्वि'त्यादि, सुत्तत्थो खलु पढमो, बीओ निज्जुत्तिमीसिओ भणिओ। तइओ अ निरवसेसो एस विही होइ अणुओगे॥१॥" त्ति श्रीभगवत्यां भणितं,(१-९०*३-२४*१२-९४*)तत्रापि शु० २५उ०२, एतद्विधिस्तु माग् दर्शित इति बोध्यम्, अथ षडावश्यकान्तर्गतश्रावकप्रतिक्रमणसूत्रे साक्षादेव चैत्याराधनमुक्तं, तथाहि–"जावंति चेइआइं उड्ढे अ अहे अ तिरिअलोए अ। सव्वाइं ताइं वंदे इह संतो तत्थ संताइं॥१॥" त्ति,चतुश्चत्वारिंशत्तमा गाथा,अत्र साक्षादेव जिनप्रतिमा भणिता तथापि तद्विशेषतोऽवगमनार्थं तच्चूर्णिमाह–'एवं चउवीसाए जिणाण वंदणं काउं संपइ सम्मत्तविसुद्धिनिमित्तं तिलोअगयाणं सासयासासयाणं वंदणं भणइ–जावंति०, इत्थ लोगो तिविहो–उड्ढलोगो अहोलोगो तिरिअलोगो, तत्थ उड्ढलोगो सोहम्मीसाणाइआ दुवालस देवलोगा हिट्ठिमहिट्ठिमाइआ नव गेविज्जा विजयाईणि पंचाणुत्तरविमाणाणि, एएसुवि अ विमाणाणि पत्तेअं–बत्तीसअट्ठावीसा बारस अट्ठ य चउरो सयसहस्सा। आरेण बंभलोआ विमाणसंखा भवे एसा ॥१॥ पंचास चत्त छच्चेव सहस्सा लंतसुक्कसहस्सारे। सयचउरो आणयपाणएसु तिन्नारणच्चुअओ ॥२॥ एगारसुत्तरं हिट्ठिमेसु सत्तुत्तरं च मज्झिमए। सयमेगं उवरिमए पंचेव अणुत्तरविमाणा ॥३॥ सव्वग्गं–चुलसीइ सयसहस्सा सत्ताणउई भवे सहस्साइं। तेवीसं च विमाणा विमाणसंखा भवे एसा ॥४॥ तहा अहोलोए मेरुस्स उत्तरदाहिणओ असुराइआ दस दस निकाया, तेसुवि भवणसंखासव्वग्गं–सत्तेव य कोडीओ हवंति बावत्तरी अ सयसहसा। जावंति विमाणाइं सिद्धाययणाणि तावंति ॥ ५ ॥ तहा तिरिअलोगो समधरणिअलाओ उड्ढं नव जोअणसयाइं हिट्ठावि अहोगामेसु नव जोअणसयाइं, एवं अट्ठारस जोअणसयाइं, एवं अट्ठारसयजोअणप्पमाणो तिरिअलोगो, तत्थ जिनायतनानि–'नंदीसरंमि बावन्न जिणहरा सुरगिरीसु तह असीई। कुंडलनगमणुसुत्तररूअगवलएसु चउचउरो ॥ ६ ॥ उसुआरेसुं चत्तारि असीइ

वक्खारपव्वएसु तहा। वेअड्ढे सतरससयं तीसं वासहरसेलेसु ॥७॥ वीसं गयदंतेसुं दस जिणभवणाइं कुरुनगवरेसु। एवं च तिरिअलोए अडवण्णा हुंति सयचउरो ॥८॥ वंतरजोइसिआणं असंखसंखा जिणालया निच्चा। गामागरनगनगराइएसु कयगा बहू संति ॥९॥ एवं च सासयासासयाइं वंदामि चेइआइंति। इत्थ पएसंमि ठिओ संतो तत्थऽस्सिए एस ॥१०॥ इति समस्तद्रव्यार्हद्वन्दनानिवेदकगाथासमासार्थः॥४४॥ इति श्रावकप्रतिक्रमणचूर्णौ, अत्र कश्चिदेतच्छ्रावकप्रतिक्रमणसूत्रं न गणधरकृतं, किंतु श्रावककृतं, तत्रापि 'तस्स धम्मस्से'त्यादि गाथादशकं केनचिदर्वाचीनेन प्रक्षिप्तमित्यादि ब्रूते, स चात्यन्तक्लिष्टकर्मोदयात् तीर्थकृदादीनां महाशातनाकारी बोध्यः, यतो नहि काप्येतत्सूचकं प्रवचनवचनं, न वा अच्छिन्नपरम्परागतवृद्धवचनं केनचिच्छ्रुतं, किंतु यस्य सूत्रादेः कर्त्ता नामग्राहं न ज्ञायते प्रवचने च सर्वसम्मतं तत्कर्त्ता श्रीसुधर्मस्वाम्येवेति वृद्धसंवादस्तथा विचारामृतसंग्रहे भणितमपि, तेन सम्यग्दृशामच्छिन्नपरम्परागतेनागमेन सर्वमपि जिनप्रतिमादिकं साध्वादितीर्थस्य सम्यगाराध्यत्वेन प्रतीतिविषयीभवतीति गाथायुग्मार्थः ॥ ४९-५० ॥ अथ साधनाभावे साध्यस्याप्यभाव इति न्यायेनाऽपि प्रतिमा सिद्ध्यतीति दर्शयितुमाह—

कज्जं साहणसज्झं लोअपसिद्धंति सुणिअ सिवमग्गे। णाणाइ तस्स साहणमिह पुत्थयपडिमपमुहंति ॥५१॥

'कार्यं साधनसाध्यं' यद्यत्कार्यं तत्तत्सर्वमपि स्वस्वनियतकारणसाध्यं, तज्जन्यमित्यर्थः, इति लौकिकप्रसिद्धं ज्ञात्वा 'शिवमार्गो' मोक्षमार्गः ज्ञानदर्शनचारित्रादि, यदुक्तं—"ज्ञानदर्शनचारित्राणि मोक्षमार्ग" इति तत्त्वार्थे सूत्रकृदङ्गादौ च, तस्य ज्ञानादेः साधनं— कारणमिह—जगति 'पुस्तकप्रतिमाप्रमुखं' पुस्तकप्रतिमारजोहरणादीनि, अत एव तद्विराधने च ज्ञानादिसंक्लेश एव, यदागमः—"तिविहे संकिले पं०, तं०—णाणसंकिलेसे२दंसणसंकिलेसे चरित्तसंकिलेसे" इति श्रीस्थानाङ्गे तृतीयस्थानकस्य चतुर्थोद्देशके, एतद्व्येकदेशो

यथा ज्ञानदर्शनयोः तदुपग्रहकारिद्रव्याणां च पुस्तकचैत्यादीनामुपघाताय मिथ्यादृशामुपबृंहणार्थं वा निमन्त्रणप्रतिश्रवणादिभिर्ज्ञानदर्शनातिक्रमादयोऽप्यायोज्या इति श्रीस्थानां० वृत्तौ, अत्र यथा भावश्रुतहेतुत्वेन पुस्तकं द्रव्यश्रुतमुक्तं तथा भावार्हत्परिज्ञानहेतुत्वाज्जिनप्रतिमाऽपि दर्शनोपग्रहहेतुत्वेन दर्शनोपकरणं, तदुपघातायोद्यतस्यातिक्रमादयः संक्लेशाः सम्यक्त्वहानिकरा भवन्तीति दर्शितम्, एवं रजोहरणमुखवस्त्रिकादिकं चारित्रोपकरणं बोध्यं, तदुपघाते चारित्राद्युपहतिरिति, नहि कारणमन्तरेण कार्योत्पत्तिरिति पर्यालोच्य जिनप्रतिमा दर्शनहेतुर्बोध्या, अत एव बृहत्कल्पभाष्येऽपि—"तित्थयरा १ जिण २ चउदस ३ भिन्ने ४ संविग्ग ५ तह असंविग्गे ६। सारूविअ ७ वय ८ दंसण ९ पडिमाओ १० भावगामा उ ॥१॥" इत्यादि प्रागुक्तं बोध्यं, नच जिनप्रतिमादर्शनाद्यभावेऽपि केषांचित्सम्यक्त्वलाभदर्शनाद्व्यभिचारो भविष्यतीति शङ्कनीयं, भिन्नभिन्नभव्यपरिपाकयोग्यतया प्रतिभव्यं सम्यक्त्वहेतूनां वैचित्र्यात्, तथात्वे च कस्यचित्तीर्थकृत् कस्यचिद्गणधरः कस्यचित्साधुः कस्यचिज्जिनप्रतिमादिकमित्येवं नैयत्येऽपि तद्व्यतिरिक्तेषु विपरीतश्रद्धानप्ररूपणाद्यभावात्तेषां कारणत्वमेव, वैपरीत्यश्रद्धानादौ च त एव सम्यक्त्वनाशहेतवः, तस्मान्नियतान्यपि कारणानि नियतेषु कार्येषु फलोपहितयोग्यतया शेषेषु च स्वरूपयोग्यतया कारणानि भवन्ति, तदस्त्वेतावता तेषामकारणत्वम्, अन्यथा तीर्थकृतोऽपि सम्यक्त्वादिहेतवो न भवेयुः, तीर्थकरमन्तरेणापि गौतमप्रतिबोधितानां सम्यक्त्वलाभः प्रतीतः, किंच—लुम्पकमते पुस्तकस्याप्यकारणत्वापत्त्या स्वगलपादुका, नहि पुस्तकादेव सर्वेषां ज्ञानादिलाभः, तत्रापि व्यभिचारदर्शनं प्रतीतमेवेति जिनप्रतिमा जिन इव सम्यक्त्वहेतुः संपन्ना, एतेन जिनप्रतिमा तावदचेतना ज्ञानादिशून्या च कथमभीष्टार्थसिद्धये स्यादित्यपि दुर्वाक्यं निरस्तं, यतो न ह्यभीष्टार्थसिद्धौ सचेतनत्वं ज्ञानादिमत्त्वं वा प्रयोजकम्, उभयत्रापि व्यभिचारात्, तथाहि—"अमरमणिकल्पतरू प्राप्यं,

फलमेतदसंगतम्। चिन्तामण्यादयः किं न, फलन्त्यपि विचेतनाः ? ॥१॥" इति वचनादचेतनादपि चिन्तामण्यादेरभीष्टफलसिद्धिः, असिद्धिश्च सचेतनादपि कीटककोट्यादेरपि, तथा ज्ञानादिभाजोऽपि सिद्धतदाभमूककेवल्यादेरभीष्टश्रुतलाभादेरदर्शनं, दर्शनं च ज्ञानादिशून्यादपि पुस्तकप्रतिमादेः, अत एव श्रीसुधर्मस्वामिनाऽपि पञ्चमाङ्गे पञ्चपरमेष्ठिवत् "नमो बंभीए लिवीए" त्ति पदेन पुस्तकस्यापि नमस्कारः कृतः, अतो ज्ञानादिमत्त्वेन नोभयथापि नियमः, ननु भवतु पुस्तकं ज्ञानहेतुरध्यक्षत एव तथोपलम्भात, परं प्रतिमा कस्येव दर्शनहेतुरिति चेदुच्यते, प्रतिमादर्शनात् सम्यक्त्वावाप्तिस्त्वार्द्रकुमारादेरिव, उक्तं च-"जा सम्मभाविआओ पडिमा इअरा न भावगामो उ। भावो जइ नत्थि तहिं नणु कारण कज्जउवयारो ॥१॥" इतिश्रीबृहत्कल्पभाष्ये, व्याख्या-सम्यग्भाविताः-सम्यग्दृष्टिपरिगृहीताः प्रतिमास्ताः भावग्राम उच्यते, नेतराः-मिथ्यादृष्टिपरिगृहीताः, आह-सम्यग्भाविता अपि प्रतिमास्तावद् ज्ञानादिभावशून्यास्ततो यदि ज्ञानादिरूपो भावः स तत्र नास्ति ततस्ताः कथं भावग्रामो भवितुमर्हन्ति ?, उच्यते, ता अपि दृष्ट्वा भव्यजीवस्यार्द्रकुमारादेरिव सम्यग्दर्शनाद्युदीयमानमुपलभ्यते ततः कारणे कार्योपचार इतिकृत्वा ता अपि भावग्रामो भण्यन्ते, इतिश्रीबृहत्कल्पवृत्तौ, किंच-यदुक्तं पुस्तकात् ज्ञानलाभोऽस्माकमध्यक्षस्तर्हि प्रतिमादर्शनतोऽपि दर्शनलाभोऽस्मादृशामध्यक्षसिद्ध एवेत्यलं विस्तरेणेतिगाथार्थः ॥१५१॥ अथ सिंहावलोकनन्यायेन किंचिद्वक्तुमुपक्रम्यते, तत्र द्वारगाथात्रिकमाह—

चेइअसद्दत्थ १ मुणिप्पमुहाणं नियकिरिअउवओगो। जिणपडिमाणं २ आणंदप्पमुहाणंपि उवहाणं३ ॥१५२॥
संखेववित्थराणं सुसंगई नामसुइआणंपि ४। अण्णह अइप्पसंगो लोअपसिद्धो महादोसो ५ ॥१५३॥
जं पुण कुवक्खलिआणं महानिसीहंपि होइ अपमाणं। तत्थ निमित्तं ६ लुंपग हिओवएसंपि मित्तीए७ ॥१५४॥

चैत्यशब्दस्यार्थः, चैत्यशब्देन जिनप्रतिमा वाच्या उतान्यद्वेति निर्णयः १ मुनिप्रभृतीनां–साधुसाध्वीश्रावकश्राविकाणां नियतक्रियासूपयोगः–प्रयोजनं, यद्वा निजा एव निजकाः–साध्वादिसंबन्धिन्यो याः क्रियाः–महाव्रताणुव्रतोचारादिलक्षणाः प्रतिक्रमणादिलक्षणाश्च तासूपयोगो जिनप्रतिमानां २ आनन्दप्रमुखाणां श्रमणोपासकानामुपधानानि ३ संक्षेपविस्तरयोः सु–शोभना संगतिः तथा नामग्रचितानामपि ४ अन्यथा अतिप्रसङ्गो लोकप्रसिद्धो महादोषः ५ यत्पुनः कुपाक्षिकाणां श्रीमहानिशीथमप्रमाणं तत्र निमित्तं–निदानं ६ मैत्र्या–मैत्रीभावेन लुम्पकहितोपदेशः ७, एतानि सप्त द्वाराणि, वक्ष्ये इति क्रियाध्याहारः सर्वत्र कार्य इतिगाथात्रयार्थः ॥१५२-१५३-१५४॥ अथ 'यथोद्देशं निर्देश'मितिन्यायात्प्रथमं चैत्यशब्दस्यार्थनिर्णयमाह—

भगवइजीवाभिगमे चेइअसद्देण अरिहपडिमुत्ति। रायपसेणिअणायाधम्मेसु न साहु अरिहंति ॥१५५॥ •

भगवती च जीवाभिगमश्च भगवतीजीवाभिगमं तस्मिन्, चैत्यशब्देनार्हत्प्रतिमेत्यर्थः सूत्र एव प्रतीतः,तथाहि–"किं णिस्साए णं भंते! असुरकुमारा उड्ढं उप्पयंति जाव सोहम्मो कप्पो, से जहाणामए सबराइ वा बब्बराइ वा टंकणाइ वा चुचुआइ वा पण्हाइ वा पुलिंदा इ वा एगं महं गड्डं वा दुग्गं वा दरिं वा विसमं वा पव्वयं वा णिस्साए सुमहल्लमवि आसबलं वा हत्थिबलं वा जोहबलं वा धणुबलं वा आगलेंति, एवामेव असुरकुमारा देवा अरहंते वा अरहंतचेइआणि वा अणगारे वा भाविअप्पणो णिस्साए उड्ढं उप्पयंति जाव सोहम्मो"त्ति (सू० २४२-३-४) श्रीभगवत्यां शत० ३ उ० २ एतद्वृत्त्येकदेशो यथा नान्यत्र–तन्निश्राया अन्यत्र न, न तां विनेत्यर्थः इति श्रीभग० वृत्तौ, अत्र वाकारत्रिकेण त्रयाणामपि भिन्नार्थतैव, यथा 'असणं वा पाणं वा खाइमं वा' इत्यादौ वाकारचतुष्टयेनाशनादीनां भिन्नत्वम्, अन्यथा वाकारबाहुल्यं दूरे, वाकारमात्रस्यापि वैयर्थ्यापत्तेः, न ह्यभेदे वाकारप्रयोगः

संभवति, यथा नमोऽत्थु णं अरहंताणं भगवंताणं आइगराणमित्यादौ वाकाराणामनुक्तिः, अन्यथा अरहंताणं वा भगवंताणं वा आइगराणं वेत्यादि पाठरचनाप्रसक्तेः, तस्मात्त्रयाणां भिन्नार्थत्वे सिद्धे अर्हच्चैत्यानि जिनप्रतिमा भण्यन्ते इति सिद्धं सूत्रत एव चैत्यशब्देन जिनप्रतिमेति, ननु यदि तीर्थकरवत्तीर्थकरप्रतिमाऽपि शरणं भवेत् तर्हि सौधर्मदेवलोक एव बह्व्यः सन्निहिता जिनप्रतिमाः सन्ति तासां शरणं विहाय कथमियद्दूरं श्रीमहावीरमेवोपेयिवान्? यद्वा ज्योतिश्चक्रे नन्दीश्वरादौ च तासां प्रतिमानां विद्यमानत्वात् ता एव कथं न शरणतया प्रपेदे इति मम विकल्पना कथं निरस्येति चेत्, सत्यं, शृणु पुष्करवरद्वीपधातकीखण्डसंबन्धिषु भरतैरावतेषु श्रीमहावीरसदृशा अष्टौ जिनेन्द्राः छद्मस्थाः, केवलिनोऽपि महाविदेहसंबन्धिनो बहवोऽर्हन्तः केवलमनःपर्यायावधिमन्तोऽतिशयर्द्धिभाजश्चान्येऽप्यनगाराः अनेककोटीसंख्याकाः सन्ति तान् विहाय जम्बूद्वीपवर्त्तिनं श्रीमहावीरस्य चरणयोः शरणमुपागतश्चमरेन्द्र इत्यादिप्रतिबन्दीपर्यालोचनाबाणप्रहता लुम्पकविकल्पना शकुनी शक्तिरहिता तत्क्षणादेव प्राणमुक्ता अस्पृश्येति बोध्यं, किंच–चमरेन्द्रस्योर्ध्वगमने शक्तिरपि तीर्थकरादिनिश्रयैव भणिता, निश्रा च हे श्रीवीरजिन! हे श्रीस्थूलभद्रसाधो! शक्रपराजितस्य मे शरणं त्वमेव भवेत्यादिवचोभिरर्हदर्हत्प्रतिमासाधुभिः सहान्योऽन्यं निबन्धप्रतिज्ञा भण्यते, एवंविधां च प्रतिज्ञां निर्माप्य यद्यन्यत्र क्वापि याति गतश्च तत्र शरणं लभते तर्हि निश्रायाः करणं विफलमेव स्यात्, शक्रेणाप्यर्हदादेः शरणं कृत्वाऽऽगतो भविष्यतीति विचिन्तितं, यदागमः–"णो खलु विसए चमरस्स असुरिंदस्स असुररण्णो अप्पणो अ णिस्साए उड्ढं उप्पतित्ता जाव सोहम्मो कप्पो, णण्णत्थ अरिहंते वा अणगारे वा भाविअप्पणो णिस्साए उड्ढं उप्पतंति जाव सोहम्मो कप्पोत्ति" श्रीभग० शत० ४ उ० २, न पुनस्तद्वत् क्वापि शरणं गतो भविष्यतीति विचिन्तितं, तस्मादचमरविशेषमामाद्य यस्मादर्हदादेर्व्यक्त्या यथा शरणं कृतं तथैव तत्रागत्य विश्राम्यति,

यत एकेनापि पादन्यासेनासंख्यातयोजनकोटाकोटीर्व्यतिक्रामतश्चमरेन्द्रस्य कृतशरणोपयोगातिरिक्तस्थले चरमचरणन्यासस्याप्य-
संभवः, कथमन्तरालवर्तिनस्तीर्थकरादयोऽपि शरणं भवेयुः?, लोकेऽपि तथैव दृश्यमानत्वात्, ननु शक्रेण 'नन्नत्थ अरिहंते वा अण-
गारे वा भाविअप्पणो'इत्येवोक्तं, न पुनः अरहंतचेइआणि वेति तृतीयं पदं, तत्कथमिति चेदुच्यते, शक्रेणार्हदर्हच्चैत्ययोरभेदेनैव विव-
क्षणात्, न चैतदयुक्तं 'धूवं दाऊण जिणवराणं'मित्यागमवचनस्य संवादकत्वात्, एवं चार्हच्चैत्यशब्देनार्हत्साधुव्यतिरिक्ते वाच्ये सिद्धे
जिनप्रतिमैवेति सिद्धं। अथ जीवाभिगमो यथा-'तत्थ णं जे उत्तरिल्ले अंजणपव्वए तस्स णं चउद्दिसिं चत्तारि णंदापुक्खरणीओ पं०,
तं०-विजया वेजयंती जयंती अपराजिआ, सेसं तहेव जाव सिद्धाययणा, सव्वा चेइयघरवण्णणा णेअव्वा, तत्थ णं बहवे भवणवइ-
वाणमंतरजोइसिअवेमाणिआ देवा चाउम्मासिअपडिवएसु संवच्छरेसु अ अण्णेसु अ बहुसु जिणजम्मणनिक्खमणणाणुप्पायपरिणि-
व्वाणमाइएसु अ देवकज्जेसु देवसमुदएसु देवसमितीसु अ देवसमवाएसु अ देवपओअणेसु अ एगंतओ सहिआ समवायगया समाणा
पमुदितपक्कीलिआ अट्ठाहिआओ महामहिमाओ करेमाणा पालेमाणा सुहंसुहेणं विहरंति"त्ति (१८४) श्रीजीवाभिगमसूत्रे अञ्जन-
गिरिपर्वतवर्णनाधिकारे.अत्र 'चेइअघरवण्णणा'इत्यत्र चैत्यगृहं-जिनप्रतिमागृहमेव,अर्हत्साधोस्तत्रासंभवात्,किंच-अत्र चातुर्मासिक
सांवत्सरिकजिनजन्मादिदिवसेष्वञ्जनगिरिप्रभृतिष्वष्टाह्निकामहोत्सवं कुर्वाणाः प्रमुदिताः जिनप्रतिमापूजादिपरायणा भवनपत्यादयो
देवास्तिष्ठन्तीत्यादिभणनेन भवनपत्यादयो देवा अपि सम्यग्दृष्टय एवोक्ता भवन्ति, मिथ्यादृशामुक्तदिवसेषु तथाविधानुष्ठानपरा-
यणत्वासंभवात्, एतेन मिथ्यादृशोऽपि देवा जिनप्रतिमां पूजयन्ति शक्रस्तवं च पठन्तीत्यादिप्रलपनेन मुग्धजनान् विप्रतारयन्
उम्पाको निरस्त एव बोध्यः, मिथ्यादृशोऽपि जिनप्रतिमां पूजयित्वा शक्रस्तवं पठन्तीति क्वाप्यागमेऽनुपलम्भात्, ननु बहूणं देवाणं

संभवति, यथा नमोऽत्थु णं अरहंताणं भगवंताणं आइगराणमित्यादौ वाकाराणामनुक्तिः, अन्यथा अरहंताणं वा भगवंताणं वा आइगराणं वेत्यादि पाठरचनाप्रसक्तेः, तस्मात्त्रयाणां भिन्नार्थत्वे सिद्धे अर्हच्चैत्यानि जिनप्रतिमा भण्यन्ते इति सिद्धं सूत्रत एव चैत्यशब्देन जिनप्रतिमेति, ननु यदि तीर्थकरवत्तीर्थकरप्रतिमाऽपि शरणं भवेत् तर्हि सौधर्मदेवलोक एव बहव्यः सन्निहिता जिनप्रतिमाः सन्ति तासां शरणं विहाय कथमियद्दूरं श्रीमहावीरमेवोपेयिवान् ? यद्वा ज्योतिश्चक्रे नन्दीश्वरादौ च तासां प्रतिमानां विद्यमानत्वात् ता एव कथं न शरणतया प्रपेदे इति मम विकल्पना कथं निरस्येति चेत्, सत्यं, शृणु पुष्करवरद्वीपधातकीखण्डसंबन्धिषु भरतैरावतेषु श्रीमहावीरसदृशा अष्टौ जिनेन्द्राः छद्मस्थाः, केवलिनोऽपि महाविदेहसंबन्धिनो बहवोऽर्हन्तः केवलमनःपर्यायावधिमन्तोऽतिशयर्द्धिभाजश्चान्येऽप्यनगाराः अनेककोटीसंख्याकाः सन्ति तान् विहाय जम्बूद्वीपवर्त्तिनं श्रीमहावीरचरणयोः शरणमुपागतश्चमरेन्द्र इत्यादिप्रतिबन्दीपर्यालोचनावाणप्रहता लुम्पकविकल्पना शकुनी शक्तिरहिता तत्क्षणादेव प्राणमुक्ता अस्पृश्येति बोध्यं, किंच–चमरेन्द्रस्योर्ध्वंगमने शक्तिरपि तीर्थकरादिनिश्रयैव भणिता, निश्रा च हे श्रीवीरजिन ! हे श्रीस्थूलभद्रसाधो ! शक्रपराजितस्य मे शरणं त्वमेव भवेत्यादिवचोभिरर्हदर्हत्प्रतिमासाधुभिः सहान्योऽन्यं निबन्धप्रतिज्ञा भण्यते, एवंविधां च प्रतिज्ञां निर्माप्य यद्यन्यत्र क्वापि याति गतश्च तत्र शरणं लभते तर्हि निश्रायाः करणं विफलमेव स्यात्, शक्रेणाप्यर्हदादेः शरणं कृत्वाऽऽगतो भविष्यतीति विचिन्तितं, यदागमः–"णो खलु विसए चमरस्स असुरिंदस्स असुररण्णो अप्पणो अ णिस्साए उड्ढं उप्पतित्ता जाव सोहम्मो कप्पो, णण्णत्थ अरिहंते वा अणगारे वा भाविअप्पणो णिस्साए उड्ढं उप्पतंति जाव सोहम्मो कप्पोत्ति" श्रीभग० शत० ४ उ० २, न पुनस्तद्वत् क्वापि शरणं गतो भविष्यतीति विचिन्तितं, तस्मादवगम्यते(?)विशेषमामाद्य यस्यार्हदादेर्निश्रया यथा शरणं कृतं तथैव तत्रागत्य विश्राम्यति,

यत एकेनापि पादन्यासेनासंख्यातयोजनकोटाकोटीर्व्यतिक्रामतश्चमरेन्द्रस्य कृतशरणोपयोगातिरिक्तस्थले चरमचरणन्यासस्याप्य-संभवः, कथमन्तरालवर्त्तिनस्तीर्थंकरादयोऽपि शरणं भवेयुः?, लोकेऽपि तथैव दृश्यमानत्वात्, ननु शक्रेण 'नन्नत्थ अरिहंते वा अणगारे वा भाविअप्पणो'इत्येवोक्तं, न पुनः अरहंतचेइआणि वेति तृतीयं पदं, तत्कथमिति चेदुच्यते, शक्रेणार्हदर्हच्चैत्ययोरभेदेनैव विवक्षणात्, न चैतदयुक्तं 'धूवं दाऊण जिणवराणं'मित्यागमवचनस्य संवादकत्वाद्, एवं चार्हच्चैत्यशब्देनार्हत्साधुव्यतिरिक्ते वाच्ये सिद्धे जिनप्रतिमैवेति सिद्धं। अथ जीवाभिगमो यथा—'तत्थ णं से उत्तरिल्ले अंजणपव्वए तस्स णं चउद्दिसिं चत्तारि णंदापुक्खरणीओ पं०, तं०—विजया वेजयंती जयंती अपराजिआ, सेसं तहेव जाव सिद्धायतणा, सव्वा चेइयघरवण्णणा णेअव्वा, तत्थ णं बहवे भवणवइवाणमंतरजोइसिअवेमाणिआ देवा चाउम्मासिअपडिवएसु संवच्छरेसु अ अण्णेसु अ बहुसु जिणजम्मणनिक्खमणणाणुप्पायपरिणिव्वाणमाइएसु अ देवकज्जेसु देवसमुदएसु देवसमितीसु अ देवसमवाएसु अ देवपओअणेसु अ एगंतओ सहिआ समवायगया समाणा पमुदितपकीलिआ अट्ठाहिआओ महामहिमाओ करेमाणा पालेमाणा सुहंसुहेणं विहरंति"त्ति (१८४) श्रीजीवाभिगमसूत्रे अञ्जनगिरिपर्वतवर्णनाधिकारे.अत्र 'चेइअघरवण्णणा'इत्यत्र चैत्यगृहं-जिनप्रतिमागृहमेव,अर्हत्साधोस्तत्रासंभवात्,किंच—अत्र चातुर्मासिकसांवत्सरिकजिनजन्मादिदिवसेष्वञ्जनगिरिप्रभृतिष्वष्टाह्निकामहोत्सवं कुर्वाणाः प्रमुदिताः जिनप्रतिमापूजादिपरायणा भवनपत्यादयो देवास्तिष्ठन्तीत्यादिभणनेन भवनपत्यादयो देवा अपि सम्यग्दृष्टय एवोक्ता भवन्ति, मिथ्यादृशामुक्तदिवसेषु तथाविधानुष्ठानपरायणत्वासंभवाद्, एतेन मिथ्यादृशोऽपि देवा जिनप्रतिमां पूजयन्ति शक्रस्तवं च पठन्तीत्यादिप्रलपनेन मुग्धजनान् विप्रतारयन् लुम्पाको निरस्त एव बोध्यः, मिथ्यादृशोऽपि जिनप्रतिमां पूजयित्वा शक्रस्तवं पठन्तीति क्वाप्यागमेऽनुपलम्भात्, ननु बहूणं देवाणं

बहूणं देवीण य अयणिज्जाओ इत्यादिप्रवचनवचनात् मिथ्यादृशोऽपि जिनप्रतिमां पूजयन्ति,अन्यथा बहुशब्दस्य वैयर्थ्यापत्तेरितिचेन्मैवं, मिथ्यादृक्परिग्रहार्थं बहुशब्दस्यानुपादानात्, किंत्वेकैकस्मिन् विमाने संख्यातयोजनात्मके संख्याता असंख्यातयोजनात्मके चासंख्याताः सम्यग्दृशो देवाः सन्ति ते च जिनप्रतिमापूजादिपरायणा एवेति बहुशब्दप्रयोगस्य साफल्यम् ,अन्यथा "सव्वेसिं देवाणं सव्वासिं देवीणं अचणिज्जे"त्यादिपाठरचनाऽभविष्यत्, सा च नास्तीति बहुशब्देनैव प्रत्युत मिथ्यादृष्टयः परित्यक्ताः, ननु विमानाधिपतित्वेन यदा मिथ्यादृग् देव उत्पद्यते तदा तद्विमानगता जिनप्रतिमा मिथ्यादृगपि देवस्थित्या पूजयत्येवेति चेत्, मैवं, मिथ्यादृशां विमानाधिपतित्वेनोत्पादासंभवात्, विमानाधिपतिर्मिथ्यादृगपि स्यादित्यादिवचनस्य क्वाप्यागमेऽनुपलम्भात्, ननु शक्रसामानिकानामुपपातो निजनिजविमानेषु भणितः,यदागमः—"एवं खलु देवाणुप्पिआणं अंतेवासी तीसए णामं अणगारे पगइभद्दए जावविणीए छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं अप्पाणं भावेमाणे बहुपडिपुण्णाइं अट्ठ संवच्छराइं सामण्णपरिआगं पाउणित्ता मासिआए संलेहणाए अप्पाणं झोसेत्ता सट्ठिं भत्ताइं अणसणाए छेदेत्ता आलोइअपडिक्कंते कालमासे कालं किच्चा सोहम्मे कप्पे सयंसि विमाणंसि उववायसभाए देवसयणिज्जंसि दूसंतरिआए अंगुलस्स असंखेज्जइभागमित्ताए ओगाहणाए सक्कस्स देविंदस्स देवरण्णो सामाणिअदेवत्ताए उववण्णे"इत्यादि यावत् "गोअमा! महिड्ढिए जाव महाणुभावे, से णं तत्थ सक्कस्स विमाणस्स चउण्हं सामाणिअसाहस्सीणं चउण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणिआणं सत्तण्हं अणिआहिवईणं सोलसण्हं आयरक्खदेवसाहस्सीणं अण्णेसिं च बहूणं देवाण य देवीण य जाव विहरति"त्ति यावत् "सक्कस्स देविंदस्स देवरण्णो अवसेसा सामाणिआ देवा केमहिड्ढिआ तहेव सव्वं जाव एसणं"ति(१२९)श्रीभग० श० ३ उ० १,एवं निज २ विमानेषूत्पत्तिभणनेन सामानिका विमाना-

धिपतयः, तदन्तर्गतः संगमोऽपि विमानाधिपतिरप्यभव्यत्वान्नियमात् मिथ्यादृष्टिः देवस्थित्या निजविमानगता जिनप्रतिमाः पूजयति शक्रस्तवं च पठति, तत्र किं बाधकमितिचेन्मैवं, सम्यक्प्रवचनाभिप्रायापरिज्ञानात्, न हि 'सयंसि विमाणंसि' त्ति भणनेन पृथग्विमानाधिपतित्वं संभवति, भवनपतिज्योतिष्कसौधर्मेशानकल्पेन्द्राणामग्रमहिषीणामपि भवनविमानाधिपतित्वप्रसङ्गात्, तासां च नामग्राहमपि भवनविमानादेरुक्तत्वाद्, यदागमः—"तेणं कालेणं २ काली देवी चमरचंचाए रायहाणीए कालवडिंसए भवणे कालंसि सीहासणंसि चउहिं सामाणिअसाहस्सीहिं चउहिं महत्तरिआहिं सपरिवाराहिं तीहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणिआहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अण्णेहि अ बहुएहिं कालवडिंसयभवणवासीहिं असुरकुमारेहिं देवेहिं देवीहि अ सद्धिं संपरिवुडा महयाहयजावविहरति" त्ति श्रीज्ञात० २ श्रु० प्रथमवर्गे, तथा 'तेणं कालेणं २ सूरप्पभा देवी सूरंसि विमाणंसि सूरप्पभंसि सीहासणंसि महयाहयजावविहरति जहा काली" ति ज्ञाता०, तथा "तेणं कालेणं २ चंदप्पभादेवी चंदप्पभंसि विमाणंसि चंदप्पभंसि सीहासणंसि महयाजावविहरति जहा काली" ति ज्ञात०, तथा "तेणं कालेणं २ पउमादेवी सोहम्मे कप्पे पउमाभवडिंसयंसि विमाणंसि सभाए सोहम्माए पउमंसि सीहासणं महयाहयजावविहरति जहा काली" ति श्रीज्ञाता०, तथा "तेणं कालेणं २ कण्हादेवी ईसाणे कप्पे कण्हवडिंसए विमाणंसि कण्हंसि सीहासणंसि महयाजावविहरति" त्ति श्रीज्ञात०, ननु अग्रमहिषीणामपि पृथग् भवनविमानानि भवन्तीति चेन्मैवम्, आगमे अपरिगृहीतदेवीनामेव पृथग्विमानानां भणनात्, यदुक्तं—"अपरिग्गहदेवीणं विमाणलक्खा छ हुंति सोहम्मे" इत्यादि, अग्रमहिषीणामपि स्वतन्त्रविमानाधिपतित्वेऽपरिगृहीतदेवीनामिव शक्रस्य तासामप्याधिपत्यासंभवः स्यात्, नन्वेवं कथमितिचेच्छृणु, शक्रस्य प्रभुतावर्णनाधिकारे द्वात्रिंशल्लक्षविमानानामेवाधिपत्यमुक्तं, न पुनस्तद्वत्तद्विमानवासिदेवदेवीना-

बहूणं देवीण य अच्चणिज्जाओ इत्यादिप्रवचनरचनात् मिथ्यादृशोऽपि जिनप्रतिमां पूजयन्ति,अन्यथा बहुशब्दस्य वैयर्थ्यापत्तेरितिचेन्मैवं, मिथ्यादृक्परिग्रहार्थं बहुशब्दस्यानुपादानात्, किंत्वेकैकस्मिन् विमाने संख्यातयोजनात्मके संख्याता असंख्यातयोजनात्मके चासंख्याताः सम्यग्दृशो देवाः सन्ति ते च जिनप्रतिमापूजादिपरायणा एवेति बहुशब्दप्रयोगस्य साफल्यम्,अन्यथा "सव्वेसिं देवाणं सव्वासिं देवीणं अच्चणिज्जे"त्यादिपाठरचनाऽभविष्यत्, सा च नास्तीति बहुशब्देनैव प्रत्युत मिथ्यादृष्टयः परित्यक्ताः, ननु विमानाधिपतित्वेन यदा मिथ्यादृग् देव उत्पद्यते तदा तद्विमानगता जिनप्रतिमा मिथ्यादृगपि देवस्थित्या पूजयत्येवेति चेत्, मैवं, मिथ्यादृशां विमानाधिपतित्वेनोत्पादासंभवात्, विमानाधिपतिर्मिथ्यादृगपि स्यादित्यादिवचनस्य क्वाप्यागमेऽनुपलम्भात्, ननु शक्रसामानिकानामुपपातो निजनिजविमानेषु भणितः,यदागमः–"एवं खलु देवाणुप्पिआणं अंतेवासी तीसए णामं अणगारे पगइभद्दए जावविणीए छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं अप्पाणं भावेमाणे बहुपडिपुण्णाइं अट्ठ संवच्छराइं सामण्णपरिआगं पाउणित्ता मासिआए संलेहणाए अप्पाणं झोसेत्ता सट्ठिं भत्ताइं अणसणाए छेदेत्ता आलोइअपडिक्कंते कालमासे कालं किच्चा सोहम्मे कप्पे सयंसि विमाणंसि उववायसभाए देवसयणिज्जंसि दूसंतरिआए अंगुलस्स असंखेज्जइभागमित्ताए ओगाहणाए सक्कस्स देविंदस्स देवरण्णो सामाणिअदेवत्ताए उववण्णे"इत्यादि यावत् "गोअमा! महिड्ढिए जाव महाणुभावे, से णं तत्थ सकस्स विमाणस्स चउण्हं सामाणिअसाहस्सीणं चउण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणिआणं सत्तण्हं अणिआहिवईणं सोलसण्हं आयरक्खदेवसाहस्सीणं अण्णेसिं च बहूणं देवाण य देवीण य जाव विहरति"त्ति यावत् "सक्कस्स देविंदस्स देवरण्णो अवसेसा सामाणिआ देवा-केमहिड्डिआ तहेव सव्वं जाव एमणं"ति(१२९)श्रीभग० श० ३ उ० १,एवं निज २ विमानेषूत्पत्तिभणनेन सामानिका विमाना-

धिपतयः, तदन्तर्गतः संगमोऽपि विमानाधिपतिरप्यभव्यत्वान्नियमात् मिथ्यादृष्टिः देवस्थित्या निजविमानगता जिनप्रतिमाः पूजयति शक्रस्तवं च पठति, तत्र किं बाधकमितिचेन्मैवं, सम्यक्प्रवचनाभिप्रायापरिज्ञानात्, न हि 'सयंसि विमाणंसि'त्ति भणनेन पृथग्विमानाधिपतित्वं संभवति, भवनपतिज्योतिष्कसौधर्मेशानकल्पेन्द्राणामग्रमहिषीणामपि भवनविमानाधिपतित्वप्रसङ्गात्, तासां च नामग्राहमपि भवनविमानादेरुक्तत्वाद्, यदागमः-"तेणं कालेणं २ काली देवी चमरचंचाए रायहाणीए कालवडिंसए भवणे कालंसि सीहासणंसि चउहिं सामाणिअसाहस्सीहिं चउहिं महत्तरिआहिं सपरिवाराहिं तीहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणिआहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अण्णेहि अ बहुएहिं कालवडिंसयभवणवासीहिं असुरकुमारेहिं देवेहिं देवीहि अ सद्धिं संपरिवुडा महयाहयजावविहरति"त्ति श्रीज्ञात० २ श्रु० प्रथमवर्गे, तथा 'तेणं कालेणं २ सूरप्पभा देवी सूरंसि विमाणंसि सूरप्पभंसि सीहासणंसि महयाहयजावविहरति जहा काली"ति ज्ञाता०, तथा "तेणं कालेणं २ चंदप्पभादेवी चंदप्पभंसि विमाणंसि चंदप्पभंसि सीहासणंसि महयाजावविहरति जहा काली"ति ज्ञात०,तथा "तेणं कालेणं २ पउमादेवी सोहम्मे कप्पे पउमाभवडिंसयंसि विमाणंसि सभाए सोहम्माए पउमंसि सीहासणं महयाहयजावविहरति जहा काली"त्ति श्रीज्ञात्ता०, तथा "तेणं कालेणं २ कण्हादेवी ईसाणे कप्पे कण्हवडिंसए विमाणंसि कण्हंसि सीहासणंसि महयाजावविहरति"त्ति श्रीज्ञात०, ननु अग्रमहिषीणामपि पृथग् भवनविमानानि भवन्तीति चेन्मैवम्, आगमे अपरिगृहीतदेवीनामेव पृथग्विमानानां भणनात्, यदुक्तं-"अपरिग्गहदेवीणं विमाणलक्खा छ हुंति सोहम्मे"इत्यादि, अग्रमहिषीणामपि स्वतन्त्रविमानाधिपतित्वेऽपरिगृहीतदेवीनामिव शक्रस्य तासामप्याधिपत्यासंभवः स्यात्, नन्वेवं कथमितिचेच्छृणु, शक्रस्य प्रस्तुतावर्णनाधिकारे द्वात्रिंशल्लक्षविमानानामेवाधिपत्यमुक्तं, न पुनस्तद्वत्तद्विमानवासिदेवदेवीना-

विमानपतः सम्यग्दृष्टित्वं

मपि, यदागमः-"तेणं कालेणं २ सक्के देविंदे देवराया वज्जपाणी पुरंदरे सतक्कतू सहसक्खे मघवं पागसासणे दाहिणड्ढलोगाहिवई बत्तीसविमाणावाससयसहस्साहिवई एरावणवाहणे सुरिंदे अरयंबरवत्थधरे आलइअमालमउडे नवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगल्ले भासुरबोंदी पलंबवणमाले महिड्ढीए महज्जुईए महब्बले महायसे महाणुभावे महासोक्खे सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सभाए सोहम्माए सक्कंसि सीहासणंसि बत्तीसाए विमाणावाससयसाहस्सीणं चउरासीए सामाणिअसाहस्सीणं तायत्तीसाए तायत्तीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणिआणं सत्तण्हं अणिआहिवईणं चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं अण्णेसिं च बहूणं सोहम्मकप्पवासीणं विमाणिआणं देवाण य देवीण य, अण्णे पढंति-अण्णेसिं च बहूणं देवाण य देवीण य आभिओउववण्णगाण आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयनट्टगीअवाईअतंतीतलतालतुडिअघणमुइंगपडुपडहप्पवाइअरवेण दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ"-त्ति श्रीजंबूद्वीपप्रज्ञप्तौ, अत्र द्वात्रिंशद्विमानानामेवाधिपत्यमुक्तं, न पुनः "सत्तण्हं अणिआणं सत्तण्हं अणिआहिवईणं" इत्यादिवत् बत्तीसाए विमाणावाससयसाहस्सीणं बत्तीसविमाणवाससयसहस्साहिवईण'मित्यादि भणितं, तथा 'अण्णेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणिआणं देवाण य देवीण ये'त्याद्युक्तं, न पुनः 'सव्वेसिं सोहम्मकप्पवासीण'मित्यादि, तत्रापि बहुशब्देनाभियोगादिदेवत्वेनोत्पन्नास्त एव नान्येऽपि, अत एवात्रैव 'अण्णे पढंति अण्णेसिं च बहूणं देवाण य देवीण य आभिओगउववण्णगाण'मितिपाठोक्तिः, तत्साधात्वानिन्द्रपरिकरत्वात् सर्वोऽपि शक्रनिवासविमान एवोत्पद्यते, नान्यत्र, तथा च स्वकीयविमानशब्देनैकस्मिन्नेव विमाने यस्य देवादेर्यावान् प्रदेशो विमानैकदेशभूतः स्वस्वप्रभुत्वादिना नियतस्तस्य तावान् स प्रदेशो निजविमानं भण्यते, अत एव काल-

नामकं भवनं चरमचश्चाराजधान्या एकदेशरूपमपि भवनत्वेनागमे भणितं प्राक् प्रदर्शितं, एवं यथा चन्द्रसूर्यादीनामग्रमहिषीणां चन्द्रसूर्यादिविमानैकदेश एव निज २ नाम्ना विमानतया भणितः तथा तत्सामानिकानामपि बोध्यम्, अन्यथा ज्योतिष्केन्द्रसामानिकानामपि पृथग्विमानकल्पने ज्योतिष्काणां पञ्चप्रकारतानियमभङ्गः स्याद्, अत एव "ससिरविगहनक्खत्ता" इत्यादिप्रवचने शशिप्रमुखशब्दैः शशिप्रमुखविमानवासिनः सर्वेऽपि तत्तन्नाममिरेव गृहीता बोध्याः, किंच–जिनजन्मादिषु सामानिकादीनां पालकविमानेनैवागमनमागमे भणितं, न पुनः शेषदेवादीनामिव निजनिजविमानवाहनादिभिरिति, एतच्च जम्बूद्वीपप्रज्ञप्तितो बोध्यं, तथा सौधर्मदेवलोकं गतेन चमरेन्द्रेणापि शक्रपरिकर एवाक्रोशविषयीकृतो, न पुनरितरे केऽपि, किंच–सामानिकानां महर्द्धिकत्वात् पृथक् विमानकल्पनं यत्तदप्यसंगतं, देवलोकेषु सामानिकापेक्षया विमानानामप्यल्पसंख्याकत्वात्, यतः सहस्रारे षट् सहस्राणि विमानानां सामानिकास्तु त्रिंशत्सहस्राः, आनतप्राणतयोः समुदितयोश्चत्वारि शतानि विमानानां सामानिकास्तु विंशतिः सहस्राः, आरणाच्युतयोः समुदितयोस्त्रीणि शतानि विमानानां सामानिकास्तु दश सहस्राः, यदागमः–"छच्च सहस्सा सहस्सारे । आणयपाणयकप्पे चत्तारि सया आरणच्चुए तिण्णि सय"त्ति विमानसंख्या, तथा 'चउरासीती बावत्तरी सत्तरी अ सट्ठीआ । पण्णा चत्तालीसा तीसा वीसा दस सहस्सा ॥१॥' इति सामानिकसंख्या श्रीजम्बूद्वीप०, यत्तु "सामानिकैर्हसमानो,यानकाख्यविमानतः । स शिष्टैः कीर्णवायुष्को, मेरुचूलां सुरो ययौ ॥१॥"इति श्रीमहावीरचरित्रे यानकविमानं भणितं तदेतन्नाम्ना शक्रविमानैकदेशो बोध्यः,तत्र च चमरचञ्चाराजराजधानीदेशः कालकभवनं दृष्टान्त इति, एवं च सति शक्रसामानिकोऽप्यभव्यः संगमको विमानाधिपतिर्न स्यादेवेति संपन्नं, किंच–मिथ्यादृष्टिर्देवत्वेनोत्पद्यमानो विषयादिषु गृद्ध एवोत्पद्यते, तत्र च 'किं मे पुव्विं करणिज्जं किं मे पच्छा

करणिज्ज'मित्यादिपर्यायलोचनापुरस्सरं पुस्तकरत्नाद्धार्मिकं व्यवसायं गृह्णातीति विचार्यमाणं युक्तिमपि न सहते, न च युक्त्या विचारणमयुक्तं,तस्या अप्यनुज्ञातत्वात् ,यदुक्तं–"तह(अह)वक्खाणेअव्वं जहा जहा तस्स अवगमो होइ। आगमियमागमेणं जुत्तीगम्मं तु जुत्तीए॥१॥"त्ति (९९१) पञ्चवस्तुके, यच्चौष्ट्रिकेण संदेहदोलावल्यादौ 'एवं च सम्यग्दृष्टिभाविताः प्रतिमा एव ज्ञानदर्शन-चारित्ररूपभावहेतुत्वादायतनं, नेतरा इत्यायातं,द्रव्यलिङ्गिपरिगृहीतास्तु प्रतिमा न सम्यग्दृष्टिभाविताः,द्रव्यलिङ्गिनां मिथ्यादृष्टि-त्वात् , एतच्च किंचित्साधितं साधयिष्यते च इति कथमायतनं स्युः ?,ननु 'दव्वंमि जिणहराई'त्यनेनौघनिर्युक्तिवाक्येन प्रतिमानां द्रव्यायतनत्वमेवोक्तमितिचेत्सत्यं,किंतु सम्यग्दृष्टिभावितानामेव,नेतरासामामित्यवधार्यम् , अन्यथा दिगम्बरसंबन्धिजिनगृहप्रतिमा-नामपि द्रव्यायतनत्वं स्यात् , नन्वेवं तर्हि संगमकप्रायमहामिथ्यादृष्टिदेवविमानस्थितसिद्धायतनप्रतिमा अपि नायतनमिति चेन्न,नित्य-चैत्येषु हि संगमकवदभव्या अपि देवा मदीयमिदमिति बहुमानात् कल्पस्थितव्यवस्थानुरोधात्तदद्भुतप्रभावाद्वा न कदाचिदसमंजस-क्रियाः आरभन्ते, यदुक्तमागमे–"देवहरयम्मि देवा विसयविमोहिआवि न कयावि। अच्छरसाहिंपि समं हासकिड्डाइ पकरिंति ॥१॥"त्ति, किंच–चतुःषष्टिरपीन्द्रा देवाधिपतित्वेन महासम्यग्दृष्टित्वेन स्वस्वप्रतिबद्धसर्वसिद्धायतनशुद्धिविधानैकप्रवणा एवेत्येतेषु विजयमानेषु को नामात्महितैषी नित्यचैत्येष्वात्मविमानस्थत्वेन नीत्यतिक्रमणमारभते ?, मिथ्यादृष्टिभावितत्वं च चैत्यानां तत्प्रव-र्तितासमञ्जसाचारकलुषितत्वं, तच्च शाश्वतप्रतिमानां नास्तीति ता भावग्रामत्वं न व्यभिचरन्त्येव,तथा चायतनमेव, आयतनभावग्राम-योरेकार्थत्वात्, किंच–अत्यन्तमसंबुद्धाचार्यो भवान् यद्भक्तिचैत्यविचारमारभ्य नित्यचैत्यैर्व्यभिचारमुद्भावितवान् ,परं सोऽप्यागम-नीत्याऽस्माभिर्निराकृत इति, द्रव्यलिङ्गिपरिगृहीतानि तु चैत्यानि मिथ्यात्वकारणाचारकलुषितत्वादनायतनमेव, तथा च सति निह्न-

वेष्विव तेषु दृष्टेषु यदि कस्यापि सम्यक्त्वमुत्पद्यते, उत्पद्यतां नाम, तथापि मिथ्यात्वभावितत्वात्तान्यनायतनमेव निह्नववत्, यदुक्तं-
"जइविहु सम्मुप्पाओ कस्सवि दट्ठूण निण्हवे हुजा। मिच्छत्तहयमईआ तहावि ते वज्जणिज्जाउ॥१॥" इति, नन्वनायतनत्वे सति किं-
जायतां तासाम्?, उच्यते, असेव्यत्वं, यदुक्तमावश्यके-"खणमवि न खमं काउं अणाययणसेवणं सुविहिआणं। जगंधं होइ वणं
तग्गंधो मारुओ वाति॥१॥"त्ति, तथा च प्रयोगः-विवादाध्यासितं परतीर्थिकापरिगृहीतमपि श्वेताम्बरयतिप्रतिष्ठितमप्यव्यङ्गमप्य-
र्हद्बिम्बं सुविहितानामवन्द्यमनधिकारिपरिगृहीतत्वात्, यदेवं तदेवं यथा मातङ्गपाटकान्तर्गतजैनमातङ्गगृहीतार्हच्चैत्यं, नहि परतीर्थिका-
परिगृहीतमपि श्वेताम्बरयतिप्रतिष्ठितमप्यव्यङ्गमपि मातङ्गपरिगृहीतार्हच्चैत्यं चतुर्मासिकादिपर्वस्वपि कैश्चिदपि मातङ्गव्यतिरिक्तैर्वन्द्यते,
अथ मातङ्गैर्वन्द्यमानत्वाद्वन्द्यमेव, न, एवं हि बोटिकादिभिर्वन्द्यमानत्वादन्यतीर्थिकपरिगृहीतार्हच्चैत्यस्यापि वन्द्यत्वप्रसंगः, सर्वसंगपरि-
त्यागित्वेन च यतीनां प्रतिमापरिग्रहेऽनधिकारित्वमेव, तथा च तत्परिगृहीता अर्हत्प्रतिमा अवन्द्या एवेति सिद्धम्, अत्र च विस्तरः
प्रद्युम्नाचार्यपक्षतक्षकश्रीजिनपतिसूरिकृतवादस्थलेभ्योऽवसेय इत्यादिना संगमकोऽपि शक्रसामानिकत्वाद्विमानाधिपतिर्भवि-
ष्यतीतिभ्रान्त्या आक्षेपपरिहाराभ्यां काचपिच्यं विरचितं तदपि निरस्तं बोध्यं, मुख्यविमानाधिपतितया मिथ्यादृष्टेरुत्पत्तेरसंभवात्,
तच्चानन्तरमेवागमानुगतयुक्त्या व्यक्तीकृतमिति, किंच-संदेहदोलावल्यां "तथा च प्रयोगो-विवादाध्यासितं परतीर्थिकापरिगृहीतम-
पीत्याद्यनुमानैर्यन्मातङ्गपरिगृहीतमर्हच्चैत्यं दृष्टान्तीकृतं तत्किमागमसिद्धं लोकसिद्धं वा?, उभयथापि खरविषाणकल्पं, यतो मातङ्ग-
पाटकेऽर्हच्चैत्यमित्यागमे नोक्तं, लोकेऽप्यदृश्यमानं, किंच-युक्त्याऽप्यक्षमं, यदि मातङ्गो मिथ्यादृष्टिस्तर्हि अर्हच्चैत्यपरिग्रहो न
संभवति, प्रयोजनाभावात्, सम्यग्दृष्टिश्चेत्तर्हि अशुचिलिप्तपादपुरुषवत् मातङ्गोऽपि तदाशातनाभीत्या जिनप्रतिमां न स्पृशति, किंच-

अनुस्वरतरमनालोच्यानुचितवक्तारो, यतः कादाचित्कापावित्र्यभाजः कुलजा अपि सम्यग्दृशः स्त्रियो जिनप्रतिमां न स्पृशन्तीति भणित्वाऽपि तथाविधापावित्र्यावस्थामापन्नानामस्पृश्योऽपि सम्यग्दृग् मातङ्गो जिनप्रतिमां स्पृशतीत्यसमञ्जसं भणन् स्वगलपादुकामपि न वेत्ति, तथा समवसरणस्थितमर्हन्तमिव जिनप्रतिमामपि स्त्रियो न स्पृशन्तीति जिनदत्तेन निजकुलके भणितमिति खरतरमतविश्रामे दर्शितम्, एवं च सति कथं मातङ्गस्पर्शः प्रतिमाया युक्तः?, अन्यथा भावजिनेऽपि तथाप्रसङ्गः, तेन नित्यचैत्येषु हि संगमकदभव्या अपि देवा मदीयमिदमिति बहुमानात् कल्पस्थितिव्यवस्थानुरोधाच्चदद्भुतप्रभावाद्वेत्यादि विकल्पितं तदालजालकल्पम्, एवं क्वाप्यनुक्तत्वादश्रुतत्वाच्च, तस्मादनादिसिद्धकल्पस्थितिरेव तावदियं यद्विमानाधिपतिर्मिथ्यादृष्टिर्न भवत्येव, यच्चोक्तं-"देवहरयंमि देवा विसयविसमोहिआवि न कयावि" इत्यादि तत्र सम्यग्दृष्टेरेव तथा स्वभावो, न पुनर्मिथ्यादृष्टेरपि, यतः-"पंचहिं ठाणेहिं जीवा सुलहबोहियत्ताए कम्मं पकरिंति, तं०-अरहंताणं वण्णं वदमाणे० विवक्कतवबंभचेराणं देवाणं वण्णं वदमाणे"त्ति श्रीस्थानाङ्गे (४२६) अर्हदादिपङ्क्तिव्यवस्थितानां देवानामर्हदादीनामिव वर्णवादो बोधिसुलभताहेतुर्भणितः, तत्र वर्णवादः देवानां 'अहदेवाण य सीलं विसयविसमोहिआवि जिणभवणे। अच्छरसाईहिं समं हासाई जेण न कुणंति॥१॥'त्तिरूपः, सच सम्यग्दृशामेव बोध्यः, न पुनर्मिथ्यादृशामपि, तेषां वर्णवादे दूरे बोधिसुलभता, प्रत्युत सम्यक्त्वदूषणं, यदुक्तं-"शङ्काकाङ्क्षाविचिकित्सामिथ्यादृष्टिप्रशंसनम्। तत्संस्तवश्च पञ्चापि, सम्यक्त्वं दूषयन्त्यमी॥१॥" इति, ननु जिनप्रतिमासु तथाविधाध्यवसायो मिथ्यादृशामप्यनुमोदनाविषयो युक्त इति चेन्मैवं, इमा जिनप्रतिमा अर्हत इवाराध्या मोक्षदात्रीति सम्यग्बुद्धेरविषयत्वात्, तथात्वे च मिथ्यादृष्टित्वासंभवात्, सम्यग्ज्ञानमिथ्याज्ञानयोरेकदैकत्रासमावेशात्, यदागमः-"जस्स णाणा तस्स अण्णाणा णत्थि, जस्स अण्णाणा तस्स णाणा-

मिथ्यादृग् न विमानपतिः

णत्थित्ति श्रीप्रज्ञापनायां, इत्यादि सम्यक्पर्यालोचनया कुपाक्षिकविकल्पिताक्षेपादिपरिहारोऽकिञ्चित्करतयैव प्रतिभासते शुद्धबुद्धीनामित्यलं प्रपञ्चेन, ननु जीवो हि सम्यक्त्वमसंख्येयोत्सर्पिण्यवसर्पिणीसमयप्रमाणासंख्येयवारानेवोत्कर्षतोऽपि लभते, न पुनरनन्तशो वारान्, जीवस्तु भवनपत्यादिसौधर्मेशानपर्यन्तेषु देवादिस्थानेषु देवत्वेन देवीत्वेन वाऽनन्तश उत्पन्नः,सनत्कुमारादिग्रैवेयकपर्यन्तेषु च देवत्वेनैव, तत्र देवीनामुत्पादाभावात्, यदागमः–"अयं णं भंते! जीवे चउसट्ठीए असुरकुमारावाससयसहस्सेसु एगमेगंसि असुरकुमारावासंसि पुढविकाइयत्ताए जाववणप्फइकाइअत्ताए देवत्ताए देवित्ताए आसणसयणभंडमत्तोवगरणत्ताए उप्पण्णपुव्वे?, हंता गो०! असइं अदुवा अणंतखुत्तो, सव्वजीवेवि णं भंते!, एवं चेव, एवं जाव थणिअकुमारेसु, णाणत्तं आवासेसु, आवासा पुव्वभणिआ इत्यादि यावत् वाणमंतरजोइसिअसोहम्मीसाणेसु अ जहा असुरकुमाराणं"ति श्रीभग० श० १२ उ० ७, तथा 'अयं णं भंते! जीवे सणंकुमारकप्पे बारससु विमाणावाससयसहस्सेसु एगमेगंसि विमाणिआवासंसि पुढविकाइअत्ताए सेसं जहा असुरकुमाराणं जावअणंतखुत्तो, णो चेव णं देवित्ताए, एवं सव्वजीवावि, एवं जाव आणयपाणएसु, एवं आरणअच्चुएसुवि, अयं णं भंते! जीवे तीसुवि अट्ठारसुत्तरेसु गेविज्जविमाणवाससएसु एवं चेव"त्ति श्रीभग० श० १२ उ० ७, एवं चैकस्मिन् स्थानेऽनन्तश उत्पाद्यमाना विमानाधिपतित्वेनेन्द्रोऽन्यो वाऽनन्तश उत्पन्नः, तथा च सिद्धं युक्त्याऽनन्तशो विमानाधिपतिरपि मिथ्यादृगेवेतिचेन्मैवं, कुपाक्षिकविकल्पिते युक्तेर्गन्धस्याप्यभावाद्, यतस्तत्रासुरकुमारावासेषु व्यन्तरज्योतिष्कसौधर्मेशानेषु सनत्कुमारकल्पे द्वादशस्वपि विमानावासशतसहस्रेष्वित्यादिवचोरचनया भवनविमानादीन्येवोक्तानि, न पुनर्यावन्ति देवानां देवीनां चोत्पादशय्यादिलक्षणानि स्थानानि तेषु सकलेष्वपि प्रत्येकं देवत्वेन देवीत्वेन चानन्तश उत्पन्नपूर्व इत्युक्तं, तथा च न किञ्चिदनुपपन्नं, सौधर्मा-

दिदेवलोकेषु यथासंभवं देवत्वेन देवीत्वेन चानन्तश उत्पद्यमानोऽपि न विमानाधिपतित्वेनापि, किंतु नियतसम्यक्त्वाद्युत्पत्तिस्था-
नातिरिक्तेष्वेव स्थानेषु यथासंभवं देवादित्वेनोत्पन्नपूर्व एवेत्याकूतं, अन्यथा चमरेन्द्रादीशानेन्द्रपर्यन्तानामुत्पादशय्यादिस्थानेष्वपि
देवीत्वेन ईशानदेवलोकादिदेवीस्थानेषु देवत्वेन दशलक्षप्रमाणदेवीविमानेषु विमानाधिपतिदेवत्वेनैव चोत्पादप्रसक्त्या जगद्व्यवस्था-
भङ्गः स्यात्, तथा सर्वत्रापि वनस्पत्यादित्वेनाप्यनन्तश उत्पादो भणितः सोऽपि यदि सर्वस्थानेषु भण्यते तदा शक्रस्थाने वृक्षोऽ-
प्युत्पद्येत, तथा चाशिक्षितनृत्यमिव लोकविगोपनादि स्यात्,निर्गुरुनाटकस्य तथा स्वभावाद्, उक्तं–"नहि भवति निर्विगोपकमनुपा-
सितगुरुकुलस्य विज्ञानम्। प्रकटितपश्चाद्भागं पश्यत नृत्यं मयूरस्य ॥१॥" इत्यादि, ननु यदुक्तं देव्युत्पादशय्यादिस्थाने देवत्वेन
देवोत्पादशय्यादिस्थाने देवीत्वेन इन्द्रस्थाने वृक्षत्वेनोत्पादे जगद्व्यवस्थाभङ्ग इत्यादि तदयुक्तं, यथासंभवमेवोत्पत्तिरस्माकं सम्मता,
न पुनर्जगद्व्यवस्थाविलोपेनापीति चेच्चिरं जीव, आयातोऽसि स्वयमेवास्मदुक्तमार्गेण, यतो विमानाधिपतिरिन्द्रोऽन्यो वा सम्यग्दृष्टि-
रेव स्यात्, न मिथ्यादृष्टिरिति जगत्स्थितिः, यथाऽनन्तशो राजत्वेनोत्पन्नोऽपि न चक्रवर्त्तिबलदेववासुदेवादिपदवीसंयुक्त उत्पन्नः,
अत एव मिथ्यादृशस्तामलिप्रभृतितापसा अपीन्द्रत्वेनोत्पन्ना इन्द्रतयोत्पत्त्यभिमुखीभूता वा उत्पत्तिस्थानविशेषमाहात्म्यात्सम्यग्दृ-
ष्टय एव जाताः, कथं तत्र मिथ्यादृष्टिगन्धवार्त्ताऽपि प्रवचनविदां संभवतीति प्रसङ्गतोऽभिहितं। अथ प्रकृतमुच्यते–यत्तु चैत्यशब्देन
ज्ञानमिति लुम्पकविकल्पनं तन्महदज्ञानं,"चैत्यं जिनौकस्तद्बिम्बं,चैत्यो जिनसभातरुः। उद्देशवृक्षश्चैत्य"इत्यनेकार्थनाममालाया-
मपि चत्वार एवार्था उक्ताः, तत्र ज्ञानार्थस्यानुक्तत्वात्, यत्तु 'गुणसिलए चेइए'इत्यादौ चैत्यशब्देन यक्षादीनां प्रतिमा वाच्या तद्-
देशवृक्षसंबन्धाद्बहुप्रतिमाधर्मसाधर्म्याद्वोपचरितं बोध्यम्, अत एव चैत्यशब्देन यक्षादीनामपि प्रतिमैव भण्यते, न पुनः साक्षाद्य-

क्षादयस्तापसादयो वा, तत्रोपचारस्याप्यसंभवाद्, एवं चैत्यशब्देन सूत्रसम्मत्यैव जिनप्रतिमां समर्थ्य चैत्यशब्देन न साधुर्नवाऽर्हन् भण्यते इति सूत्रसम्मत्यैव समर्थयन्नाह–'रायपसेणिअ'त्ति राजप्रश्नीयज्ञाताधर्मयोश्चैत्यशब्देन न साधुर्नवाऽर्हन्निति भण्यते, तथाहि–'तए णं तस्स चित्तस्स सारहिस्स तं महाजणसद्दं जणकलकलं च सुणेत्ता पासेत्ता इमेआरूवे अब्भत्थिए जाव समुप्पज्झित्था–किण्हं अज्ज जाव सावत्थीए नयरीए इंदमहेइ वा खंदमहेइ वा रुद्दमहेइ वा मउंदमहेइ वा नागमहेइ वा भूअमहेइ वा जक्खमहेइ वा थूभमहेइ वा चेइअमहेइ वा रूक्खमहेइ वा गिरिमहेइ वा दरिमहेइ वा अगडमहेइ वा तडागमहेइ वा नईमहेइ वा सरमहेइ वा सागरमहेइ वा जण्णं इमे बहवे उग्गा भोगा राइण्णा खत्तिआ इक्खागा कोरव्वा जाव इब्भा इब्भपुत्ता ण्हाया कयबलिकम्मा जहोचवाइए जाव अप्पेगइआ हयगया अप्पेगइया गयगया अप्पेगइआ पादचारविहारेण महया वंदावंदेहिं णिग्गच्छंति,एवं संपेहेइ २ त्ता कंचुइअपुरिसं सद्दावेइ २त्ता एवं वयासी–किण्हं भो देवाणुप्पिआ ! अज्ज सावत्थीए णयरीए इंदमहेइ वा जाव सागरमहेइ वा जेणं इमे बहवे उग्गा भोगा० णिग्गच्छंति ?, तएणं से कंचुइपुरिसे केसिस्स कुमारसमणस्स आगमणगहिअविणिच्छए चित्तं सारहिं करयलपरिग्गहिअं जाव वद्धावेत्ता एवं वयासी–णो खलु देवाणुप्पिआ ! अज्ज सावत्थीए णयरीए इंदमहेइ वा जाव सागरमहेइ वा जेणं इमे बहवे जाव वंदावंदेहिं णिग्गच्छंति,एवं खलु भो देवाणुपिए ! पासावच्चिज्जे केसीनामं कुमारसमणे जाव दूइज्जमाणे इहमागए जाव विहरइ''त्ति(५४) श्रीराजप्रश्नीयोपाङ्गे,अत्र चैत्यमहोत्सवनिषेधेन न चैत्यशब्देन साधुर्भण्यते इति दर्शितं,अथार्हद्वाच्यत्वाभावं दर्शयन्नाह–''णाये'त्यादि ज्ञातधर्मकथाङ्गे चैत्यशब्देन नार्हन् भण्यते,तथाहि–''तए णं से मेहे कुमारे ते बहवे उग्गे भोगे जाव एगदिसाभिमुहे णिग्गच्छमाणे पासइ २त्ता कंचुइअपुरिसं सद्दावेइ २त्ता एवं वयासी–किण्णं देवाणुप्पिआ ! अज्ज रायगिहे

णयरे इंदमहेति वा खंदमहेति वा एवं रुद्दसिववेसमणजक्खभूअनंदितलावरुक्खचेइअपव्वयउज्जाण० गिरिजत्ताइ वा, जओ णं उग्गा भोगा जाव एगदिसं एगाभिमुहा निग्गच्छंति ?, तए णं से कंचुइज्जपुरिसे समणस्स भगवओ महावीरस्स गहिअआगमपवित्तीए मेहं कुमारं एवं वयासी–णो खलु देवाणुप्पिआ ! अज्ज रायगिहे णयरे इंदमहेति वा जाव गिरिजत्ताइ वा जण्णं एए उग्गा जाव एगदिसं एगाभिमुहा णिग्गच्छंति, एवं खलु देवाणु०! समणे भगवं महावीरे आइगरे तित्थयरे इहमागए इह संपत्ते इह समोसढे इह चेव रायगिहे णगरे गुणसिलए चेइए अहापडिरूवे जाव विहरति"त्ति श्रीज्ञाताधर्मकथाङ्गे, अत्र श्रीमहावीरे समागतेऽपि नो चैत्यमहोत्सव इति भणनेन चैत्यशब्दवाच्योऽर्हन्न भवत्येवेति दर्शितं १॥ इति चैत्यशब्दस्यार्थो जिनप्रतिमेति निर्णीतमितिगाथार्थः ॥१५५॥ अथ नियतक्रियासु जिनप्रतिमानामुपयोगमाह—

चेइअवंदणमुत्तरअज्झयणे साहुनिअयकिरिआसु । सावयकिरिआइ पुणो महाणिसीहाइसुत्तेसु ॥१५६॥

चैत्यवन्दन–जिनप्रतिमावन्दनं श्रीउत्तराध्ययने साधुनियतक्रियासु भणितमितिगम्यं, तथाहि–"थयथुइमंगलेणं भंते ! जीवे० थयथुइमंगलेणं णाणदंसणचरित्तबोहिलाभं संजणइ, णाणदंसणचरित्तबोहिलाभसंपण्णे अ णं जीवे अंतकिरिअं कप्पविमाणोववत्तिअं आराहणं आहारेति" १४ (२८) इति श्रीउत्तराध्ययने २९,एतद्वृत्त्येकदेशो यथा 'अत्र चोत्तरगुणप्रत्याख्यानान्तर्भूतं नमस्कारसहितादि, तद्ग्रहणानन्तरं च यत्र सन्निहितानि चैत्यानि (तत्र) तद्वन्दनं विधेयमित्युक्तं प्राग्, तच्च न स्तुतिस्तवमङ्गलं विनेति तदाह–तत्र 'स्तवा'देवेन्द्रस्तवादयः स्तुतयः–एकादिसप्तश्लोकान्ता इत्यादियावत् स्तुतिस्तवा एव मङ्गलं–भावमङ्गलरूपं स्तुतिस्तवमङ्गलं तेन ज्ञानदर्शनचारित्रात्मिका बोधिस्तस्या लाभो ज्ञानदर्शनचारित्रबोधिलाभः, परिपूर्णजिनधर्मावाप्तिरित्यर्थः, तं जनयति,

उक्तं च–"भत्तीइ जिणवराणं परमाए खीणपिज्जदोसाणं। आरुग्गबोहिलाभं समाहिमरणं च पाविंति ॥१॥"इत्यादि श्रीउत्तरा० बृह०, अत्र प्रतिमानां पुरस्तात्स्तुतिस्तवमङ्गलं ज्ञानदर्शनचारित्रबोधिलाभहेतुर्भणितम्, अत एव रात्रिकप्रतिक्रमणे नमस्कारादिप्रत्याख्याना-नन्तरं सन्निहितचैत्यानां वन्दनं साधुसामाचार्यामपि भणितं, यदागमः–"पारिअकाउस्सग्गो, वंदित्ताण तओ गुरुं। तवं संपडिव-ज्जित्ता, करिज्ज सिद्धाण संथवं ॥१॥"(१०४२)इति श्रीउत्त० २६, एतद्वृत्त्येकदेशो यथा नवरं तपो–यथाशक्ति चिन्तितमुपवासादि संपतिपद्य–अङ्गीकृत्य कुर्यात् सिद्धानां संस्तवं–स्तुतित्रयरूपं, तदनु च यत्र चैत्यानि सन्ति तत्र तद्वन्दनं विधेयं, तथाह भाष्यकारः–"वंदित्तु निवेयंती कालं तो चेइआइं जइ अत्थि। तो वंदंती कालं जह तुलेउं पडिक्कमणं॥१॥"ति श्रीउ० बृह०।"पारिअकाउस्सग्गो (सिद्धाण संथवं किच्चा) वंदित्ताण तओ गुरु। थुइमंगलं च काउं, कालं संपडिलेहए ॥१॥ (१०३३*) इति श्रीउ० २६, एतद्वृ० स्तुतिमङ्गलं–सिद्धस्तवरूपमिति श्रीउत्तरा० वृ०,अत्र च सिद्धशब्देन जिनप्रतिमा सूत्रत एव लभ्यते, तथाहि–तेसि णं अंजणगपव्व-याणं उवरिं बहुसमरणिज्जा भूमिभागा पं०,तेसिणं बहुसमरमणिज्जाणं भूमिभागाणं बहुसमरमणिज्जभूमिभागे चत्तारि सिद्धायतणा पं०, तेसिणं सिद्धायतणाणं एगं जोअणसयं आयामेणं पण्णासं जोअणाइं विक्खंभेणं बावत्तरिं जोअणाइं उड्ढं उच्चत्तेण'मित्यादि श्री-स्थानाङ्गे, एतद्वृ०–सिद्धानि शाश्वतानि सिद्धानां वा–शाश्वतीनामर्हत्प्रतिमानामायतनानि–स्थानानि सिद्धायतनानि. उक्तं च–"अंज-णगपव्वयाणं सिहरतलेसुं हवंति पत्तेअं। अरिहंतायतणाइं सीहनिसीहाइं तुंगाइं ॥१॥" इत्यादि श्रीस्था० वृ०, तथा चाधिकार-वशाच्चैत्यसिद्धार्हदर्हत्प्रतिमादीनामेकार्थतैव बोध्या, एतेन सम्यक्त्वपराक्रमाध्ययने संवेगे १ निव्वेए २ धम्मसद्धा ३ गुरुसाहम्मि-असुस्सूसणया ४ आलोअणया ५ निंदणया ६ गरिहणया ७ सामाइए ८ चउवीसत्थए ९ वंदणए १० पडिक्कमणे ११ काउस्सग्गे

१२ पच्चक्खाणे १३ थयथुइमंगले १४ कालपडिलेहणया १५ इत्यादीनि त्रिसप्ततिर्द्वाराण्युक्तानि, तत्र यदि जिनप्रतिमाप्रासादादिकं धर्मकृत्यमभविष्यत्तर्हि जिनप्रतिमादिव्यतिकरसूचकं चतुःसप्ततितमं द्वारमकथयिष्यत्, तच्च नोक्तमित्यादिमुग्धजनविप्रतारणवचनो लुम्पको निरस्तो बोध्यः, तत्र श्रावकसंबन्धि धर्मकृत्यानामनधिकाराद्, अधिकारस्तु तत्र साधूनामेव, साधुकृत्यं च चैत्यनमस्कृतिलक्षणं, तच्च नियतक्रियारूपतया दर्शितं "थयथुइमंगलेणं भंते" इत्यादि चतुर्दशद्वारे, तथा सामाचार्यां चेत्यादि **जिनप्रतिमानां नियतक्रियायामुपयोगः साधूनामिति दर्शितम्** ॥ अथ श्रावकक्रियामधिकृत्याह–'सावयकिरिये'त्यादि, श्रावकक्रियायां **पुनः श्रीमहानिशीथादिसूत्रेषु चैत्यानामुपयोगो भणितः**, अयं भावः–उपधानवाहनानन्तरं नमस्काराद्यनुज्ञावसरे ननु भो अमुक श्रावक! श्राविके! वा यावदर्हच्चैत्यानि साधवश्च सति प्रस्तावे यावद्वन्दिता न भवन्ति तावत्प्रातरुदकपानं न कर्त्तव्यं, मध्याह्ने चाशनक्रिया यावच्छयनक्रिया न कर्त्तव्येत्येवमभिग्रहं कुर्वित्यादिनोपदेशेन ग्राहिताभिग्रहस्य श्रावकस्यानुज्ञा दातव्या, यदागमः–"एआवसरंमि सुविइअसमयसारेणं गुरुणा पबंधेणं अक्खेवनिक्खेवाइहिं पबंधेहिं संसारनिव्वेयजणणिं सद्धासंवेगुप्पायगं धम्मदेसणं कायव्वं (२२) तओ परमसद्धासंवेगपरं नाऊणं आजम्माभिग्गहं च दायव्वं, जहा णं सहलीकयसुलद्धमणुअभव! भो भो देवाणुप्पिआ तए अज्जप्पभिईए जावज्जीवं तिकालिअं अणुदिणं अणुत्तावलेगग्गचित्तेणं चेइए वंदेअव्वे, इणमेव भो मणुअत्ताओ असुइअसासयखणभंगुराओ सारंति, तत्थ पुव्वण्हे ताव उदगपाणं न कायव्वं जाव चेइए साहू अ न वंदिए, तहा मज्झण्हे ताव असणकिरिअं न कायव्वं जाव चेइए ण वंदिए, तहा अवरण्हे चेव तहा कायव्वं जहा अवंदिएहिं चेइएहिं णो संझाकालमइक्कमेज्जा (२३) एवं च अभिग्गहबंधं काऊण जावज्जीवाए ताहे गोअमा! इमेआए चेव विज्जाए अहिमंतियाओ सत्त गंधमुट्ठीओ तस्सुत्तमंगे नित्थारपारगो भवेज्जा-

सित्ति उच्चारेमाणेणं गुरुणा घे(खे)त्तव्वाओ" इत्यादि श्रीमहानिशीथे तृतीयाध्ययने, एवं श्रावकाणामपि नियतक्रियारूपं चैत्य-वन्दनाद्यभिहितमितिगाथार्थः ॥५६॥ अथ साधुश्रावकयोर्विशेषकृत्यमधिकृत्योपयोगमाह—

नंदिविहिपुव्वकिरिआ जा जीए सव्वदेसविरयाणं। सा सव्वा समुसरणागारचऊपडिमदिट्ठीए ॥१५७॥

'नन्दिविधिपूर्वक्रिया' नन्दिविधिः—अच्छिन्नपरम्परागतसामाचारीग्रन्थोक्तः स पूर्वं यस्यां सा नन्दिविधिपूर्वा सा चासौ क्रिया चेति समासः, सा सर्वा—निखिला सर्वदेशविरतानां—श्रावकसाधूनां जीते—जीतव्यवहारे पञ्चमे समवसरणाकारचतुष्प्रतिमादृष्ट्यैव स्याद्, अयं भावः—व्यवहाराः पंच भवन्ति, यदागमः—"पंचविहे ववहारे पं०,तं०—आगमे सुए आणा धारणे जीए अ"त्ति(४२१) श्रीस्थानाङ्गे, अत्र यथा श्रुतव्यवहारस्तथा जीतव्यवहारोऽपि, स चाच्छिन्नपरम्परागतक्रियादिविधिलक्षणः, सोऽपि यदि समग्रोऽपि श्रुते लभ्येत तर्हि श्रुतव्यवहार एव भण्येत, तथा च जीतव्यवहारविलयापत्त्या व्यवहारचतुष्टयं स्यात्, तस्माज्जीतव्यवहारोऽपि श्रुत-व्यवहारवदवश्यमङ्गीकर्त्तव्यः, स च तीर्थव्यवस्थापनाविश्रामे सविस्तरं दर्शितः, तत्र जीतव्यवहारे नन्दिविधिर्जीतव्यवहारवति तपा-गणतीर्थे प्रतीत एव, तत्र समवसरणाकारेण चतस्रो जिनप्रतिमाः प्रतिष्ठाप्यन्ते, तत्पुरस्तादनुष्ठानं च सामायिकच्छेदोपस्थापनचारि-त्रयोगानुष्ठानोद्देशानुज्ञानन्दिपदप्रभृतिपदस्थापनं तपोविशेषोच्चारादिलक्षणं साधूनां श्रावकाणां च सम्यक्त्वमूलद्वादशव्रतोच्चारप्रति-मोपधानवहनतपोविशेषोच्चारादिरूपं जिनप्रतिमाचतुष्टयदृष्टावेव युक्तिमदिति जीतव्यवहारे प्रतीतं, तेन जिनप्रतिमानामुपयोगो नियत-क्रियास्विति गाथार्थः ॥१५७॥ इति द्वितीयद्वारं ॥ अथ तृतीयद्वारे आनन्दादीनामुपधानवहनसम्मतिमाह—

नाणा णाणप्पमुहाराहणकिरिआउ तेण जोगुव्व। समवायंमि उवासगि आणंदाईणमुवहाणं ॥१५८॥

ज्ञानप्रमुखाराधनक्रियाः-ज्ञानदर्शनचारित्राराधनक्रियाः पुरुषविशेषं प्राप्य नाना-अनेकप्रकारास्तेन यथा श्रुताराधननिमित्तं साधूनां कालिकोत्कालिकागाढानागाढरूपा योगास्तथा श्रावकाणां जिनाज्ञया कल्पनीयस्य श्रीआवश्यकश्रुतस्कन्धमात्रस्याराधननिमित्तमुपधानानि योगानुष्ठानापेक्षया भिन्नतपःक्रियाविधिसाध्यानि भवन्ति, तानि च क्वासन् श्रुते कथं लभ्यते इत्याह-'समवायंमी'त्यादि, समवायंमि-समवायांगे उपासकदशाङ्गे आनन्दादीनामुपधानानि वर्णितानीति भणितं, तथाहि-"से किं तं उवासगदसाओ ?, उवासगदसासु णं उवासगाणं णगराइं उज्जाणाइं चेइयाइं वणखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिआ धम्मकहाओ' इहपरलोइअइड्ढिविसेसा, उवासयाणं च सीलव्वयवेरमणगुणपच्चक्खाणपोसहोववासपडिवज्जणतातो सुअपरिग्गहा तवोवहाणाइं पडिमाओ उवसग्गा संलेहणा भत्तपच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चायाया पुणबोहीलाभा अंतकिरिआओ आघविज्जंति"त्ति समवायाङ्गे (१४२) अत्र यावन्ति मातापितृप्रभृतीनि प्रज्ञापनीयानि दर्शितानि तेषु कानिचिन्नाममात्रेण लेशतो दृश्यते, शेषाणां तु न गन्धोऽपि, तेन तावन्मात्रं श्रुतं व्युच्छिन्नं बोध्यम्, एतच्च प्रायः कुपाक्षिकाणामपि वचोगोचरः, यतो भगवत्यपेक्षया द्विगुणं ज्ञाताधर्मकथाङ्गं तदपेक्षया च द्विगुणमुपासकदशाङ्गं, तस्य च साम्प्रतीनकालापेक्षया भूयोऽन्तरस्य दृश्यमानत्वात्तदपलापः कर्तुमशक्यः, अत एव श्रुतव्यवहारापेक्षया जीतव्यवहारो बलीयान्, श्रुते व्युच्छिन्नेऽपि जीतव्यवहारे समग्रस्यापि तद्विधेरुपलभ्यमानत्वात्, एतेन यावन्मात्रमुपासकदशाङ्गे भणितं लभ्यते तावन्मात्रमेव आनन्दादिश्रावकैर्विहितं नान्यदिति लुम्पकविकल्पनं निरस्तं, प्रतिमानामपि 'दोचा तच्चा'इत्यादि संख्यावाचकैरव्यक्तशब्दैरेवोपलभ्यत्वेन दर्शनप्रतिमाव्रतप्रतिमामासिकप्रतिमेत्यादि व्यक्तनाम्नां तद्विधेश्चाश्रद्धेयत्वापत्तेः, तस्माच्छ्रुते क्वापि नाममात्रेण क्वापि किंचित्संबन्धिवस्तुसान्निध्यात्कथञ्चिद्वि-

न्तरेण लभ्यते, न पुनः समग्रमपि श्रुते एव उपलभ्यते, अन्यथा जीतव्यवहारस्य विलोपापत्त्या व्यवहारचतुष्टयमेव स्यात्, तेन श्रुतानुपलभ्यं जीतव्यवहाराधीनमेव, तच्च तीर्थव्यवस्थापनानाम्नि प्रथमविश्रामे दर्शितं, प्रकृते च समवायाङ्गे नाममात्रेणोपधानानि आनन्दादीनामुक्तानि, तन्नाम्ना च विस्तरविधिरुपासकदशाङ्गोक्तो व्युच्छिन्नोऽपि समस्तसाधारणविधिसूचाप्रवीणात् श्रीमहानिशीथात् सुलभः, स च वस्तुगत्या 'ग्रन्थस्य ग्रन्थांतरं टीके'ति वचनात् समवायाङ्गसूचितनाम्नो वृत्तिरेव बोध्यः, यतो वृत्तिकर्त्ताऽपि कथञ्चिद्व्यक्त्या व्याख्याय सम्मतिं च श्रीमहानिशीथोक्तमेव ददाति, नच श्रीआवश्यकश्रुतस्कन्धस्य तुल्येऽप्याराधने साधुश्रावकयोर्विधेर्भेदः कथमिति शङ्कनीयं, तीर्थकृद्भिस्तथैव दृष्टत्वात्, कथमन्यथा गोलोमप्रमाणमात्रेष्वपि केशेषु साधूनां सांवत्सरिकप्रतिक्रमणाशुद्धिर्भणिता, न पुनः श्रावकाणाम्, एवं प्रतिमाया आराध्यत्वे च साम्येऽपि न विधेरपि साम्यमित्यादि स्वयमेव पर्यालोच्यमिति गाथार्थः ॥१५८॥ अथोपधानानां किञ्चिद्विस्तरतो विधिः संप्रति श्रीमहानिशीथ एवोपलभ्यतेऽतस्तदेव सूत्रत आह—

तेसिं विहि सयलसुत्तातिसयंमि महानिसीह सिरिसुत्ते । सव्वकुमईण कुमईवल्लीलवणे वरकिवाणे ॥१५९॥

तेषाम्—उपधानानां विधिः 'सूचनात्सूत्र'मिति वचनात् सूचामात्रेण कथञ्चिद्विस्तरतः श्रीमहानिशीथे 'श्रीसूत्रे' प्रवचनशोभाकारिणि सूत्रे इत्यर्थः, पुनः किंलक्षणे ?—'सकलश्रुतातिशये' सकलश्रुतानाम्—आचाराङ्गादीनां मध्येऽतिशयो यस्य तत् सकलश्रुतातिशयं तस्मिन्, सर्वश्रुतेभ्योऽतिशायिनीत्यर्थः, उक्तं च—"किंतु जो सो एअस्स अचिंतचिंतामणिकप्पभूअस्स महानिसीहसुअक्खंधस्स पुव्वायरिसो आसि तहिं चेव खंडाखंडीए उद्देहिआइएहिं हेऊहिं बहवे पत्तगा पडिसडिआ, तहावि अच्चंतसुमहत्थतिसयंति इमं महानिसीहं सुअक्खंधं कसिणपवयणस्स परमसारभूअं परं तत्तं महत्थंति कलिऊणं पवयणवच्छल्लत्तणेण बहुभव्वसत्तोवयारिअं

च काउं तहा य आयहिअट्ठयाए आयरिअहरिभद्देण जं तत्थ आयरिसे दिट्ठं तं सव्वं समतीए साहिऊण लिहिअंति, अण्णेहिंपि सिद्धसेणदिवायरवुड्ढवाईजक्खसेणदेवगुत्तजसवद्धणखमासमणसीसरविगुत्तनेमिचंदजिणदासगणिखवगसच्चसिरिप्पमुहेहिं जुगप्पहाणसुअहरेहिं बहु मण्णियमिणं"ति(१८) इत्यादिस्वरूपेण श्रीमहानिशीथतृतीयाध्ययने पूर्वाचार्यैरेतत्सूत्रस्य वर्णनं भणितं, न तथाऽन्यत्र श्रुते, अत एव विविष्टचारित्रगुणसमन्वितस्यापि गम्भीरप्रकृतेरपि प्रवचनपरमार्थवेदिनोऽपि शिष्यस्य मध्यरात्रौ वाचनायोग्यत्वात् श्रीमहानिशीथमिति नामापि, अथैवंविधेऽपि किंलक्षणे ?–'सर्वकुमतीनां' कुपाक्षिकाणां कुमतिः–कुश्रद्धानं तद्रूपा या वल्ली तस्या लवनं–छेदनं तस्मिन् वरकृपाण इव–प्रधानखङ्ग इव वरकृपाणस्तस्मिन्नितिगाथार्थः ॥ १५९ ॥ इत्यानन्दादीनामुपधानमिति तृतीय द्वारं दर्शितं॥ अथ संक्षेपविस्तरयोः नाममात्रेण सूचितासूचितयोश्च संगतिलक्षणं चतुर्थद्वारमाह—

संखेवस्स विरोही न वित्थरो किंतु होइ अणुलोमो। जह पुव्वोदयपच्छिमअत्थमणाईण ण विरोहो ॥१६०॥

संक्षेपस्य विस्तरो विरोधी न भवेत्, किंत्वनुलोमः–अनुकूलः संवादको भवति, यथा पूर्वोदयपश्चिमास्तमनादीनामविरोध इत्यक्षरार्थः, भावार्थस्त्वयं–कुपाक्षिका हि कुतश्चिन्निमित्तात्तीर्थविषयकमनन्तानुबन्धिनं कषायमासाद्य तीर्थबाधकारिणं निजमतिविकल्पितं मार्गं प्ररूपयन्ति, पश्चाच्च तथाविधक्लिष्टकर्मोदयिमुग्धजनप्रत्यायनार्थं निजमतव्यवस्थास्थित्यनुसारेण विकल्पितार्थे सूत्रसम्मतिं दर्शयन्ति, अर्थविकल्पनं च प्रायः संक्षिप्तसूत्रस्य संभवति, तेन ते वाङ्मात्रेणापि प्रायः संक्षिप्तसूत्ररुचयः, संक्षिप्तसूत्रस्य च विस्तरवता सूत्रेण विरोधमुद्भाव्य यथारुच्येकतरत्परिहरन्ति,तत्रेदं वक्तव्यं–'सूत्रकाराणां विचित्रा गति'रिति न्यायात् क्वचित्सूत्रादौ नाममात्रेण सूचा क्वचित्किंचिद्विस्तरः क्वचित्किंचिद्विस्तरोक्तविचारसंयुक्तविस्तरः क्वचित्किंचिद्विस्तरोक्तार्थं परित्यज्यैव विस्तरः क्वचिच्छास्त्रान्तरोक्तं

संक्षेपं विस्तरं च परित्यज्य प्रकारान्तरेणैव संक्षेपतो विस्तरतो वा रचना संभवति, न चैवं वैचित्र्यं कथमितिशङ्कनीयं, यत आत्तामपरजनः, एकस्यापि जीवस्य कालादिसामग्रीवशात् कर्मणां क्षयोपशमवैचित्र्यं, तद्वशाच्च विचित्रा रुचयस्तदनुसारेण च शास्त्रादिरचना, यथा संप्रत्यपि मादृशस्यापि तथाविधोक्तप्रकारेण कर्मक्षयोपशमवैचित्र्यात् कुपाक्षिकविकल्पितमार्गतिरस्कारपूर्वकतीर्थव्यवस्थापने रुचिः, तदनुसारेणैतत्प्रकरणकरणेऽपि प्रवृत्तिः, एवं च सति उक्तप्रकाराणां सूत्राणां विचित्ररचनायामपि न परस्परं विरोधगन्धोऽपि भावनीयः, तत्र दृष्टान्तमाह—'जहे'त्यादि, यथा क्वचित्सूर्यः पूर्वस्यामुदेति, क्वचित् पश्चिमायामस्तमेति, क्वचित्पूर्वस्यामुदेत्य पश्चिमायामस्तंगमी,क्वचिन्निजतेजसा दीप्यमानोऽन्धकारप्रकरं प्रस्फोटयन् निषधशिखरमासाद्योदितः क्रमेण पश्चिमायामस्तमितः, क्वचिद्विशेष्यवाचकनामशून्यमपि प्रागुक्तं विस्तरवाक्यं, क्वचित्पूर्वस्यामुदयं प्राप्य पश्चिमायामस्तंगते तारादीनां तेजः प्रससारेत्यादावर्थादेव सूर्योऽवगम्यते नापर इत्येवं सर्वत्राप्यविरोध एवेतिगाथार्थः ॥१६०॥ अथ प्रकारान्तरेणापि कुपाक्षिकोद्भावितं विरोधमपाकर्तुमाह—

नामुच्चाराभावे नामुच्चारुव्व अत्थउवलंभो। न विरोही किंतु पुणो निसेहवयणुव्वऽणुवलंभो ॥१६१॥

नामोच्चाराभावे नामोच्चारवदर्थोपलम्भो न विरोधी, नामोच्चारोऽर्थोपलम्भश्च नाम्न उच्चाराभावस्य विरोधिनौ न स्यातां, किंतु निषेधवचनं पदार्थानुपलम्भश्चेति द्वावपि विरोधिनावित्यर्थः, अयं भावः—अत्र घटोऽस्ति नास्ति चेत्यादि केनापि नोक्तम्, एवं च सति केनचिदुक्तमत्र घटोऽस्ति, यद्वाऽनुक्तोऽपि चक्षुषोपलभ्यते, न चैवं कश्चिद्विरोधः, विरोधस्तु केनचिदस्तीत्युक्तं यद्वा नोक्तं, परं तत्सद्भावविरोधि नास्तीति वचनं तदनुपलम्भो वा, यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिवाद्रक्ष्यदित्यादितर्कावतारेणास्तित्वविरोधः

सुमाध्यः, एवं सति चैत्यादिपूजा अमुकग्रन्थे नास्त्यमुकग्रन्थे वाऽस्ति स च ग्रन्थो नास्माकं प्रमाणं, नास्तीति ग्रन्थेन सह विरोधादित्यादिप्रवचनवाचालः कुपाक्षिको निरस्तो बोध्य इतिगाथार्थः ॥१६१॥ इतिसंक्षेपविस्तरयोः नाम्ना सूचितासूचितयोश्च न विरोध इति चतुर्थद्वारं दर्शितमिति ॥ अथातिप्रसङ्गरूपं पञ्चमद्वारमाह—

**अण्णह अइप्पसंगो पवयणमित्तस्स वायओ होइ। अहवा सयलं सुत्तं एगसरूवेण सम्मंति ॥१६२॥**

'अन्यथा' संक्षेपविस्तरयोः नाम्नाऽपि सूचासूचयोश्च विरोधाङ्गीकारे अतिप्रसङ्गः प्रवचनमात्रस्यापि त्यागतो भवति, अङ्गोपाङ्गादि सकलमपि जैनप्रवचनं परिहरणीयं स्याद्, यतः सूत्राणां रचना नानाप्रकारा, तथाहि—चतुर्विंशतिस्तवे नाम तीर्थकृतां नामान्येव सन्ति, न पुनर्मातापितरोऽपि, क्वापि चैहिकभवव्यतिकरः कल्पसूत्रादौ, क्वापि च पूर्वभवादिसमन्वितैहिकभवव्यतिकरः श्रीमहावीरचरित्रादौ, तत्रापि ग्रन्थकर्तृकर्मक्षयोपशमवशादनेकधापि, तत्सर्वमपि कुपाक्षिकाभिप्रायेणान्योऽन्यं विरोधि, तत्र चामुकं परिहृत्यामुकमुपादीयते इत्यत्र नियामकाभावेन सुंदोपसुन्दन्यायप्राप्तं सर्वमपि परिहरणीयं स्यात्, न च तत्रापि सूत्रस्य बलवत्त्वेन तदेवास्माकं प्रमाणं, न प्रकरणादीति वाच्यं, प्रकरणादिकमन्तरेण सूत्रस्याकिञ्चित्करत्वात्, प्रकरणादीनां च 'ग्रन्थान्तरं टीके'तिन्यायात्सूत्रव्याख्यानरूपत्वाच्च, अन्यथा "समणस्स भगवओ महावीरस्स भारिआ जसोआ कोडिण्णागोत्तेणं'ति सूत्रे भणितं, सा च भार्या परिणीता उतापरिणीता?, सापि राजपुत्री इतरा वा?, परिणीतापि स्वयमभ्युपगता उत मात्राद्यनुरोधाद्वा, विवाहकृत्यमपि परम्परागतकुलाचारेण वा तीर्थकरत्वेनापरप्रकारेण वेत्यादि निर्णयः, तथा "समणस्स भगवओ महावीरस्स धूआ कासवगोत्तेणं तीसे दो नामधिज्जा एवमाहिज्जंति तं०—अणोज्जाइ वा पिअदंसणाइ वा" इत्यत्र सा पुत्री मानुष्यकान् कामभोगान् भुञ्जानस्य भगवतो

महावीरस्य जातेति नोक्तं, तन्निश्चयश्च "तिहिरिक्खंमि पसत्थे महंतसामंतकुलप्पसूआए। कारिंति पाणिगहणं जसोअवररायकण्णाए ॥१॥" इत्यादि, तथा "पंचविहे माणुस्से भोए भुंजित्तु सह जसोआए। तेअसिरिं व सुरूवं जणेइ पिअदंसणं धूअं ॥२॥" इत्यादि शास्त्रान्तरमन्तरेण कथं स्यात् ?, न कथमपीत्यर्थः। ननु तीर्थकृतो भार्या परिणीतैव स्यात् पुत्रादिरपि जगत्स्थितिधर्मसत्यार्थापनेनैवेत्यर्थाल्लभ्येऽप्यर्थे सूत्रे वा तावन्नोक्तमितिवचनं धान्यखादकमात्रस्याप्यसंभवीति चेच्चिरं जीव, यदि जिनप्रतिमा तर्हि श्रावकेणैव कारिता, यदि प्रतिष्ठा तर्हि साधुनैव कृतेत्यर्थाल्लभ्येऽप्यर्थे श्रीमहावीरस्यैकोनषष्टिसहस्राधिकलक्षप्रमाणानां श्रावकाणां मध्ये केन श्रावकेण प्रतिमा कारिता ? केन साधुना कृता प्रतिष्ठेत्यादिवचनं मुग्धजनविप्रतारणाय ब्रुवाणस्य लुम्पकस्य किंखादकत्वमाख्यायते ? इति ब्रूहीति, यच्च सूत्रसूचितस्य पदार्थस्य व्यतिकरनिर्णायकं तदेव तत्सूत्रव्याख्यानं, तस्मात् सूत्रापेक्षया प्रकरणानि बलवन्ति, सूत्राङ्गीकारे च प्रकरणाङ्गीकारोऽवश्यं कर्त्तव्यः, परिहर्त्तव्यं चोभयमपीति, अथवा सकलं सूत्रं कुपाक्षिकाभिमायेणैकस्वरूपेण सम्यग् स्याद् अङ्गोपाङ्गादीनि सर्वाण्यपि, यदि भिन्नस्वरूपेणार्थतः पाठतो वा स्युस्तदा परस्परं विरोधीन्येव, कुपाक्षिकाणामाकूतं परममधममेवेत्यतिप्रसङ्गो लोकप्रसिद्धो महादोषः कुपाक्षिककृतान्तकल्प इतिगाथार्थः ॥१६२॥ इत्यतिप्रसङ्गरूपं पञ्चमं द्वारं दर्शितं, अथ कुपाक्षिकमात्रस्य श्रीमहानिशीथं न प्रमाणं, तपागणस्य च परमसूत्रतया प्रमाणमित्यत्र को हेतुरित्याह—

सव्वकुवक्खुच्छेओ महानिसीहेण सुत्तमित्तेणं। तेणं तवगणतित्थे पमाणमिह परमसुत्तंति ॥१६३॥

अपिरध्याहार्यः, श्रीमहानिशीथेन सूत्रमात्रेणापि सर्वकुपाक्षिकोच्छेदो भवति, तथाहि—दिगम्बरखरतरपाशव्यतिरिक्ताः सप्तापि कुपाक्षिकाश्चतुर्दशीपाक्षिकोक्तिशक्तिप्रहता निःश्वसितुमप्यशक्ताः, तेषां पूर्णिमायां पाक्षिकत्वाभ्युपगमात्, ससाधुसाध्वीविहारभण-

नेन खरतरपाशौ निरस्तौ, उपधानवहनविधिवचनतत्राहतास्तु खरतरवर्जाः सर्वेऽपि क्षणमात्रक्षीणप्राणाः भवन्तीति कुपाक्षिकाणां महानिशीथाप्रामाण्ये हेतुः, नहि स्वोपघातकं शस्त्रं कोऽप्यङ्गीकुरुते, येन कारणेनैवं तेनैव कारणेन, सप्तम्यर्थे षष्ठीति, तपागणतीर्थस्य परमसूत्रम्–उत्कृष्टं सूत्रमिदमेवेति प्रमाणं, नच तपागणस्तीर्थमिति यदुक्तं तदसंगतं भविष्यतीति शङ्कनीयं, श्रीहरिभद्रसूरिप्रभृतिभिस्तपागणस्यैव तीर्थत्वेन भणितत्वात्, तत्कथमितिचेच्छृणु–"इमं महानिसीहं सुअक्खंधं कसिणपवयणस्स सारभूअं परं तत्तं महत्थंति कलिऊण पवयणवच्छलत्तणेण बहुभव्वसत्तोवयारिअंतिकाउं तहाय आयहिअट्ठयाए आयरिअहरिभद्देण जं तत्थ आयरिसे दिट्ठं तं सव्वं समतीए सोहिऊणं लिहिअंति"ति भणनेन यस्येदं परमसूत्रतया प्रमाणं तदेव तीर्थं, तदर्थमेव लिखनादिप्रयासं कृतवान् श्रीहरिभद्रसूरिः, एतेन येषामिदमप्रमाणं ते तीर्थबाह्यास्तैरेव भणिताः, तथा यद्वस्तु यदर्थं जगत्स्थित्या वर्त्तते तद्वस्तु तथैवोपयुज्यमानं प्रशस्तं, नान्यथेतिकृत्वा तीर्थस्य वाऽस्याङ्गीकारो युक्तो, नेतरेषां, तदर्थमनभिहितत्वात्, नहि मार्जार्या ललाटतिलकनेत्राञ्जनादिमुखशृङ्गारविलोकननिमित्तं निर्मलदर्प्पणनिर्मापणं दृष्टं श्रुतं वा, एतेन श्रीमहानिशीथविषयकमुपेक्षावचनमाकर्ण्य तीर्थान्तर्वर्त्तिना केनाप्युपेक्षापरायणेन न भवितव्यं, एवं निर्युक्त्यादिविषयकमपि कुपाक्षिकोपेक्षावचनमकिञ्चित्करतयैव बोध्यं, नहि सुवर्णकचोलके कर्पूरवासितं शोभनं जलं गर्दभीदन्तधावनपानादिनिमित्तं, नवा ज्योतिर्विदां ज्योतिःशास्त्राभ्यासः शुनीपुत्रजन्मपत्रिकापरिज्ञाननिमित्तम्, एवमेतद्विषयिणी निन्दापि कुपाक्षिकमुखप्रभवा युक्तैव, यतः–विपुलहृदयाभियोगे, खिद्यति काव्ये जडो न मौर्ख्ये स्वे। निन्दति कञ्चुककारं प्रायः शुष्कस्तना नारी ॥१॥ इत्यादि पद्यस्यानुपयोगि तत्तस्य निन्दास्पदं भवत्येव, किंच–कुपाक्षिकाणां परम्पराया अनङ्गीकारेण तन्मूलकस्य परम्परागमस्याप्यभाव एव, किंतु तेषां न जिनागमो नवा गैवागमः, किंत्वव्यक्त एव, अत एव

तेऽव्यक्ता भण्यते, एतच्च तीर्थव्यवस्थापनावसरे ग्रन्थसम्मत्या दर्शितमिति श्रीमहानिशीथं तपागणतीर्थस्य प्रमाणं कथमित्यत्रापि हेतुर्दर्शित इतिगाथार्थः ॥ १६३ ॥ इति कुपाक्षिकाणां श्रीमहानिशीथं न प्रमाणमित्यादौ हेतुर्दर्शित इति षष्ठं द्वारं ॥ अथ प्रकृतस्य लुम्पकस्य हितोपदेशमाह—

लुंपगमित्तुवएसं सुणाहि जं सुत्तपमुहहीलाए। आजीविआइकरणं मरणं तत्तो तुहं सेअं ॥ १६४ ॥

ननु भो लुम्पक! मित्र उपदेशं शृणु, यत्सूत्रप्रमुखहीला—सूत्रनिर्युक्तिभाष्यचूर्णिप्रभृतीनां हीला—इदं घटते इदं च नेति निजमतिविकल्पनेन तिरस्कारस्तया आजीविकाकरणम्—उदरपूर्तिनिर्म्मापणं 'तत्तो' तस्मात्तव—लुम्पकस्य मरणं श्रेयो—मङ्गलमिति मम मित्रस्याशीर्वचनं हितोपदेशः, नन्वेवं हितोपदेशो लुम्पकमुद्दिश्यैव दत्तो नेतरेभ्यस्तत्किमितरैः सह मैत्रीभावो नास्ति? उत हितोपदेशानर्हा एवेति चेत्सत्यं, उपलक्षणत्वचितानामपरेषामप्ययमेव हितोपदेशो बोध्यः,यथा 'काकेभ्यो दधि रक्ष्यता'मित्यत्र काकपदोपलक्षिता यावद्दध्युपघातका बोध्याः, यद्वा हितोपदेशानर्हा अपि, यतो लुम्पाकः प्रवचनप्रत्यनीकः प्रकटः, शेषास्तु स्थूलधीधनानां सहसा ज्ञानागोचराः गुप्ताः, ते च लुम्पकापेक्षया दुराशयाः, यदुक्तं—"वरं वराकश्चार्वाको, योऽसौ प्रकटनास्तिकः। वेदोक्तितापसच्छद्मच्छन्नं रक्षो न जैमिनिः ॥१॥" इति योगशास्त्रे इतिगाथार्थः ॥१६४॥ अथ जगत्स्थित्याऽप्यसंभवि स्वरूपं दिदर्शयिषुर्गाथायुग्ममाह—

चित्तं लुंपगलेहगवज्जं वुच्चिज्ज वीर जिणवच्चं। गत्तासूअरवच्चं गइंदवच्चंव अप्पाणं ॥१६५॥
जिणवरठविअं तित्थं हिंसाधम्मस्स भासगं लोए। लुंपगकप्पिअमग्गो दयापहाणो उ सिवमग्गो ॥१६६॥युग्मं

चित्रम्—आश्चर्यं लुम्पकलेखकापत्यं वीरजिनापत्यमात्मानमित्युत्तरार्द्धोक्तमिहापि संबन्ध्यते ब्रूते, अहं श्रीवीरजिनेन्द्रापत्यमिति

लुम्पकापत्यं भाणर्षिरूपर्षिप्रभृतिर्भाषते, दृष्टान्तमाह-'गत्ते'त्यादि, यथा गर्त्ताशूकरापत्यमात्मानमहं गजेन्द्रापत्यमिति भाषते, एतचासंभव्येन संभूतमित्याश्चर्यमिति, पुनरप्याश्चर्यमाह-'जिणवरे'त्यादि, जिनवरस्थापितं तीर्थं हिंसाधर्मस्य भापकं लोके, लुम्पकविकल्पितो मार्गस्तु सर्वलोकनिन्दात्मकोऽपि दयाप्रधानः प्रवरधर्मः शिवमार्गः-मोक्षस्य पन्था इत्यप्याश्चर्यमितिगाथायुग्मार्थः ॥१६५-१६६॥ अथैवं जगत्स्थितिपरिहारेण जायमाने किं युज्यमानं जातमित्याह—

इचाइ भासमाणस्स मत्थए जं न विज्जुआपाओ। तत्थ निमित्तं लुंपगपावं कूवाहिमुहणाया ॥१६७॥

इत्यादि प्रागुक्तप्रकारेण भाषमाणस्य लुम्पकस्य मस्तके विद्युत्पातो जगत्स्थित्या युज्यते, स च न जातस्तत्र निदानं लुम्पकपापकर्मेव, केन दृष्टान्तेनेत्याह-'कूवाही'त्यादि, कूपाभिमुखज्ञानात्, यद्वा कूपश्चाहिमुखं च कूपाहिमुखे तयोर्ज्ञाताद्-उदाहरणाद्, अयं भावः-कूपपातायाभिमुखः-सम्मुखः कूपाभिमुखः यद्वा कूपपाताय अहिमुखं स्प्रष्टुं च धावमानस्य कूपसर्पसमीपगमनाशक्तिहेतुः पादस्खलनादि भूमिपातः पुण्यप्रकृत्यात्मके नराद्युपि सत्येव स्यात्, तदभावस्तु पापोदयादेव, अयं भावः-यद्यपि पादस्खलनादिना भूमिपातोऽशुभोदयजन्य एव, तथापि कुतश्चिन्निमित्तात् कूपपाताय धावमानस्य कूपसमीपगमनाशक्तिहेतुत्वमधिकृत्य भूमिपातः शुभोदयादेव स्याद्, एवं विद्युत्पातोऽप्यशुभजन्योऽपि दीर्घकालमुत्सूत्रभाषणापेक्षया अल्पकालीनमुत्सूत्रभाषणं श्रेयः, तन्निमित्तं च तथा ब्रुवाणस्य मस्तके विद्युत्पात एव, स च प्रतिसमयमनन्तसंसारहेतोरुत्सूत्रस्योच्छेदको न पुण्यप्रकृत्युदयमन्तरेण स्यात्, जैनप्रवचने च कर्मपरिणति सापेक्षिकी, यदागमः-"चत्तारि कम्मपरिणई पं०, तं० सुहे णाममेगे सुहपरिणए सुहे णाममेगे असुहपरिणए असुहे णामं० सुहप० असुहे० असुहप०" इति श्रीस्थानाङ्गे इतिगाथार्थः॥१६७॥ अथैवंविधं प्रवचनप्रत्यनीकं देवाः कथं न विनयन्तीति पराशङ्कामपाकर्तुमाह—

तम्मुहचवेडदाणे देवावि निरुज्जमा कुफासभया। जह नीअफासभीओ अ बंभणो भोअणुज्जुत्तो ॥१६८॥

'तन्मुखचपेटादाने' तस्य-लुम्पकस्य मुखे चपेटा-हस्ततलाहतिस्तस्या दाने देवा अपि निरुद्यमा-उद्यमरहिताः,'कुस्पर्शभयात्' कुत्सितो-निन्द्यो यः स्पर्शस्तस्मात्, चपेटादाने ह्यवश्यं स्पर्शः कर्त्तव्यः स्यात्, स च नास्माकमुचित इति भयादिनोत्प्रेक्ष्यते तथाभूताः, तत्र दृष्टान्तमाह-'जहे'त्यादि, यथा नीचस्पर्शाद्भीतः-चाण्डालादिस्पर्शभीतश्च ब्राह्मणो भोजनोद्यतो भवति, भोजनक्रियापरायणो हि ब्राह्मणो नीचवर्णस्पर्शभयाकुल एव स्याद्, अन्यथा भोजनसामग्र्या वैयर्थ्यापत्तेः, तथा देवा अपि लुम्पकस्पर्शेनास्माकं पुण्यप्रकृतिविनाशोऽभूदित्यभिप्रायात्तत्स्पर्शविरक्ता इतिगाथार्थः ॥१६८॥ अथ देवनिवारणाभावे गत्यन्तरमाह—

तस्स च न कोइ मित्तं देवाई जं न देइ अवहत्थं। हालाहलं पिअंतं वारिज्जइ सो परममित्तं ॥ १६९ ॥

तस्य-लुम्पकस्य देवादिः-असुरकुमारादिर्देवोऽथवा समर्थो मनुष्यश्च कोऽपि मित्रं नास्ति, यतः कारणादपहस्तं-हस्ततलाधोभागं चपेटास्वरूपेण न ददाति, हालाहलं विषं पिबन्तं यो वारयेत्-चपेटादानादिपुरस्सरं निवारयेद्, हस्तादुद्दाल्य विक्षिपेद्, एवकारोऽध्याहार्यः, स एव परमं मित्रं, नान्योऽप्युपेक्षक इतिगाथार्थः ॥१६९॥ अथ यद्यपि मादृशे मित्रे विद्यमानेऽपि कोऽपि मित्रं नास्तीति वक्तुमयुक्तं, परं तत्र गतिमाह—

मित्तंपि तुहं अम्हारिसो हु सो दूसमाणुभावेण। सत्तिरहिओ अ सिक्खादाणे तुण्हंपि कम्मुदया ॥१७०॥

हे कुपाक्षिक! तवास्मादृशो मित्रमपि दुष्षमानुभावेन शिक्षादाने शक्तिरहितः,निवारणं च शक्तिसाध्यम् ,यथा मणिनागेन यक्षेण क्रियाद्वयवादी गङ्गो निवारितः,यद्वा तिष्यगुप्तश्चरमप्रदेशजीववादी श्रेष्ठिनासमुच्छेदवादी च मित्रश्रीराज्ञा(जेन)निवारितः,तथा कालकाचार्यो

जैनशासनप्रत्यनीकं गर्दभिल्लं नामानं राजानं निवारितवान्, तथा श्रीहरिभद्रसूरिरपि बौद्धान् प्रवचनप्रत्यनीकान्निवारितवान्, एवं साधुप्रत्यनीकं विमलवाहननामानं राजानं सुमङ्गलसाधुर्भस्मसात्करिष्यतीति प्रवचने प्रतीतं, तदीदृशी च शक्तिर्मयि नास्ति, अस्ति च संप्रति कालानुभावात् संज्ञामात्ररूपकुनाकुप्रयोगजन्ये निवारणे, तच्चास्मिन् प्रकरणेऽनेकप्रकारेण प्रयुक्तं, परं फलवत् सुमङ्गलसाधुसदृशे सामर्थ्ये सत्येव स्याद्, अथ तादृशसामर्थ्याभावे निदानमाह–'दुण्हंपी'त्यादि, द्वयोरपि–मादृक्कुपाक्षिकयोस्तीर्थकुपाक्षिकयोर्वा कर्मोदयात्, मादृशेन प्राग्जन्मनि तदेव कर्मार्जितं येन तीर्थभक्तस्यापि मादृशस्य तीर्थरोगकल्पकुपाक्षिकवर्गस्य निवारणे शक्तिराहित्यं, कुपाक्षिकैश्च तत् प्राक्कर्मोपार्जितं येनानन्तभवहेतुतीर्थाशातनाकरणस्य निवारकः शक्तिमान् न मिलिष्यति, यद्वा संपतितीर्थेन सामुदायिकं कर्म तदेव कृतं येन धर्मकरणावसरे शुभध्यानमालिन्यादिहेतवस्तीर्थस्य परमरोगकल्पाः कुपाक्षिका उत्पत्स्यंते इति, एवंविधकर्मोदयात्सामर्थ्याभावः, नन्वेवं कथमितिचेच्छृणु, सुमङ्गलसाधुनाऽपि निजबले प्रयुक्ते साधुचारित्रशरीररोगकल्पे विमलवाहने विलयं नीते स्वस्यापि चारित्रपालनं सुकरं जातं, विमलवाहनोऽपि सुमङ्गलमुपद्रुत्यान्यानप्युपाद्रविष्यत्, तथा च भूयोऽनन्तभवभ्रमणहेतुकर्मोपार्जनमकरिष्यत्, तच्च न जातमतो महान् गुणो राज्ञोऽपि, तथा यदि मयि तादृशं सामर्थ्यं स्यात्तर्हि जैनप्रवचनशरीरे रोगकल्पेषु कुपाक्षिकेषु चिकित्सितेषु रोगरहिते जैनप्रवचने विद्यमाने साध्वादीनां निजनिजधर्मानुष्ठानं निरपायं स्यात्, कुपाक्षिकाणामपि प्रतिसमयं तीर्थोच्छेदाध्यवसायजन्यं पापं न स्यादित्युभयेषामपि कर्मोदयादेव जैनप्रवचनरोगोच्छेदे तथाविधसामर्थ्याभावः, एतेन ननु भो भवतां गुरवस्तु बौद्धहन्तृश्रीहरिभद्रसूरिमुद्गलानयनपुरस्सरगर्दभिल्लोच्छेदकश्रीकालकसूरिप्रभृतय एवेति वचोभिः समलङ्कृतं स्वगुरुं प्रति विगतस्मनो देवतायत्त इवोपहसन्नेव निरस्तो बोध्यः, यतस्तथाविधचमत्कार लुम्पकं प्रत्येवं वक्तव्यं–ननु भो लुम्पक! अस्माकं

तु गुरवः प्रवचनप्रभावनैकदृष्टयः प्रवचनप्रत्यनीकोच्छेदसमर्थाः श्रीहरिभद्रसूरिप्रभृतयो भूतपूर्वाः भाविनश्च सुमङ्गलसाधुप्रभृतयः, वर्त्तमानास्तु कालानुभावात्तथाविधशक्तिरहिता अपि प्रवचनप्रत्यनीकेषु भवादृशेषु सुमङ्गलसाधुकर्त्तव्यताशक्ति भात्त्वमात्मनः स्पृहयन्त एव बोध्याः, तत्र तु लिखनकर्मोपजीवी शौचाचारेऽप्यज्ञः असमर्थश्च लुम्पकनामा लेखक एवेत्याक्रोशवचोभिस्तिरस्कृत्य यथाशक्ति शिक्षणीयः,यदागमः–"साहूण चेइआण य पडिणीअं तह अवण्णवायं च। जिणपवयणस्स अहिअं सव्वत्थामेण वारेइ ॥१॥" इति श्रीउपदेशमालायां, तथा "से किं तं वण्णसंजलणया ?,वण्णसंजलणया चउव्विहा पण्णत्ता, तं०–अहातच्चाणं वण्णवाई आविभवइ १ अवण्णवाइं पडिहणित्ता भवइ २ वण्णवाइं अणुवूहयित्ता भवति ३ आया वुड्ढसेवी आवि भवति ४"इतिश्रीदशाश्रुतस्कन्धे आचार्यसंपद्वर्णनाधिकारे, एतच्चूर्णिर्यथा–पढमे भंगे याथातथ्यानां वर्णना, जो अवण्णं वदति तं पडिहणति, वण्णवादिं अणुवूहति, गुणवानेव जानीते वक्तुं, 'आयावुड्ढसेवि आविभवति' वुड्ढो आयरिओ निच्चमेव पज्जुवासति–अविरहितं करोति, आसणट्ठितो अ इंगिआगारेहिं जाणित्ता करेति इति श्री दशा० चू०, अत्र द्वितीयविकल्पे आचार्यस्य शिष्यस्तादृशो भवति यः साध्वादिप्रवचनस्यावर्णवादिनं प्रतिहन्ता भवति, अत एव हरिकेशिसाधुनाऽपि स्वनिमित्तं यक्षेण हतेष्वपि ब्राह्मणकुमारेषु यक्षो वैयावृत्त्यकारी भणितः, यदागमः–"पुव्विं च इण्हिं च अणागयं च, मणप्पदोसो न मे अत्थि कोई। जक्खा हु वेआवडिअं करिंति, तम्हा हु एए निहया कुमारा ॥१॥" इति श्रीउत्तरा० १२ (३९०*) वैयावृत्त्यं च महानिर्जराहेतुः तीर्थंकरपदतानिबन्धनं, यदागमः–"वेयावच्चेणं भंते ! जीवे किं जणेइ ?, वेयावच्चेणं तित्थयरनामगोयं कम्मं निबंधइ'त्ति श्रीउत्त० २९, वैयावृत्त्यं साध्वादिभिः सर्वैर्यथाशक्ति करणीयं, सामर्थ्याभावे च वैयावृत्त्यकारणं सामर्थ्यं स्पृहणीयमेव, एतेन कथं साधवस्तथा स्पृहयन्तीति पराशङ्काऽपि व्युदस्ता,

निर्जराहेतूनां सर्वेषामपि यथौचित्येन स्पृहणीयत्वादित्यादिनेकयुक्तिभिर्लुम्पकस्य हितोपदेशोऽन्येषामपि दातव्यः,एतेन "देवगुरुसंघकज्जे चुण्णिज्जा चक्कवट्टिसेण्णंपि। कुविओ मुणी महप्पा इमाइ लद्धीइ संपन्नो॥१॥"त्ति गाथां पुरस्कृत्य जैनप्रवचनं हीलयन् लुम्पाको निरस्त इतिगाथार्थः ॥१७०॥ "इति सिद्धान्तलोकनन्यायसुचितानि सप्तापि द्वाराणि दर्शितानि । अथ ग्रन्थोपसंहारमाह—

एवं कुपक्खकोसिअ० लुंपागो सत्तमो भणिओ० ॥१७१॥ नयहत्थ० ॥१७२॥ इअ सासण० ॥१७३॥

नवरं सप्तमो लुम्पको भणित इतिगाथार्थः॥ अथ कस्मिन् संवत्सरे कस्मिंश्च गुरौ विद्यमाने प्रकृतप्रकरणे लुम्पाको भणित इत्याह ॥१७१–१७२॥ अथैतत्प्रकरणकर्तृनामगर्भिताशिरभिधायिकां गाथामाह ॥१७३॥

*————*

इअ कुवक्खकोसिअसहस्सकिरणंमि पवयणपरिक्खावरनामंमि लुंपगमयनिराकरणनामा अट्ठमो विस्सामो सम्मत्तो * ॥

इति श्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरविरचिते कुपक्षकौशिकसहस्रकिरणे श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि लुम्पकमतनिराकरणनामा अष्टमो विश्रामो व्याख्यातः ।

अथ कटुकमतस्वरूपं निरूपयितुं प्रथमं गाथायुग्मेन मतकर्तृकनामसंवत्सराद्याह—

अह कडुअगिहत्थाओ जायं कुमयंपि कडुअनामेण। विक्कमओ चउसट्ठी अहिए पनरससय १५६४ वरिसे ॥१॥
तस्स सरूवं किंपी वुच्छं उवएसविसयमावण्णं। तित्थद्धभासरूवं केवलपूआसु पडिवद्धं ॥२॥ जुम्मं ॥

'अथे'ति लुम्पकमतनिरूपणानन्तरं क्रमप्राप्तं नवमं कटुकमतं यज्जातं तस्य स्वरूपं किञ्चिद्वक्ष्ये इत्यन्वयः, तत्कुमतमपि कटुकनाम्ना कुत इत्याह—'कडुक'त्ति कटुकगृहस्थात्—कटुकनाम्ना नागरज्ञातीयो वणिगासीत्, स च प्रकृत्या सम्यग्धर्मजिज्ञासुरपि तथाविधक्लिष्टकर्मोदयतथाभव्यत्वपरिपाकादिसामग्रीवशात् कश्चिदागमिकमतसंबन्धिनं वेषधरं प्रति धर्ममार्गं पृष्टवान्, तेन च पापात्मना भणितं—भो धर्मार्थिक! यदि मदीयवचसास्था तर्हि आगमिकमामाचारमङ्गीकृत्य श्रावकधर्ममेव कुरु, यतो नास्त्यधुना साधवस्तथाविधक्रियाकरणशक्त्यभावादित्यादि दुर्वचनोद्भ्रान्तो धर्मार्थिक इत्यात्मानं ख्यापयन् साधुमार्गपराङ्मुखस्तथाविधसाधुमार्गदूषणान्वेषणतत्परान् कतिचिज्जनान् विप्रतारयामास, स च विक्रमतश्चतुष्षष्ट्यधिके पञ्चदशशतवर्षे सं० १५६४ वर्षे जातोऽतस्तन्मतं तदानीं जातं, तस्य मतस्य स्वरूपं किंचित्—स्वल्पं वक्ष्ये, यतस्तन्मतमागमिकमूलकमतस्तन्निरूपणे तस्यापि निरूपणं जातमेवेतिकृत्वा किञ्चिदित्युक्तं, तच्च किञ्चित्ततोऽपि भेदरूपमत आह—'उवएस'त्ति उपदेशविषयमापन्नम्—उपदेशेनागमिकमतादपि भिन्नमितिकृत्वा उपदुपदेशविषयमापन्नं—प्राप्तं सद्वक्ष्ये, यथा तस्योपदेशः स व्यक्तीकरिष्यत इत्यर्थः, पुनः कीदृशं?—'तीर्थार्द्धभासरूपं' तीर्थार्धं—श्रावकश्राविकालक्षणं तदिवाभासते इति तीर्थार्धाभासः, तीर्थार्द्धमसदपि तद्वद् आभासत इति तीर्थार्द्धाभासः स एव रूपं—स्वरूपं यस्य तत्तथा, पुनरपि कीदृशः?—'केवलपूजासु प्रतिबद्धं' जिनपूजैव श्रेयस्करी भविष्यतीति धिया तीर्थार्धं साधुसाध्वीलक्षणं तिरस्कृत्य केवलं

तत्रैवासक्तमिति गाथायुग्मार्थः ॥१-२॥ अथ तस्योपदेशं गाथाषट्केन विवक्षुः प्रथमगाथामाह—

अव्वत्तनिण्हगाभिनिवेसविसअंधयस्स पावस्स। उवएसो महपावो पवयणउवघायगो नियमा ॥३॥

अव्यक्तनिह्नवाः—तृतीयाः श्रीआषाढाचार्यशिष्याः अयं साधुर्देवो वेति निर्णयाभावेनाव्यक्तत्वमाश्रिता नो परस्परं विनयादिकं कुर्वन्ति तेषां योऽभिनिवेशः—(मिथ्यात्वं स इवाभिनिवेशः) एकस्याभिनिवेशस्य लोपस्तद्रूपं यद्विषं तेनान्ध एवान्धकः यथान्धो न किमपि चाक्षुषं घटादिकं पश्यति तथाऽयमप्यभिनिवेशमिथ्यात्वावृत्तान्तरलोचनो न साध्वादिकं पश्यति, एवंविधस्य पापस्य—पापात्मन उपदेशो महापापः, केवलपापरूप इत्यर्थः, ननूपदेशकः पापात्मा भणितस्तदुपदेशस्तु महापाप इति भणितं तत्कथमितिचेदुच्यते, उपदेशमन्तरेण भूयोऽपि पापं कुर्वन् पापात्मा भण्यते, तदुपदेशस्तु महापापं भण्यते, यदुक्तं—"एकत्रासत्यजं पापं, शेषं निश्शेषमेकतः। द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥१॥" इति श्रीयोगशास्त्रवृत्तौ, तथा चोपदेशवशादयं महापापात्मा भण्यते, तथापि तथाविधवाग्व्यापारहेतुक इतिकृत्वा उपदेश एव मुख्यवृत्त्या महापाप इति, अत एवाह—'पवयण'त्ति नियमात्—निश्चयेनोपदेशः 'प्रवचनोपघातकः' प्रवचनं—तीर्थमुपहन्तीति प्रवचनोपघातको भण्यते, प्रवचनोपघातकत्वं च सत्यपि साधुसमुदाये नास्माकं दृक्पथं साधवोऽवतरन्तीति तृतीयनिह्नवाभिप्रायमाविष्कुर्वन् व्यवहारनयलोपी स्यात्, तल्लोपे च तीर्थोच्छेदजन्यं पातकं स्यात्, यदागमः—"ववहारनउच्छेए तित्थुच्छेओ हवइऽवस्स"मिति पञ्चवस्तुके, एतच्च सर्वपापापेक्षया महापापमितिगाथार्थः ॥३॥ अथाव्यक्तनिह्नवाभिनिवेशतुल्यतां दर्शयितुमुल्लेखमाह—

अम्हं गुज्जरपमुहे मुणिणो वट्टंति नेव चक्खुपहं। जम्हा जहुत्तकिरिआपरायणा नेव दीसंति ॥ ४ ॥

अस्माकं गुर्जरप्रमुखे-गूर्जरमरूमालवसौराष्ट्रमेदपाटमेवातादिषु मुनयः-साधवो न चक्षुःपथं-दृग्मार्गं व्रजन्ति, न दृष्टिमायांतीत्यर्थः, एवोऽवधारणे, नैवेत्यर्थः, तत्र हेतुमाह-'जम्ह'त्ति यस्माद्यथोक्तक्रियापरायणाः-शास्त्रोक्तक्रियातत्परा न दृश्यन्ते, किंतु क्रियासु श्लथा इतिभावः, एवमव्यक्तनिह्नवोऽपि सम्यक्साधुनिर्णयाभावं ब्रुवाण आसीत्, परं तदपेक्षयाऽयं कटुकः क्लिष्टपरिणामः, यतः स ब्रूते-अयं साधुर्देवो वेति निर्णयो नास्माकं, परं साधवोऽत्रैव सन्ति, कटुकस्तु गूर्जरत्रावन्यादौ दृश्यमानाः साधव एव न भवन्ति, किंतु केवलद्रव्यलिङ्गधारिणः, साधवस्तु क्वापि वैताढ्यगिरिमूलादौ सर्वथा दृक्पथागोचरप्रदेशे सन्ति, एतच्च वचनं महादुर्वचनं, प्रवचनगन्धस्याप्युपघातकं, तेनाव्यक्तनिह्नवो देशेन सम्यक् तीव्रपरिणामवान् न स्याद्, अयं तु निह्नवापेक्षयाऽनन्तगुणाभिनिवेशपरिणामयुक्त इतिगाथार्थः ॥४॥ अथ तस्यापरिज्ञानसूचिका श्रोतॄणां भ्रान्तिजनिका च या युक्तिस्तामाह—

**संघथए जुगपवरा जे भणिआ तेसि संपयं जुत्तो। विरहो न कालसंखासंकलणे इअ वयं तस्स ॥ ५ ॥**

सङ्घस्तवे-श्रीदेवेन्द्रसूरिकृतदुष्षमाकालसंघस्तोत्रे ये युगप्रवराः-श्रीसुधर्मादयो युगप्रधाना भणितास्तेषां कालसंख्याः-युगप्रधानपदव्युदयकालसंख्यास्तासां संकलने-मीलने सम्प्रति-वर्त्तमानकाले विरहः-तदभावो न युक्तो-न संभवति, अयं भावः-श्रीसुधर्मस्वामिनोऽष्टौ वर्षाणि युगप्रधानपदवीकालः,श्रीजम्बूस्वामिनश्चतुश्चत्वारिंशद्वर्षाणि युग०,श्रीप्रभवस्वामिन एकादश वर्षाणि युग०, श्रीशय्यम्भवस्वामिनस्त्रयोविंशति० यशोभद्रस्वामिनः पंचाशत्० श्रीसंभूतविजयस्याष्टौ० श्रीभद्रबाहुस्वामिनश्चतुर्दश० श्रीस्थूलभद्रस्यैकोनपंचाशत् यु० एवमुदयद्वयसंबन्धिनी युगप्रधानपदव्युदयकालसंख्या भवतीति तस्य कटुकस्य वचो-वचनमुपदेशरूपमितिगाथार्थः ॥५॥ अथ तत्राप्युद्दीपनप्रकारमाह—

तेसुवि नामग्गाहं जे भणिआ सूरिणो महाभागा। उदयजुगे तेसिक्को नो दीसइ गुज्जरप्पमुहे ॥ ६ ॥

तेष्वपि-दुष्प्रसभपर्यन्तयुगप्रवरेष्वप्युदययुगे महाभाग्याः सूरयो नामग्राहं ये भणितास्तेषां मध्ये गूर्जरप्रमुखे-गूर्जरत्रावनिप्रभृतिष्वेको न दृश्यते, अपिर्गम्यः, एकोऽपि न दृश्यते इतिगाथार्थः ॥६॥ अथ तस्माद्वयं किं कुर्म इति तदाशयमाविष्करोति—

तम्हा कत्थवि अण्णत्थ साहुणो संति निअमओ भरहे। तेसिं निस्सा धम्मं मणसीकाउं पवट्टामो ॥७॥

यस्मात्प्रागुक्तं तस्मात्कारणादन्यत्र-दृश्यमानलिङ्गिप्रवृत्तिमद्भयोऽन्यत्र कुत्रापि नियमतः साधवः सन्ति भरते-भरतक्षेत्रे,'तन्निश्रया' तेषां साधूनां निश्रया-निश्रामङ्गीकृत्य धर्मस्तन्निश्राधर्मस्तं मनसि कृत्वा प्रवर्त्तामहे, तन्निश्रयाऽस्माकं धर्मो भवत्वित्यर्थः इतिगाथार्थः ॥७॥ अथ तस्योपदेशस्योपसंहारमाह—

एवं तस्सुवएसो केवलमुवघायगो पवयणस्स। मूढाण मोहजणओ धिक्कारपहो उ पण्णाणं ॥ ८ ॥

एवं-प्रागुक्तप्रकारेण तस्य कटुकस्योपदेशः केवलं प्रवचनस्योपघातकः,अपिर्गम्यस्तथाभूतोऽपि मूढानां-मूर्खाणां मिथ्यात्वोपहतमतीनां मोहजनको-मिथ्यात्वमोहनीयस्य दीर्घस्थित्या पारम्पर्येणानन्तकालस्थित्या जनकः,स एवोपदेशो धिक्कारपथस्तु प्राज्ञानां-पण्डितानां सम्यग्दृशाम्, अहो पापात्मा प्रवचनोपघातकं ब्रूत इत्येवंरूपेण तिरस्कारास्पदमितिगाथार्थः ॥८॥ इति कटुकस्योपदेशो दर्शितः, अथ यदुक्तं 'अम्हं गुज्जरे'त्यादि, तत्र प्रथमं बाधकमाह—

पयफम्मनकमुविसया न हुंति मुणिणोऽवि जस्स वग्गस्स। तब्भाईओ सड्ढो न हुज्ज पासत्थपमुहावि॥९॥

यस्य वर्गस्य-श्रावकाणां पार्श्वस्थादीनां वा समुदायस्य मुनयोऽपि-अपिरेवार्थे साधव एव प्रत्यक्षचक्षुर्विषया उपलक्षणात् तद्‌-

र्गगतस्य कस्यापि साधवः साक्षाद्दृक्पथमवतीर्णा न भवन्ति तज्जातिकः–तज्जातीयः तद्वर्गसंबन्धी श्राद्धः, अपिरध्याहार्यः,श्राद्धोऽपि-श्रावकोऽपि न भवेत्, नहि यज्जातीयेन साधवो न दृष्टा स तज्जातीयः श्रावकः संभवेत्, एवं पाश्वस्थप्रमुखा अपि बोध्याः, तीर्थे वर्त्तमाने श्रावक इति व्यपदेशव्यवहारविषयः स एव साधजातीयेन साधवो दृष्टा भवन्तीति गाथार्थः॥९॥ अथानन्तरोक्तयुक्तौ हेतुमाह–

जम्हा अद्धं तित्थं न हुज्ज कइआवि सड्ढसड्ढीओ। पासत्था पुण निअमा सुसाहुअविक्खया समए ॥१०॥

यस्मात्कारणात्कदाचिदपि अर्द्धतीर्थं श्राद्धश्राद्ध्यो न भवेत्, श्राद्धश्राद्धीरूपमर्द्धं तीथ न स्यादित्यर्थः, पार्श्वस्थाः पुनर्नियमेन सुसाधुसापेक्षकाः, यदि साधवो भवन्ति तदा भण्यंते एते पार्श्वस्थादयो; नान्यथा इति 'समये' जिनशासने, यावत्साधवो दृक्पथमागता न भवन्ति तावत्पाश्वस्थादिव्यपदेशोऽपि न संभवतीति गाथार्थः ॥१०॥ अथ तीर्थार्धं श्राद्धश्राद्ध्यः कथमित्याह—

चाउव्वण्णो संघो तित्थं तत्थवि अ तइअठाणगओ। सड्ढो साहुअभावे तित्थगओ नेव सड्ढोऽवि ॥११॥

चातुर्वर्णः संघस्तीर्थं–साधुसाध्वीश्रावकश्राविकालक्षणचतुर्वर्णात्मकमखिलं तीर्थं भवति, तत्रापि तृतीयस्थानगतः श्राद्धः, उपलक्षणात् श्राद्धी चतुर्थस्थानगता,इतिकृत्वा साध्वभावे तीर्थगतः–तीर्थान्तर्वर्त्ती श्राद्धोऽपि न भवेत्,तीर्थव्युच्छिन्ने प्रवृत्ते वा श्राद्धो नाममात्रेण कोऽपि स्यादपि, परं तीर्थवर्त्ती न स्यादेवेतिगाथार्थः ॥११॥ अथ तीर्थार्द्धं न भवतीत्यत्र व्याप्तिमाह—

उत्पत्ती पुण जुगवं जुगवं विगमोऽवि होइ तित्थस्स। तस्सऽद्धं जस्स मयं मयमाया तस्स खीरपया ॥१२॥

उत्पत्तिः पुनर्युगपत्तीर्थस्य, विगमोऽपि युगपद्भवति, तस्य अर्द्धं यस्याभिमतं–तीर्थार्द्धमपि संभवतीत्यादि धीः स्यात् यस्य तस्य मृता माता–जननी क्षीरप्रदा–स्तन्यपानविधायिनी संपन्ना, साध्वादिकमन्तरेण तीर्थार्द्धमसदपि सदितिधिया विकल्प्याराधनं मृत-

मातृस्तनचुम्बनकल्पमितिगाथार्थः ॥१२॥ अथ पार्श्वस्थादीनामप्युत्पत्तिस्वरूपमाह—

पासत्थाईणं चिअ संते तित्थंमि होइ उप्पत्ती। जह संतंमि सरीरे मलाइणो नन्नहा हुंति ॥१३॥

पार्श्वस्थादीनां 'चिय'त्ति निश्चये तीर्थे सत्येवोत्पत्तिः, आदिशब्दात् अवसन्नोत्सूत्रवादिनां परिग्रहः, तेन पार्श्वस्थादयः उत्सूत्रवादिनश्च, तीर्थे विद्यमाने सर्वजनप्रतीते सत्येवोत्पत्तिर्भवति, दृष्टान्तमाह-'जह संतंमि'त्ति यथा शरीरे सत्येव मलादयः-परिस्वेदसंबद्धरजोजन्यो मलो मलविशेषः आदिशब्दात् कृमिषट्पदादयो जीवस्वरूपाः कुष्ठज्वरभगन्दरादयो ह्यजीवरूपाः भेषजादिना साध्या असाध्याश्चानेकप्रकाराः भवन्ति,नान्यथा,शरीराभावे न भवन्तीत्यर्थः,अयं भावः—शरीरकल्पं तीर्थं मलसदृशाः पार्श्वस्थादयो बोध्याः, अत एव श्रीजगचन्द्रसूरिश्रीसोमसुन्दरसूरिश्रीआणन्दविमलसूरिप्रभृतयो गर्गाचार्यश्रीकालकाचार्यादिवत् मलमिव तीर्थबाधाकारिणं पार्श्वस्थादिसमुदायमपास्योग्रविहारं कृतवन्तः, यत्तु कश्चित्—ते सूरयोऽपि समुदायसदृशा एवासन् ,परं तथाविधं समुदायं तथाविधं च स्वाचारं परित्यज्यान्यत्र क्रियामाश्रिता इति ब्रूते तदसम्यग्, तथात्वे तीर्थोच्छेदापत्तेः, नहि तीर्थं संविग्नाचार्यविरहितं भवेत्, न च तादृशसमुदाये वर्त्तमान आचार्यः कथं पञ्चाचारवान् भवेदिति शङ्कनीयम्, अनुचितसमुदायवानपि संविग्नः सूरिर्भवेदपि, यदागमः—"चत्तारि रुक्खा पं०, तं०—साले नाममेगे सालपरिवारे, साले नाममेगे एरंडपरिवारे,एरंडे नाममेगे सालपरिवारे, एरंडे नाममेगे एरंडपरिवारे ४, एवामेव चत्तारि आयरिआ पं०, तं०—साले नाममेगे सालपरिवारे ४, सालदुममज्झयारे जहिं सालो नाम होइ दुमराया। इअ सुंदरआयरिए सुंदरसीसे मुणेअव्वे ॥१॥ एरंडमज्झयारे जहिं सालो नाम होइ दुमराया। इअ सुंदरआयरिए मंगुलसीसे मुणेअव्वे ॥२॥ सालस्स मज्झयारे एरंडे नाम होइ दुमराया। इअ मंगुलआयरिए सुंदरसीसे मुणेअव्वे

॥३॥ एरंडमज्झयारे एरंडे नाम होइ दुमराया। इअ मंगुलआयरिए मंगुलसीसे मुणेअव्वे ॥४॥ (३४९, २१-२४*) इतिश्रीस्थानाङ्गे चतुर्थस्थानके उ० ४, एतट्टीकादेशो यथा–तथा सालस्तथैव साल एव परिवारः–परिकरो यस्य स सालपरिवारः, एवं शेषत्रयमिति २०, आचार्यस्तु साल इव सालो गुरुकुलश्रुतादिभिरुत्तमत्वात् सालपरिवारः सालकल्पमहानुभावपरिकरत्वाद्, एवमेरण्डोऽपि श्रुतादिहीनत्वादिति, चतुर्थः सुज्ञानः, उक्तचतुर्भङ्गभावनार्थं सालद्रुमेत्यादिगाथाचतुष्कं व्यक्तं, नवरं मंगुलम्–असुंदरम्॥२१॥ अत्र सालवृक्षैरण्डपरिवारलक्षणद्वितीयभङ्गवर्त्तिनः श्रीआणन्दविमलसूरिप्रभृतयो ज्ञेयाः, ननु यदुक्तं संविग्नाचार्यविरहितं तीर्थं न भवेदिति तदयुक्तं, यत एरण्डवृक्षसालपरिवारकल्पोऽपि तृतीयभङ्गवर्त्ती सूरिरुक्त इति चेन्मैवं, तादृशाचार्यस्य तीर्थाधिपतित्वासंभवात्, यद्यपि तथाविधः कोऽपि सूरिर्भवेत्तथाप्यङ्गारमर्दकाचार्यवत् सामान्यसाधुवत्तीर्थाधिपतिसूरिनिश्रावान् स्यात्, तथा च न किंचिदनुपपन्नं, न चैवं श्रीहेमविमलसूरिप्रभृतयोऽपि भविष्यंतीति शङ्कनीयं, तदानीमन्यस्य तथाविधाचार्यस्यासंभवात्, कथमन्यथा दानर्षिश्रीपतिगणपतिलटकणार्षि तयो लुम्पकमतमपास्य श्रीहेमविमलसूरिपार्श्वे चारित्रं गृहीतवन्तः इति, तस्मात्तदानीं श्रीहेमविमलसूरिरेव तीर्थाधिपतिः, परं द्वितीयभङ्गवर्त्ती, श्रीआणन्दविमलसूरिरपि तथाविधसमुदायपरिहारानन्तरं प्रथमभङ्गवर्त्तीति बोध्यं, कृमि पट्पद्यादयस्तु शरीरान्तर्वर्त्तिरुधिरमांसादिभक्षणेन शरीरापकर्षका महापीडाकारिणो दुष्प्रतिकाराश्च तथाऽमी उत्सूत्रभाषिणोऽपि तीर्थस्य कृशतापादकाः, अतः कृमिपट्पद्यादिकल्पा उत्सूत्रभाषिणः, तेऽपि तीर्थे सत्येव संभवन्ति, ननु पार्श्वस्थोत्सूत्रभाषिणोः को भेदः ?, उभयोरपि तीर्थबाह्यत्वाविशेषादिति चेद् उच्यते, "सारणचइआ जे गच्छनिग्गया पविहरंति पासत्था। जिणवयणबाहिरावि अ ते उ पमाणं न कायव्वा ॥१॥" इत्यागमवचनात् पार्श्वस्थादयोऽपि यद्यपि प्रवचनबाह्यास्तथापि प्रवचनभयं मन्यमानास्तीर्थप्रत्यासन्नाः,

उत्सूत्रभाषिणस्तीर्थप्रवृत्तेरेव प्रवर्त्तमानास्तीर्थाद् दूरवर्त्तिनो नियमादनन्तसंसारिणो महापापात्मान इति विशेषः,तस्माद्यावति क्षेत्रे यस्मिंश्च काले पार्श्वस्थोत्सूत्रिणो भवन्ति तावत्क्षेत्रमध्ये तस्मिंश्च काले साधवोऽवश्यं भवन्त्येव, यावति क्षेत्रे यस्मिंश्च काले साधवस्तावत्क्षेत्रमध्ये तस्मिंश्च काले पार्श्वस्थादयो भवन्त्येवेति न नियमः, यतस्तीर्थोत्पत्तेरारभ्य न तीर्थपर्यन्तं तदुद्भवः, किंतु जमाल्यादयः तीर्थोत्पत्तेरनूत्पन्नास्तीर्थे सत्येव विलयं गताः, एवं सांप्रतीना अप्यापाशपर्यन्ता दशापि प्रायो दत्तराज्ञः कालादर्वागेव विलयं यास्यन्ति, तीर्थं तु दुष्प्रसभाचार्यपर्यन्तं, नहि रोगोऽपि शरीराभावे तिष्ठति, तिष्ठत्येव रोगाभावेऽपि शरीरं निराबाधमिति सर्वजनप्रतीतमितिगाथार्थः ॥१३॥ अथ दुष्षमासंघस्तोत्रमादाय यदुक्तवान् तद् दूषयितुमाह—

जं भणिअं संघथए इच्चाई तंपि मोहविण्णाणं। सुगुरुवएसाभावे कडुओ अण्णाणआवरिओ ॥१४॥

यद्भणितं 'संघस्तवे' इत्यादि तन्मोहविज्ञानं-मिथ्यात्वमोहनीमाहात्म्यं, यत इति गम्यं, यतः सुगुरूपदेशाभावे धर्मार्थिकोऽपि कटुको ह्यज्ञानावृतः अयं चोन्मार्गनामी तत्राश्चर्यं, यतः—"एकं हि चक्षुरमलं सहजो विवेकस्तद्वद्भिरेव सह संवसतिर्द्वितीयम्। एतद्द्वयं भुवि न यस्य स तत्त्वतोऽन्धस्तस्यापमार्गचलने खलु कोऽपराधः? ॥१॥" इतिगाथार्थः ॥१४॥ अथोद्भ्रान्तिस्वरूपमाह—

जुगपवराणं मज्झे जुगवं जाया य केऽवि जुगपवरा। तव्वरिसाणि अगणणापंतीइ ठविज्ज मूढमई ॥१५॥

युगप्रवराणां मध्ये केऽपि युगप्रवरा युगपद्-एकस्मिन् काले जाताः तद्वर्षाणि—तदीययुगप्रधानपदवीसंवत्सरान् गणनापङ्क्तौ स्थापयति मूढमतिः कटुकः, अयं भावः-एकस्मिन् काले ह्येको द्वौ वाऽनेके वा युगप्रवराः संभवन्ति, तेषां च यानि वर्षाणि तानि गणनापङ्क्तौ पृथक् २ संस्थाप्य संख्यासंकलनं करोति,एवं च क्रियमाणे काकतालीयन्यायेन किञ्चिन्न्यूनोऽप्युदयद्वयकालानुयायी कालः

संपद्यते, परमेतद्गणनं मुग्धजनभ्रामकं, यत एवं गणने मनुष्यक्षेत्रान्तर्वर्त्यनन्तपदार्थसार्थसंबद्धः समयमात्रोऽपि कालोऽनन्तकालतां भजते, एवं कटुकगणनकल्पनापि, नह्येतावता संमति युगप्रधानोऽवश्यं भवत्येवेति सिद्ध्यतीति गाथार्थः॥१५॥ अथ गूर्जरत्रावन्यादौ साध्वभावेऽतिप्रसंगद्वारा दूषयितुमाह—

**गूजरपमुहे समणा न हुंति जइ आगमोऽवि नो हुज्जा। सावयकुलजिणपडिमाठिईवि कह संभवइ भरहे ?॥१६॥**

गूर्जरप्रमुखे यदि श्रमणा-निर्ग्रन्था न भवन्ति, आगमोऽपि तर्हि न भवेत्तथा श्रावककुलजिनप्रतिमास्थितिरपि भरतक्षेत्रे कथं संभवति ?, श्रमणाभावे श्रावककुलस्य जिनप्रतिमानां च स्थितिरेव न स्यात्, ननु पार्श्वस्थादिभ्यः श्रावककुलजिनप्रतिमादीनां स्थितिर्भविष्यतीति चेदहो वैदग्ध्यं, साध्वभावे पार्श्वस्थादय एव कुत इति प्रागेव भणितं किं न स्मरसि ?, नहि मौलाभावेऽमुष्मात् अयं बाह्य इति वक्तुं शक्यते, 'बाह्यत्वं हि सापेक्ष'मिति वचनादिति गाथार्थः ॥१६॥ अथागमाद्यभावे गाथायुग्मेन हेतुमाह—

**जम्हा संपय तइओ परंपराआगमो जिणिंदुत्तो। सा दाणादाणेहिं तेऽविअ सुअजोगवाहीणं ॥१७॥**

**जोगा संजमकिरिआ संजमरहिआण नेव संभवइ। जेणमणुण्णादाणं इमस्स साहुस्स वयणेहिं ॥१७॥ युग्मं॥**

यस्मात्संप्रति गणधरशिष्यात् श्रीप्रभवस्वामिन आरभ्य दुप्पसभाचार्यं यावत्तृतीयः परंपरागमनामा आगमो जिनेन्द्रोक्तः, स परम्परया 'दानादानाभ्यां' श्रीप्रभवस्वामिना शय्यंभवाय दत्तः तेनादत्तो वा वा श्रीशय्यंभवस्वामिना च श्रीयशोभद्रस्वामिने दत्तस्तेन वाऽऽदत्त इत्येवंरूपेण गुरुशिष्यक्रमः परम्परा तया आगमः परम्परागमः, 'ते अपि' दानादाने अपि च पुनः 'श्रुतयोगवाहिनां'—विहितयोगानुष्ठानानां भवतः, योगाः—श्रुताराधनतपोविशेषाः संयमक्रियायाः, संयमरहितानां नैव संभवति, तत्रापि हेतुमाह—

'जेणमणु'त्ति येन कारणेनानुज्ञादानं योगानुष्ठाने उद्देशसमुद्देशानन्तरमनुज्ञाननन्दीकरणे अनुज्ञा तावत् 'इमस्स साहुस्स वयणेहिं'न्ति इमं पुण पट्ठवणं पडुच इमस्स साहुस्स इमाए साहुणीए वा अमुगस्स अंगस्स सुअक्खंधस्स वा अणुण्णानंदी पवत्तइ"त्ति इत्येवंरूपेण साधुमाध्व्योरेवाध्ययनाध्यापनविधिरुक्तः, तेषामेव सूत्रादिदाने ग्रहणे वा अनुज्ञा, यद्यपि श्रीआवश्यकश्रुतस्कन्धाध्ययनस्य सामायिकादिसूत्रस्य श्रावकवर्गस्याप्यनुज्ञा तथापि सा न साधोरिव, यतस्तेषां "अणुण्णायं २ खमासमणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं सम्मं धारिज्जाहि गुरुगुणेहिं वड्ढिज्जाहि"त्ति, साधूनां च 'अणुण्णायं २ यावत् सम्मं धारिज्जाहि अण्णेसिं च पविज्जाहि'त्ति साधूनामेव दानानुज्ञा, न पुनः श्रावकाणामिति श्रावकेभ्यः परम्परागमो न भवति, किंतु साधुभ्य एवेति साध्वभावे तदायत्तस्य परम्परागमस्याप्यभाव इति गाथायुग्मार्थः ॥१७-१८॥ अथ योगादिविधानेन सूत्राध्ययनं पार्श्वस्थादीनामपि दृश्यते, तत्र गतिमाह—

जं पुण कत्थवि लिंगी जोगविहाणेण भणइ सुत्ताइं। तं साहूणऽणुकरणं जह निण्हागस्स पडिकमणं ॥१८॥

यत्पुनः कुत्रचित्, न पुनः सर्वत्रापि, लिङ्गी-पार्श्वस्थादिर्योगविधानेन सूत्राणि भणति तत्साध्वनुकरणं, तच साध्वभावे न स्यादेव, यथा निह्नवस्य प्रतिक्रमणं साध्वनुकरणं, निह्नवस्य प्रतिक्रमणासंभवात्, प्रतिक्रमणं तावत्पापनिवर्त्तनं, तच निह्नवस्य लेशतोऽपि न संभवति, किंतु प्रतिक्रमणं कुर्वन्नेव च प्रतिसमयमनन्तसंसारभाग् भवेद्, एतच्च प्राग् प्रदर्शितमिति गाथार्थः॥१८॥ अथानुकरणमेव समर्थयितुं गाथामाह—

साहुजणस्साभावे न दव्वलिंगी न निण्हवो होइ। अणुहरणिज्जाभावे अणुहरणं कस्स को कुज्जा ?॥१९॥

साधुजनस्याभावे न द्रव्यलिङ्गी नवा निह्नवो भवेद्, अनुहरणीयाभावे अनुहारम्-अनुकारं कस्य कः कुर्यादितिगाथार्थः॥१९॥

अथ कटुकमते दृश्यमाना लिङ्गिनः सर्वेऽपि पार्श्वस्थादयो मिथ्यादृष्टय एव, यतः-सावज्जजोगपरिवज्जणाइ सव्वुत्तमो जईधम्मो। बीओ सावगधम्मो तइओ संविग्गपक्खपहो ॥१॥ सेसा मिच्छदिट्ठी गिहिलिंगकुलिंगदव्वलिंगेहिं। जह तिन्नि उ मुक्खपहा संसारपहा तहा तिन्नि ॥२॥ (५१९-२० उप.) इति प्रवचनवचनम्, एवं च सति यद् दूषणं भवति तदाह—

**केवलमिच्छादिट्ठी समवाउ जिणिंदवुद्धिसंजुत्तो। जिणपडिमाणं पूअणपमुहं न करेइ निअमेणं ॥२०॥**

केवलमिथ्यादृष्टिः समवायो-जनसमूहः, समवाउ इति प्राकृतत्वादुत्वमपि, तेन न छन्दोभङ्गः, जिनेन्द्रबुद्धिसंयुक्तो-जिनप्रतिमानां पूजनप्रमुखं-सप्तदशादिभेदैः पूजनं शक्रस्तवादिना स्तवनं चेत्यादि नियमेन-निश्चयेन न करोति, न विदधात्येवेत्यर्थः, दृश्यते च कुर्वाणोऽतो न मिथ्यादृष्टिः, किंतु सम्यग्दृष्टिरेव, स च साधुषु साधुबुद्धिमानेव स्याद्, एवं च साधवोऽवश्यं भावनीया इतिगाथार्थः ॥२०॥ अथ केवलमिथ्यादृष्टिसमवायस्य श्रावककुलत्वमपि न स्यादिति दर्शयति—

**सावयकुलंपि एवं विण्णेअं जं च बाहिराणंपि। उस्सुत्तभासगाणं भणणं तं तित्थअणुकरणं ॥२१॥**

एवं-प्रागुक्तयुक्त्या श्रावककुलमपि विज्ञेयं, यच्च बाह्यानां-तीर्थाद्बहिर्भूतानामुत्सूत्रभाषकाणां भणनमर्थाच्छ्रावककुलमिति तच्च मूर्खजनानां पुरस्तात्तीर्थानुकरणमितिगाथार्थः ॥२१॥ अथ तीर्थानुकरणे दृष्टान्तमाह—

**जह बालिआ य मिलिआ करिंति परिणयणकिच्चअणुकरणं। ढिंगिल्लिआइविसयं एवं तित्थाउ बाहिरिआ ॥२१॥**

यथा बालिकाः-अव्यक्तकुमार्यो मिलिता-एकसमुदायीभूताश्च ढिंगिल्लिकाविषयं परिणयनकृत्यानुकरणं, यथा लोके दृष्टं वधूवरयोः सद्भूतयोः परिणयनकृत्यं गीतादिना तथैव ढिंगिलिकां पुरस्कृत्य कुर्वन्ति, परं यदि तत्कृत्यं दृष्टं न भवेत्तर्हि तदनुकर्तुं न

शक्नुवन्ति, एवं पार्श्वस्थनिह्नवादयोऽपि यदि साधुपरम्परागतानुष्ठानं दृष्टिपथमागतं न भवेत्तर्हि तदनुकरणाशक्ता एव भवेयुरिति, एवं तीर्थबाह्या अपि बोध्या इतिगाथार्थः ॥ २२ ॥ अथ कटुकेन यथोक्तक्रियापरायणाः संप्रति साधवो न दृश्यन्त इति भणितं यत्तद् दूषयितुमाह—

जं पुण जहुत्तकिरिआ इच्चाइविगप्पवयणउब्भाओ । महपावो जिणसमए पवयणउवघायगत्तणओ ॥२३॥

यत्पुनः यथोक्तक्रिया इत्यादि 'जम्हा जहुत्तकिरिआपरायणा नेव दीसंती'ति चतुर्थगाथाया उत्तरार्द्धं भणितं तेन यथोक्त-क्रिया इत्यादि विकल्पवचनयोरुद्भावः-प्रकाशनं मूर्खजनानां पुरस्ताद्भणनं महापापो जिनसमये-जैनसिद्धान्ते, कुत इति हेतुमाह—प्रवचनोपघातकत्वाद् एतादृश उपदेशः प्रवचनोपघातको भवति, यदागमः—"सत्त विगहाओ पं०, तं०—इत्थिकहा १ भत्तकहा २ देसकहा ३ रायकहा ४ मिउकालुणिआ ५ दंसणभेअणी ६ चरित्तभेअणी ७"त्ति(५६९)श्रीस्थानाङ्गे, एतट्टीकादेशो यथा चारित्र-भेदनी-न संभवन्तीदानीं महाव्रतानि,साधूनां प्रमादबहुलत्वादतिचारप्रभूतत्वादतिचारशोधकाचार्यतत्कारकसाधुशुद्धीनामभावादिति ज्ञानदर्शनाभ्यां तीर्थं वर्त्तत इति ज्ञानदर्शनकर्त्तव्येष्वेव यत्नो विधेय इति, उक्तं च—"सोही अ णत्थि न विही न करिंता नविअ केइ दीसंति । तित्थं च णाणदंसण निज्जवगा चेव वोच्छिन्ना ॥१॥" इतीत्यादि, अनया हि प्रतिपन्नचारित्रस्यापि तद्वैमुख्यमुपजायते, किं पुनस्तदभिमुखस्येति चारित्रभेदनीति इति स्थानाङ्गटीकायाम्, अत्र चारित्रभेदनी विकथा भणिता तादृशश्च तदुपदेशः, सच प्रव-चनोपघातक एवेति गाथार्थः ॥२३॥ अथ यथोक्तक्रियाकारित्वमेवेह साधूनामिति समर्थयितुमाह—

जेणं जहुत्तकिरिआपरायणा संति साहुणो निच्चं । महकप्पं अहिगिच्चा किच्चं पुण सत्तिसंकलिअं ॥२४॥

तस्य कटुकस्योपदेशो महापापः, कथं ?, येन यथोक्तक्रियापरायणाः साधवो 'नित्यं' तीर्थस्थितिं यावद्भवन्ति, किमाश्रित्य ?—श्रद्धानमधिकृत्य, श्रद्धानं तु यथा श्रीसुधर्मादीनां तथा संप्रति गूर्जरत्रादौ विद्यमानानामपि, कृत्यं पुनः शक्तिसंकलितं, न हि तीर्थकृतोऽशक्यानुष्ठानप्ररूपका भवन्ति, अत एव धर्मदेशनायां साधुमार्गे प्ररूपिते तत्राशक्तानां श्रावकमार्गमप्युपदिशन्ति, तथा साधूनामप्यनेके जिनकल्पिकादयो भेदाः शक्त्यनुसारेणोपदिष्टाः, अन्यथोपदेशस्य वैफल्यापत्तेः, न हि बलवानपि वृषभो गजं वोढुं शक्नोति, अत एव 'संते बले वीरिए पुरिसकारपरक्कमे अट्ठमीचउद्दसीणाणपंचमीपज्जोसवणाचाउम्मासीए चउत्थट्ठमछट्ठे न करेइ पच्छित्तं''ति श्रीमहानिशीथवचनं, तेन शक्त्यभावे बाह्यानुष्ठानेषु प्रतिक्रमणादिनियतानुष्ठानव्यतिरिक्तेषु वा अप्रवर्त्तमानोऽपि जिनाज्ञाऽऽराधको भण्यते, न चैवं पार्श्वस्थादिमार्गोऽपि जिनाज्ञारूपो भविष्यतीति शङ्कनीयं, तेषां सत्यामपि शक्तौ प्रमादादैहिकसुखलाम्पट्यात् प्रतिक्रमणादिबाह्यानुष्ठानानासेवनं, आसेवनं च जिनेन्द्रप्रतिषिद्धानामनुचितकृत्यानां, न पुनस्तेषां ज्ञानाद्याराधनधिया सम्यगभिप्रायेणेतिकृत्वा बाह्यकृत्यं तावच्छक्तिसंकलितं भणितमिति गाथार्थः ॥२४॥ अथ शक्तिरपि न्यूनाधिका केन हेतुनेत्याह—

सत्तीवि अ दव्वाईसंकलिआ तेऽवि पंच परवसया। तेणं जिणकप्पाई वुच्छेओ जिणवरिंदुत्तो ॥२५॥

च पुनः शक्तिरपि—जीवसामर्थ्यमपि द्रव्यादिसंकलिता—द्रव्यक्षेत्रकालभावनाश्रिता, द्रव्यं—वज्रर्षभनाराचादिसेवार्त्तपर्यन्तशरीरलक्षणं, उपलक्षणात्तदनुयायि मनःप्रभृतिद्रव्यमपि ग्राह्यं, मनोद्रव्याणामपि परिणतिः संहननानुसारेणैव स्याद्, अत एव प्रथमसंहननमन्तरेण सप्तम्यां मोक्षे वा न याति, सेवार्त्तसंहननिनां तु द्वितीयपृथिव्यां चतुर्थदेवलोके चोत्कर्षत उत्पत्तिर्भणिता, तादृग्द्रव्ययोगेन जीववीर्यस्य तथैव संभवात्, न ह्युपकरणाभावे बलवानपि कार्यकरणसमर्थो भवति, यथा जातमात्रो भगवान् श्रीमहा-

वीरोऽप्यनन्तबलवानपि सुरगिरौ पादाङ्गुष्ठमोचनेन सुरेन्द्रं संज्ञापयामास, न पुनर्वाक्प्रयोगेण, वाक्प्रयोगहेतोर्जिह्वायास्तथा सामर्थ्याभावात्, क्षेत्रमप्यार्यानार्यादिलक्षणं, तदपि कार्यकरणे बलवदबलवद्वा स्यात्, अत एव "तिहिं ठाणेहिं(ततो ठाणाइं) देवे पिहेज्जा, तं०–माणुस्सभवे आयरिअखित्ते सुकुले पच्चाआइ"त्ति (१०८)श्रीस्थानाङ्गवचनात् क्षेत्रमधिकृत्य बोध्यादिलाभसंभवः,कालोऽपि दुष्षमादिलक्षणोऽध्यक्षसिद्ध एव, दुष्षमाकालोत्पन्नानां तथाविधसंहननादिसामग्रीसहितानां प्रायो मनःप्रभृतीनां सामर्थ्यं स्वल्पमेव भवति, तत्र कालानुभाव एव बोध्यः,यतः–सत्तहिं ठाणेहिं ओगाढं दूसमं जाणेज्जा,तं०–अकाले वरसइ १ काले न वरसइ २ असाहू पुज्जंति ३ साहू न पुज्जंति ४ गुरुहिं जणो मिच्छं पडिवण्णो ५ मणदुहया ६ वओदुहया ७ (५५९) इतिश्रीस्थानाङ्गवचनं, अत्र पञ्चमकालोत्पन्नानां कालानुभावादेव मनोदुःखता वचोदुःखता च भणिता, सा च संयतानामपि संहननादिवत् सर्वत्रापि समाना, भावोऽपि द्रव्यादिसहकृतानां तारतम्यादिभेदेन षट्स्थानकपतितो भवति, तेन महाव्रतानि सम्यगाराधयन्तोऽपि साधवः पृथक् २ स्थानस्थितिसौख्यादीनां भोक्तारः परलोकेऽपि जायन्ते,तेन संप्रति साधूनां द्रव्यादिसामग्रीवशात्तथाविधवीर्यान्तरायकर्मक्षयोपशमात् न पूर्वसाधुवद् विकृष्टतपःप्रभृतिषु सामर्थ्यं, 'तेऽपि' द्रव्यादयोऽपि 'पञ्चपरवशकाः' पञ्चशब्देन कालस्वभावनियतिपूर्वकृतपुरुषकारलक्षणः पञ्चसमवायस्तस्य परवशकाः–तदायत्ताः, अयं भावः–द्रव्यादीनामपि कालादिसमवायानुसारेणैव परिणतिः, तेन कारणेन 'जिनकल्पादिव्युच्छेदो जिनवरेन्द्रोक्तः' संप्रति काले जिनकल्पो न भवति, तद्योग्यसंहननश्रुताद्यभावाद्, अत एव कारणानुरूपं कार्यमिति भाव इति गाथार्थः ॥२५॥ अथ विशेषतः कालबलमतिदिशन्नाह—

एवं महव्वयाइं चउपंचविगप्पविसयभूआइं । उज्जुजडा उज्जुपण्णा वंकजडा जं जिआ जाया ॥२६॥

एवं-प्रागुक्तश्चतुष्पञ्चविकल्पविषयाणि महाव्रतानि भवन्तीति गम्यं, चत्वारि च पञ्च च चतुष्पञ्च तथा तद्रूपा वा विकल्प-श्चतुष्पञ्चविकल्पस्तस्य विषयीभूतानि महाव्रतानि, अत्र न कारणं मुख्यवृत्त्या काल एव, प्रथमचरमजिनयोः काले पञ्च महाव्रतानि, शेषाणां तु काले चत्वारि, यद्-यस्मात्कालानुभावाज्जीवा जाताः, कीदृशाः ?-ऋषभजिनकाले ऋजुजडाः अजितादिजिनकाले ऋजुप्राज्ञाः श्रीवीरकाले च वक्रजडाः, चकारोऽध्याहार्यः, तत्र ऋजुजडानां चारित्रपालनं सुकरं, परं विशोधिः दुःसाध्या, ऋजुप्राज्ञानां पालनं विशोधिश्चेत्युभे अपि सुकरे, वक्रजडानां तु पालनं विशोधिश्चेत्युभे अपि दुःसाध्ये, यदागमः-"पुरिमा उज्जुजड्डाओ, वंकजड्डाउ पच्छिमा। मज्झिमा उज्जुपण्णा उ, तेण धम्मे दुहाकए ॥१॥ पुरिमाणं दुव्विसुज्झो उ चरमाणं दुरणुपालओ कप्पो। मज्झिमगाणं तु भवे सुविसुज्झे सुपालए ॥२॥" इतिश्रीउत्तराध्ययने (८५७-८*) ननु ऋजुप्राज्ञानां चारित्रं युक्तं, परं ऋजुजडानां कथमिति चेद्, उच्यते, सत्यामप्यनाभोगतः स्खलनायामृजुजडानां तीव्रसंक्लेशाभावाद्भावतः शुद्धत्वात्स्थिरभावेन चारित्रपरिणामस्तीर्थकृद्भिर्निर्दिष्टः, तथा सहकारिवशेन कादाचित्को योऽस्थिरभावोऽपि न चारित्रपरिणामं हन्ति, न यस्मिसंपर्कादुष्णमपि वज्रं वज्रत्वमपि जहातीति, यदाहुः श्रीहरिभद्रसूरिपादाः-"एवंविहाण व इहं चरणं दिट्ठं तिलोगनाहेहिं। जोगाण थिरो भावो जम्हा एएसि सुद्धो उ ॥१॥ अथिरो अ होइ भावो (इय ते) सहकारिवसेण ण पुण ते हणइ"त्ति (पंचा० ८३९) नन्वेवं युक्तश्चरणानपगम ऋजुजडानामार्जवलक्षणस्य गुणस्य सद्भावाद्, वक्रजडानां पुनर्दोषद्वयसद्भावात् कथमसाविति चेदित्यत्राप्युच्यते, यथा ऋजुजडानामनाभोगतः स्खलना तथा 'मायैव वक्रते'ति वचनाद्वक्रजडानां प्रायः कालानुभावतोऽभक्न्मातृस्थानादेव, तच्च संज्वलनकषायाणामेवातिचारहेतुत्वात् तत्संगतमेवात्र प्रायं,नेतरत्,तस्य चारित्राद्युपहन्तृत्वाद्, यदुक्तं-"सव्वेऽवि अ अइआरा संज-

लणाणं तु उदयओ हुंति। मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं ॥१॥ (३-१२२नि.) इति, यच्चामीषां जडत्वं तन्मेधामधिकृत्यैव बोध्यं, न पुनः परकीयलक्ष्यामिप्रायमाश्रित्यापि, यद्वा वक्रजडानां जडत्वं मायायामेवान्तर्भवति, यतस्ते जानन्तोऽपि परभत्यायनार्थं माययैवासदप्यात्मीयं जडत्वमाविष्कुर्वन्ति, तस्माज्जडत्वमुपचरितं, माया तु वास्तव्येवेति मायाहेतुका चारित्रस्खलनेति भाव इति, केचिच्चातिचारबाहुल्याद्दुष्षमायां चारित्रमेव न मन्यंते, तदप्यसमञ्जसमेव, "न विणा तित्थं नियंठेहिं"ति प्रवचनान्निर्ग्रन्थैर्विना तीर्थस्यैवासंभवाद्, व्यवहारभाष्ये त्वेवंविधवक्तॄणां महतः प्रायश्चित्तस्योक्तत्वाच्च,तथा "जो भणइ नत्थि धम्मो नय सामइअं न चेव य वयाइं। सो समणसंघवज्झो कायव्वो समणसंघेण ॥१॥" इत्याद्युक्तेश्च, तस्मात्पूर्वसाध्वपेक्षया हीनतरक्रियापरिणामवत्त्वेऽपि नृपगोपविपवृषभपुष्करिण्याद्यागमोक्तदृष्टान्तेन दुष्षमासाधूनां साधुत्वमेवेत्यादि यत्तु वक्तव्यं ग्रन्थन्तरादवगन्तव्यमितिगाथार्थः ॥२६॥ अथ प्रागुक्तानां सर्वेषामपि साधूनां साधारणस्वरूपमाह—

**सव्वेवि मुत्तिपहिआ तिलोक्कमहिआ य हुंति मुणिपवरा। तेणं कडुओ बहुओ मोत्तव्वो पावमुत्तिव्व ॥२७॥**

सर्वेऽपि ऋजुजडऋजुप्राज्ञवक्रजडलक्षणा 'मुक्तिपथिकाः' मोक्षपथगामिनस्त्रैलोक्यमहिताः—त्रिलोकजनपूजिताश्च भवन्ति, किंलक्षणाः ?—'मुनिप्रवराः' मुनीनां मध्ये प्रधानाः, सर्वेऽप्यविशेषेणैवाराध्यस्थानमित्यर्थः, यतस्ते कालानुभावात्तथा परिणता इति न दोषः, कालानुभावाद्यो दोषः सोऽकिञ्चित्कर एव, नहि तद्दोषेणाराध्यपदमपि न भवति, किंतु कालदोषेण यतनाऽनुज्ञा, यदागमः—"कालस्स य परिहाणी संजमजुग्गाइं नत्थि खित्ताइं। जयणाइ वट्टिअव्वं नहु जयणा भंजए अंगं ॥१॥" (२९४) श्रीउपदेशमालायां, अत एव तदाशातनाऽपि तद्धीलने,यदागमः—"जे आवि मंदत्ति गुरुं वइत्ता, डहरे इमे अप्पसुअत्ति नच्चा। हीलंति

मिच्छं पडिवज्जमाणा, करिंति आसायण ते गुरूणं ॥१॥" इतिश्रीदशवै०, अत्र बहुश्रुतानां श्रीसुधर्मस्वाम्यादीनां हीलने यथा मिथ्यात्वं तथा कालानुभावादल्पश्रुतादिगुणवतामप्याचार्यादीनां हीलनेऽपीत्यविशेषेण भणितं, कालादिदोषस्योपेक्षणीयत्वाद्, यत एवं तेन कारणेन 'कटुकः' कटुकनामा गृहस्थस्तत्पृष्ठलग्नोऽन्योऽपि बटुक इव-बटुकसदृशवेषधारित्वाद्बटुको मोच्यः, किंवत् ?- पापमूर्त्तिवद्, अयं पापमूर्त्तिरित्यवगम्य मोच्य इतिगाथार्थः ॥२७॥ अथ प्रागुक्तेन किं संपन्नमित्याह—

एएणमुत्तरपहे मुणिणो संतित्तिवयणमवि खित्तं। जह अडवीथलवडिओ कडक्करो बंभणाइट्ठो ॥२८॥

एतेनोत्तरापथे मुनयः सन्तीति वचनमपि क्षिप्तं-निरस्तं, दृष्टान्तमाह-यथा अटवीस्थलपतितः कटत्कारो ब्राह्मणादिष्टो निरस्तः, अयं भावः-यथा कश्चिद्घोरब्राह्मणः क्वापि ग्रामे कणवृत्तिं कर्त्तुं गतः, तत्र चैकः कुलपतिः प्रकृत्या कृपणः, तस्य च वृद्धत्वेन हेतुना धर्मकरणेच्छा समुत्पन्ना, तस्य गृहे मन्दा वृद्धा च गौरस्ति, सा च स्वस्तिभाणनपुरस्सरं तस्मै ब्राह्मणाय दत्ता, द्रम्मचतुष्टयं दक्षिणापि, परं स ब्राह्मणोऽनभ्यासात् मूर्खत्वाच्च स्वग्रामं प्रति नयनप्रकारमनवगच्छन् कुलपतिना कटत्कारनामानं गोहक्कनशब्दं शिक्षितः, स च कटत्कारशब्देन गां हक्कयन् अटवीस्थले प्राप्तः, तत्र चैकं पीलुवृक्षं फलितं दृष्ट्वा पीलुफलानि भक्षितुं लग्नः, तावता तादृशी गौः श्रान्ता सती भुव्युपविष्टा, स च ब्राह्मणः तृप्तीभूय गोसमीपमागतः, परं गोरुत्थापनशब्दः कटत्कारो विस्मृतः, असौ भुवि नष्ट इति धिया भुवं शोधयितुं लग्नो यावन्मध्याह्नेऽध्वनि गच्छन्नेकः पथिकस्तत्रागतः, तेन पृष्टं-भो विप्र ! किमटवीस्थलं शोधयसि ?, तेनोक्तं- महर्द्धिकेन कुलपतिनाऽर्पितो मदीयः कटत्कारो नष्टः तं शोधयामि, तेन पथिकेन ज्ञातं-कटत्कारनामकं किंचित्सौवर्णं रौप्यकं वा नाणकं भविष्यति, तेनोक्तं-यद्यहं लाभयामि तर्हि मह्यमर्द्धं दास्यसि ?, ब्राह्मणेनोक्तं-भवतु, सोऽपि तद्वदटवीस्थलीं शोधयितुं

लमः, एवं च सति सायं जातं, स च पथिकः खिन्नः सन् गोरधो भविष्यतीतिधिया गोः समीपमागत्य कटत्कारशब्देन गाश्चुत्था-पयामास, तावता ब्राह्मणेनोक्तं-लब्धो भो कटत्कारः, तेनोक्तं-देहि मह्यम्यं विभागं, ब्राह्मणेनोक्तं-त्वमप्येतादृशं शब्दं कुर्वाणो याहि, पथिकेनोक्तं-तत्र किं नष्टमासीत्?, तेनोक्तम्-एतादृशः शब्दः, पश्चात्स पथिकः खेदखिन्नो ब्राह्मणमाक्रोशयामास-भो मूर्ख ब्राह्मण! मुधाऽहं विडम्बितः, प्रथमत एव किमेवं न भणितवान्?,मयाऽवगतं-किंचिन्नाणकं भविष्यति,ब्राह्मणेनोक्तं-भोः पथिक! त्वमेव मूर्खस्त्वमेव व्यक्तया कथं न पृष्टवानित्येवं परस्पर विवदमानयोर्द्वयोरपि(रात्रिर्जाता)रात्रौ व्याघ्रव्यापादितौ पञ्चत्वं प्राप्तौ, पश्चादुभयोरपि प्रवृत्तेरकिंचित्करत्वेन लोकेऽपकीर्त्तिः प्रवृत्ता, तथा कटुकस्य तदुपदेशलग्नस्य चोत्तरापथे साधुजनगवेषणमकिञ्चि-त्करमिति सर्वजननिन्द्यं, तत्र साधुजनगन्धस्याप्यनवगमाद्, एवमेतद्दृष्टान्तेन कटुकोक्तं निरस्तमितिगाथार्थः ॥२८॥ अथ कटुक-स्योत्तरापथसाधुविकल्पं दूषयितुमाह—

उत्तरपहमणुआणं न हुंति जइ कालमाइणो दोसा। ता इत्तो लट्ठयरे मण्णामो साहुसङ्घाए ॥२९॥

उत्तरापथमनुष्याणां कालादयो दोषा यदि न भवन्ति तर्हि 'इत्तो'त्ति एतस्मात् क्षेत्राद् अर्थादितरक्षेत्रगतसाधुसमुदायात् साधु-संघया लष्टतरान्-श्रेष्ठतरान् मन्यामहे, एवं च नास्ति, किंतु सर्वत्रापि संहननकालादीनां तुल्यतैवेतिगाथार्थः ॥२९॥ अथ सामग्र्यां तुल्यायामपि कार्यं भिन्नं भवत्विति दूषयितुमाह—

जइ तुल्ला सामग्गी कज्जंपिअ तुल्लमेव जगमग्गो। नवि हत्थकारणेहिं तंतूहिं तिहत्थमाणपडो ॥३०॥

यदि सामग्री तुल्या कार्यमपि तुल्यमेवेति जगन्मार्गो-लोकस्थितिः, दृष्टान्तमाह-'नवि'त्ति हस्तकारणैः-हस्तप्रमाणवस्त्रस्य कारणैः

यैस्तन्तुभिर्वस्त्रं यत्स्वरूपं यावदायामदैर्घ्येण हस्तप्रमाणं जायते तावद्भिस्तन्तुभिस्तावदायामदैर्घ्येण त्रिहस्तप्रमाणः पटो नापि–नव भवति, कारणवैषम्यादेव कार्यवैषम्यमितिन्यायात्, कालादिसामग्र्यां तुल्यायां यथाऽत्रत्याः साधवस्तथा संभवन्तोऽप्युत्तरापथे तथाविधा एव, न पुनर्यष्टिबल्यादिवत् वत्सरं यावत्कायोत्सर्गादिकरणसमर्था इतिगाथार्थः ॥३०॥ अथ तस्याग्रहमतिप्रसङ्गेन दूषयितुमाह–

एवंपिअ जइ उत्तरपहंमि विहरंति उग्गचारित्ता । ता सिद्धंतो अण्णो इमो उ जंजालसारित्थो ॥३१॥

एवमपि–प्रागुक्तयुक्तिमुपेक्ष्यापि यदि उत्तरापथे उग्रचारित्राः साधवो विहरन्ति 'ता'तर्हि सिद्धान्तोऽन्यः, अप्येवयोरध्याहारात्सिद्धान्तोऽप्यन्य एव, तत्साधुसंबन्धी सिद्धांतोऽप्यन्य एव सिद्ध्यति, अयं तु गूर्जरत्रादौ दृश्यमानोऽङ्गोपाङ्गादिरूपः जंजालसदृशः–स्वप्नराज्यकल्पः संपन्न इतिगाथार्थः ॥३१॥ अथ सिद्धान्तभेदहेतुमाह—

जं देवड्ढिप्पमुहा इमंमि भणिआ य उग्गचारित्ता । ते खलु गुज्जरपमुहे संजाया सम्मया समए ॥३२॥

यत्–यस्मात्कारणाद् अस्मिन् गूर्जरत्रादौ विद्यमाने सिद्धान्ते 'देवर्द्धिप्रमुखा' देवर्द्धिगणिक्षमाश्रमणप्रमुखा उग्रचारित्रा भणिताः, यदागमः–"सुत्तत्थरयणभरिए खमदममद्दवगुणेहिं संपन्ने। देवड्ढिखमासमणे कासवगुत्ते पणिवयामि ॥१॥"इतिश्रीपर्युषणाकल्पे, आदिशब्दाच्छ्रीकालकाचार्यश्रीखपुटाचार्यप्रभृतयो युगप्रधाना ग्राह्याः, एतावता किमित्याह–'ते खलि'ति ते–देवर्द्धिगणिक्षमाश्रमणप्रमुखाः खलु–निश्चितं गूर्जरप्रमुखे देशे जाताः 'समये' सिद्धान्ते सम्मताः, यद्ययं सिद्धान्ते सम्मतस्तर्हि तदनुजाः–शिष्यप्रशिष्यादयोऽप्यत्रैव भावनीयाः, नो चेदयं सिद्धान्त एव परिहर्त्तव्य इतिगाथार्थः ॥३२॥ अथ प्रकारान्तरेण दूषयितुमाह—

सिद्धंतभासगुणिणप्पमुहाणं कारगावि इह जाया । ता सूसमसंघथए वीसासो कह णु कुडअस्स ? ॥३३॥

सिद्धान्तस्य अङ्गादिग्रन्थसमूहस्य भाष्यचूर्णिप्रमुखाणां कारकाः श्रीजिनभद्रगणिक्षमाश्रमणश्रीजिनदासगणिमहत्तरश्रीदेवर्द्धिगणिक्षमाश्रमणश्रीउमास्वातिवाचकप्रमुखाः,आदिशब्दाच्छ्रीशीलाङ्काचार्यश्रीअभयदेवसूरिश्रीमलयगिरिसूरिश्रीहेमचन्द्रसूरिप्रभृतयस्तट्टीकादिविधायका इह–गूर्जरादौ जाताः,ते च सर्वेऽपि कटुकाभिप्रायेण मिथ्यादृष्टयः पार्श्वस्थादय एव, तत्कृताश्च ग्रन्थाः कथं सिद्धान्तःसिद्धांतव्याख्यानं च संभवेद्, एवं च सति तथाविधग्रन्थानुसारेण श्रीदेवेन्द्रसूरिभिर्दुष्षमासंघस्तोत्रं कृतं तत्र कटुकस्य तु वितर्के कथं विश्वासः समुत्पन्नः ?,यदि तत्र विश्वासस्तर्हि साधवोऽप्यत्रत्या एवाभ्युपगन्तव्याः,अन्यथा 'माता मे वन्ध्ये'ति न्यायः संपद्यते,किंच–सिद्धान्ताननुसारेण नमस्कारमात्रस्याप्यध्ययनं संसारवृद्धिहेतुः,यतः श्रीमहानिशीथे उपधानोद्वहनमन्तरेण नमस्कारभणनेऽनन्तानां तीर्थकृदादीनामाशातनाकारको भणितः,तथा गृहस्थेन सता कटुकमतीयेन पर्षदि धर्मदेशना विधीयते साऽपि न युज्यते, कदाचिद्गृहस्थो धर्मं कथयति तदा गुरुपारतन्त्र्येणैव यथा अद्य श्वो वा गुरुभिरित्थमादिष्टमित्येवंरूपेण,न पुनः सभाप्रबन्धेन,यदुक्तं–'पडिसिद्धाणं करणे किचाणमकरणए पडिक्कमणं। असद्दहणे अ तहा विवरीअपरूवणाए अ ॥४४॥ इतिश्रावकप्रतिक्रमणसूत्रे, अस्याश्चूर्ण्येकदेशो यथा–ननु 'अण्णाणतिमिरहरो विबोहगो भव्वपुंडरीआणं। धम्मो जिणपण्णत्तो पकप्पजइणा कहेअव्वो ॥१॥ इति, तो णं सावगस्स परूवणाऽभावाओ कहं तव्विवरीअयाए पडिक्कमणं ?, आयरिओ भणइ–सच्चमेअं, किंतु सयं तस्स समोसरणपूरणाए सावगस्स देसणाए पडिसेहो, जओ–सुतित्थाओ गहिअसुत्तत्थो सुनिच्छिअत्थो गुरुपरतंतवयणो अणुप्पेहं करेइ, कुणउ नाम को दोसो ?, जो वा पच्छाकडो वागरणनयनिउणो खित्तकालपरिसाविसारओ नंदिसेणपाओ तस्स धम्मस्स परूवणावि संभवइ, ता पडिक्कमणं अदुट्ठ"मिति श्रावक प्र० चूर्णौ, अत्र पश्चात्कृतव्यतिरिक्तेन गृहस्थेनानुप्रेक्षा कर्त्तव्या इत्युक्तम्,

अनुप्रेक्षा चार्थचिन्तनिका, सा वाचनाप्रच्छनापरावर्तनानुप्रेक्षाधर्मकथालक्षणपञ्चविधस्वाध्यायानां मध्ये चतुर्थो भेदः, साऽप्यनुप्रेक्षा तेन कर्त्तव्या येन सुतीर्थात्सूत्रार्थौ गृहीतौ स्याताम्, एवंविधोऽपि निश्चितसूत्रार्थो, न पुनः संदिग्धसूत्रार्थधारकः, सोऽपि गुरुपरतन्त्रो-गुर्वायत्तः, न चैवं कडुकमते तद्गन्धोऽपि संभवति, गूर्जरत्रादौ सुतीर्थस्यैवाश्रद्धानात्तदभावाच्च कुतो गुरुपारतन्त्र्यं ?, 'ग्रामो नास्ति कुतः सीमे'ति गुरुपारतन्त्र्याभावे च सूत्रार्थनिश्चयोऽपि न संभवति, यदागमः-"मूअं हुंकारं वा बाढक्कार पडिपुच्छ वीमंसा। तत्तो पसंगपारायणं च परिणिठ्ठ सत्तमए।।१।।"त्ति(१-८९ ३-२३*)श्रीआवश्यकनिर्युक्तौ, तथा "संहिआ य पयं चेव, पयत्थो पयविग्गहो। चालणा य पसिद्धी य, छव्विहं विद्धि लक्खणं ॥१॥" इति ( १३५* ) श्रीअनुयोगद्वारे इति, चालनाद्यभावात् कुतः सूत्रार्थनिश्चयः ?, कडुकेन तु वैपरीत्यभाजिनैवास्तामनुप्रेक्षा धर्मकथैव क्रियते, धर्मकथा च स्वाध्यायस्य पञ्चमो भेदः, स च गृहस्थानां निषिद्धः, यदागमः-"चत्तारि पुरिसजाया पं०, तं०-आघवित्ता नाममेगे नो उंछजीविसंपन्ने उंछजीविसंपन्ने नाममेगे नो आघवित्तए" (३४४) इतिश्रीस्थानाङ्गे, एतट्टीका यथा आख्याय एवाख्यायकः सूत्रार्थस्य न चोञ्छजीविकासंपन्नः, नैषणानिरत इत्यर्थः, स चापद्गतः संविग्नः संविग्नपाक्षिको वा,यदाह-हुज्ज हु वसणं पत्तो सरीरदुत्थियतयाएँ असमत्थो। चरणकरणे असुद्धो सुद्धं मग्गं परूवेज्जा ॥१॥" तथा "ओसन्नोऽवि विहारे कम्मं सिढिलेइ सुलहबोही अ। चरणकरणे विसुद्धं उववूहंतो परूवंतो॥२॥"त्ति एको, द्वितीयो यथाच्छन्दः तृतीयः सुसाधुश्चतुर्थो गृहस्थादिरिति इतिश्रीस्थानाङ्गटीकायां, अत्र गृहस्थश्चतुर्थे भङ्गे भणितः, स च सूत्रार्थख्यापको न स्यात्, कडुकमते तु सामायिकादिसूत्राख्यायको गृहस्थ एव, तन्मते साधोर्दर्शनस्यैवाभावात्, साध्वभावे च संविग्नपाक्षिकस्याप्यभावात्, तदभावे च कुतः सूत्रार्थावाप्तिरिति कडुकमतेऽत्रत्यसिद्धान्ताभावात्कथं युगप्रधानादिनिर्णयः ?, किञ्च-

कटुकमते उत्तरापथवर्त्तिनां साधूनां सिद्धान्ते गूर्जरत्रावनिवर्त्तिन एव युगप्रधाना उक्ता भविष्यन्ति तदा कटुकस्य का गतिः?, कथं वा तन्निर्णय इति सर्वकालसंदिग्ध एव स्तोत्रमात्रमङ्गीकृत्योद्भ्रान्तचेता उभयभ्रष्ट इतिगाथार्थः ॥ ३३ ॥ अथोत्तरापथसाधुनिश्रामालम्ब्य धर्मकृत्यं कुर्म इति कदाशयं दूषयितुमाह—

**उत्तरपहमुणिनिस्सं अवलंबिअ धम्मकिच्चमिह कुणिमो । तंपिअ मिअतिण्हाभं विदेहयाणंपि किं नेव ? ॥३४॥**

उत्तरापथसाधुनिश्रामवलंब्य च यद्धर्मकृत्यं कुर्मस्तन्मृगतृष्णाभं–मरुमरीचिकाकल्पं, यतस्तद्दृष्ट्वा जलाशया धावमानो न जललाभभाग्भवति तथाऽप्युत्तरापथसाध्वाशया प्रवर्त्तमानो न धर्मभाग् भवति, यतो विदेहजानां साधूनां किमेवं न निश्रां करोति?, उभयत्राप्यदर्शने विशेषाभावेऽप्युत्तरापथसाधूनां निश्रामङ्गीकृत्य धर्मं करोति तर्हि विदेहजानां साधूनामेव कुर्विति तात्पर्यं, नन्वेवमेव भवत्विति चेन्मैवं, विदेहजानां साधूनां निश्रया धर्मकृत्यस्याप्यसंभवाद्, अत एव वर्षाकालस्थितानामपि साधूनां यद्याचार्यः शरीरात्पृथग्भूतो भवेत्तर्हि गच्छान्तराचार्याश्रयणार्थं ग्रामानुग्रामविहारकरणानुज्ञा, यदागमः–"पंचहिं ठाणेहिं कप्पति निग्गंथाण वा २ गामाणुगामं दूइज्जित्तए, तं०–नाणट्ठयाए दंसणट्ठयाए चरित्तट्ठयाए आयरियउवज्झाए वा से तस्स विसुंभेज्जा आयरिउवज्झायाणं बहिआ वेयावच्चकरणयाए" त्ति (४१३) श्रीस्थानाङ्गे, एतट्टीकादेशो यथा–'आयरिअउवज्झाए' त्ति समाहारद्वन्द्वस्तद् आचार्योपाध्यायं वा 'से' तस्स भिक्षोः 'विसुंभेज्जाहि' विष्वक्–शरीरात्पृथग् भवेत्–जायेत, म्रियेतेत्यर्थः, ततस्तत्र गच्छेऽन्यस्याचार्यादेरभावाद्गणान्तराश्रयणार्थमिति **श्रीस्थानांगटीकायां**, अत्र यदि महाविदेहवर्त्तिनामाचार्यादीनां निश्रया चारित्राराधनमभविष्यत्किमिति साधूनामपि चतुर्मासकस्थितानामपि गणान्तराचार्याश्रयणार्थं विहारकरणानुज्ञामदास्यत्, तस्मादत्रत्यसाधुनिश्रयैव धर्मकृत्यं श्रेयो,

नान्यथेत्यदृश्यमानानामप्युत्तरापथवर्त्तिनां युगप्रधानादिसाधूनां निश्रया धर्मं कुर्म इति कटुककदाशापि निरस्तेति गाथार्थः ॥३४॥
अथ सिंहावलोकनन्यायेन देवगुरुधर्माणां त्रयाणामपि सर्वजनप्रतीतामप्याशातनां विवक्षुः प्रथमं देवाशातनामाह—

**संपुण्णसेसवेसो मत्थयमुग्घाडिऊण जिणभवणे । पविसइ विरूवरूवो जिणवरआसायणाणन्नो ॥३५॥**

संपूर्णः शेषः—पादघटिकाव्यतिरिक्तो गृहस्थोचितो वेषो यस्य स संपूर्णशेषवेषः जिनभवने द्वारं यावत् संपूर्णवेषः सन् जिनभवने मस्तकमुद्घाट्य पादघटिकामुत्तार्य विरूपरूपो—बीभत्सरूपाकारः प्रविशति, तेन हेतुभूतेन स कटुकः कीदृशः ?—जिनवराशातनानन्यः—जिनेन्द्राशातनायामनन्यः, अन्य एतादृशो न भवतीत्यर्थः,जिनभवने चाशातनाश्चतुरशीतिः,ताश्चेमाः—खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५ तंबोल ६ मुग्गालिअं ७, गाली ८ कंगुलिआ ९ सरीरधुवणं १० केसे ११ नहे १२ लोहिअं १३ । भत्तोसं १४ तय १५-पित्त १६ वंत १७ दसणे १८ विस्सामणं १९ दामणं २०, दंत २१ त्थी २२ नह २३ गल्ल २४ नासिअ २५ सिरो २६ सोअ २७ च्छवीणं २८ मलं ॥१॥ मंतुम्मीलण २९ लिक्खयं ३० विभजणं ३१ भंडार ३२ दुट्ठासणं ३३,छाणी ३४ कप्पड ३५ दालि ३६ पप्पड ३७ वडी ३८ विस्सारणं ३९ नासणं । अक्कंद ४० विकहं ४१ सरच्छघडणं ४२ तेरिच्छसंठावणं ४३, अग्गीसेवण ४४ रंधणं ४५ परिक्खणं ४६ निस्सीहिआभंजणं ४७ ॥२॥ छत्तो ४८ वाहण ४९ सत्थ ५० चामर ५१ मणोऽणेगत्त ५२ मब्भंगणं ५३,सचित्ताणमचाय ५४ चायमजिए ५५ दिट्ठीइ नो अंजली ५६ । साडेगुत्तरसंगभंग ५७ मउडं ५८ मोलिं ५९ सिरोसेहरं ६०,हुड्डा ६१ जिंडुह ६२ गिड्डिआइ रमणं ६३ जोहार ६४ भंडक्किअं ६५ ॥३॥ रिक्कारं ६६ धरणं ६७ रणं ६८ विवरणं ६९ बालाण पल्लत्थिअं ७०, पाऊ ७१ पायपसारणं ७२ पुडपडी ७३ पंकं ७४ रओ ७५ मेहुणं ७६ । जूअं ७७ जस्सण ७८ सुज्जु ७९ जीवि ८० वणिजं ८१ विज्जं ८२ जलं ८३ मज्जणं ८४, एमाईअमवज्जकज्जमुज्जुओ वज्जे जिणिंदालए ॥४॥

इति चतुरशीत्याशातनाकाव्यानि ॥ कला–धनुर्वेदादिकाः ४ कुललयं–गण्डूषं ५ भचोसं मुखासिका १४ त्वचं–व्रणादिसंबन्धिनीं पातयति १५ पित्तं धातुविशेषं औषधादिना पा० १६ दामनं–अजादीनां २० दंताक्षिनखगण्डनासिकाशिरःश्रोत्रच्छवीनां मलं जिनगृहे त्यजति, तत्र छविः–शरीरं, शेषास्तदवयवाः २८ ॥ १ ॥ मन्त्रं–भूतादिनिग्रहलक्षणं राजादिकार्यालोचनं वा तत्र करोति २९ क्वापि स्वकीयविवाहादिकृत्ये निर्णयाय वृद्धपुरुषाणां तत्रोपवेशनं ३० लेखनं व्यवहारादि ३१ राजादिकार्यं विभजनं विभागं वा दायादीनां तत्र करोति ३२ भांडागारं निजद्रव्यादेः ३३ दुष्टासनं पादोपरि पादस्थापनादिकं ३४ छाणी–गोमयपिण्डः ३५ कर्प्पटं–वस्त्रं ३६ दालिः–मुद्गादिद्विदलरूपा ३७ पर्प्पटः ३८ वटिका ३९ एषां विसारणं–उद्वापनकृते विस्तारणं, नाशनं–राजदायादिभयेन चैत्यस्य गर्भगृहादिष्वन्तर्धानं ४० आक्रन्दनं–रोदनं पुत्रकलत्रादिवियोगेन ४१ शराणां–बाणानामिक्षूणां च घटनं, सरत्थपाठे तु शराणामस्त्राणां च–धनुरादीनां च घटनं ४२ परीक्षणं द्रम्मादीनां ४७ ॥२॥ छत्रोपानदादीनां बहिरमोचनं ५२ त्यागः–परिहारः 'अजिए'त्ति अजीवानां हारमुद्रिकादीनां बहिस्तान्मोचनेन अहो भिक्षाचराणामयं धर्म इत्यवर्णवादो दुष्टलोकैर्विधीयते ५९ मुकुटं मस्तके धरति ५८ मौलिं–शिरोवेष्टनविशेषणरूपां५९ शेखरं कुसुमादिमयं विधत्ते६० हुड्डां पारापतनालिकेरसंबन्धिनीं पातयति ६१ जिंड्हः–गेन्दुकः ६२ जोत्कारकरणं पित्रादीनां ६४ भाण्डानां–विटानां क्रिया कक्षावादनादिका ६५ ॥३॥ विवरणं–बालादीनां विजटीकरणं ६९ पर्यस्तिकाकरणं ७२ पादुका–काष्ठादिमयं चरणरक्षणोपकरणं ७१ पादयोः प्रसारणं स्वैरं निराकुलतायां ७२ पङ्कं–कर्दमं करोति निजदेहावयवक्षालनादिना ७४ रजो–धूलिं तत्र पादादिलग्नां शाटयति ७५ यूका मस्तकादिभ्यः क्षपयति वीक्षयति वा ७७ गुह्यं–लिङ्गं तस्यासंवृतस्य करणं, जुज्झमिति पाठे तु युद्धं–दृग्बाहूवादिभिः ८० वैद्यकं८१ वाणिज्य–क्रयक्रियादिकरूपं ८२

शय्यां कृत्वा तत्र स्वपिति ८२ जलं पानाद्यर्थं तत्र मुञ्चति पिबति वा८३ तथा मज्जनस्थानं करोति ८४॥ इत्याशातनाकाव्यावचूरिः॥ अत्र पञ्चपञ्चाशत्तमाशातना द्वारमुद्रिकादिबहिर्मोचनेनाहो भिक्षाचराणामयं धर्म इत्यादिजनापवादलक्षणा भणिता, परिहितशेषवेषस्योद्घाटितमस्तकस्य तु साक्षाद्विरूपदर्शनस्य सुतरां महाशातनेति बोध्य, या तु मौलिधरणे षष्टितमा आशातना भणिता सा तु शिरोवेष्टनविशेषजन्या, ननु शिरोवेष्टनविशेषस्तु गृहस्थस्य स्वाभाविकवेषान्तःपातिनी या पादघटिका तस्या उपरि पट्टस्त्रवेष्टनं तद् बोध्यं, यथा ब्राह्मणो मनुष्यविशेषः सहकारो वृक्षविशेष इत्यत्र विशेषशब्दस्य व्यवच्छेद्या ब्राह्मणव्यतिरिक्ताः क्षत्रियादयो मनुष्याः राजादनप्रभृतयो वृक्षाश्च, तथा शिरोवेष्टनविशेष इत्यत्रापि विशेषशब्देन पादघटिकादि व्यवच्छेद्यं, नतु सामान्येन शिरोवेष्टनमेव ग्राह्यं, विशेषशब्दस्य वैयर्थ्यापत्तेः, एतच्च सम्यक्शब्दपरिज्ञानशून्येन कटुकेन न ज्ञातमिति जिनेन्द्राशातनाबीजमज्ञातमितिगाथार्थः॥ ३५॥
अथ पादघटिकात्यजने कटुकं कटुकयुक्तिमाह—

तित्थंकरेण सद्धिं माणो कह जुत्तिजुत्तओ जुत्ति ?। जंपेइ नय मुणेई मुणीहिवि समं सम दोसं ॥३६॥

तीर्थंकरेण सार्द्धं मानः-अभिमानः कथं युक्तियुक्तको-युक्तिक्षमो ?, न भवतीति, युक्तिकटुकः कथयति, न च मुनिभिः समं-सार्द्धं समं-समानं दोषं जानाति, अयं च दोषो मुनिभिः सह समान एव,यतो मुनिभिः सहाप्यभिमानो न युक्तः, अतो मुनिस्थानेऽपि प्रविशन् पादघटिकारहित एव युक्तः स्यात्, तच्च कटुकेन नाभ्युपगतमतो ज्ञानविकलः कटुक इतिगाथार्थः ॥ ३६ ॥
अथ गुर्वाशातनामाह—

गुरुआसायणमूलं उप्पत्ती अस्स लुंपगस्सेव। जिणपडिमाणं लोए आबालं जाव जगपडहो ॥३७॥

अत्र कटुकस्योत्पत्तिरेवकारोऽध्याहार्यस्तदुत्पत्तिरेव साध्वाशातनामूलं, यतः कटुक उत्पन्नमात्र एव न मम गुरवो दृक्पथमायान्तीति वचोमात्रेण साधूनामाशातनाकारी, दृष्टान्तमाह-'लुम्पकस्येवे'त्यादि, इह यथा लुम्पकस्योत्पत्तिरेव जिनप्रतिमानामाशातनामूलं, स चोत्पन्न एव नास्माकं प्रतिमासु देवत्वबुद्धिः संपद्यते, अयं भावः-यदि कटुकः साधुमङ्गीकरोति लुम्पकस्तु जिनप्रतिमां तर्हि तयोर्व्यवच्छेदः स्यात्, तदनङ्गीकारमूलकत्वात्तयोः, एतच्चाबालं-बालकमा-मर्यादीकृत्य जगत्पटहो वर्त्तते-आबालगोपांगनानामपि कटुको गुरुप्रत्यनीको लुम्पाकस्तु जिनप्रतिमानामिति प्रतीतमितिगाथार्थः ॥३७॥ अथ धर्माशातनामाह—

गुरुपरतंतविरहिओ धम्मुवएसं मुणिव्व गिहिलिंगी। कुव्वंतो धम्मस्सवि आसाई तेण लिणहंपि ॥३८॥

गुरुपारतन्त्र्यरहितो गृहस्थलिङ्गी मुनिवद्धर्मोपदेशं कुर्वन् धर्मस्याशाती-धर्मस्याशातनाकारी, अयं भावः-कदाचिच्छ्रावको धर्मं कथयति तदा गुरव इत्थमादिशन्तीत्येवं गुरुपरतन्त्रो धर्मं कथयति, न पुनः सभाप्रबन्धेन साधुवद्धर्मदेशनां कुरुते, अयं चैतद्विलक्षणोऽतो धर्मस्याशातकः, तेन कारणेन त्रयाणामपि देवगुरुधर्माणामप्याशातनाकारी अनन्तसंसारपरिभ्रमणमूलं कटुकः स्वस्यान्येषां च तदुपदेशवशगानामितिगाथार्थः ॥३८॥ अथ कटुकमतस्योपसंहारमाह—

गिहिजिणबिंबपइट्ठापुण्णिमपक्खिप्पमुहमिहमखिलं। पुण्णिममयसारित्थं पुण्णिमविस्सामओ णेअं ॥३९॥

कटुकमते साध्वनङ्गीकारात् गृहिणो जिनविम्बप्रतिष्ठाऽभिमता, श्रावकेण जिनविम्बप्रतिष्ठा कर्त्तव्या, न पुनः साधुभिः, तथा पञ्चदश्यां पाक्षिकमित्यादि सर्वं पूर्णिमीयकमतसदृशं पौर्णमीयकविश्रामाद् बोध्यमिति गाथार्थः ॥३९॥

एवं कुवक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। चक्खुप्पहावरहिओ कडुओ भणिओ य अट्ठमओ॥४०॥

इअ कुवक्खकोसिअसहस्सकिरणंमि पवयणपरिक्खावरनामंमि कडुअमतनिराकरणनामा नवमो बिस्सामो समत्तो * ॥

इति श्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्याय-
श्रीधर्मसागरगणिविरचिते स्वोपज्ञकुपक्षकौशिकसहस्रकिरणे
श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि
॥ कटुकमतनिराकरणनामा नवमो विश्रामः समाप्तः ॥

# अथ दशमो बीजामतनिराकरणो दशमो विश्रामः

अथ क्रमप्राप्तं बीजामतमाह—

अह बीजामयकुमयं वुच्छं संखेवओ जहा जायं। विक्कमकाला सत्तरिअहिए पन्नरससयवरिसे ॥१॥

अथेति अष्टमकटुकमतनिरूपणानन्तरं क्रमप्राप्तं बीजामतरूपं यत् कुमतं तत् संक्षेपतः—संक्षेपेण वक्ष्ये, कथं यथाजातं येन प्रकारेण जातं तदनतिक्रमेणेत्यर्थः, विक्रमकालात् सप्तत्यधिकपंचदशशतसंवत्सरे १५७० वर्षे जातमिति गाथार्थः॥१॥ अथोत्पत्तिस्वरूपमाह—

लुंपकमयवेसहरो भूनउ नामेण आसि तस्सीसो। बीजक्खो मुक्खयरो तेणवि अंगीकया पडिमा ॥२॥

लुम्पकमतवेषधरः भूनउ इति नाम्ना आसीत्, तस्य शिष्यो बीजाख्यो—बीजा इति नाम यस्य, स कीदृशो?—मूर्खतरः—अतिशयेन मूर्खः, शास्त्राध्ययनमधिकृत्य सर्वथा तद्रहित इत्यर्थः, तेनापि—एवंविधेनापि प्रतिमा—नाममात्रेण जिनप्रतिमा अङ्गीकृतेति गाथार्थः ॥२॥ तदनु किं कृतवानित्याह—

सोऽवि गओ मेवाते मेवाडे जत्थ साहुअविहारो। लोयाणमसुहकम्मोदएण कट्ठं तवं कुणइ ॥३॥

सोऽपि—बीजाख्योऽपि मेवातदेशे तथा मेदपाटदेशे च यत्र साधूनामविहारो—यत्र साधूनां विहारो नास्ति तत्र गतो लोकानामुपलक्षणादात्मनोऽपि अशुभकर्मोदयेन कष्टं—कष्टदायि तपः करोति, ननु लोकानामशुभकर्मोदयः कथमिति चेत् उच्यते, यदि लुम्पकमत एवास्थास्यत् तर्हि जनानामास्था नाभविष्यत्, किंतु लुम्पकमतमपास्य जिनप्रतिमा स्वीकृता तेन लोकः परमार्थानभिज्ञो

ज्ञातवान्-अहो लुम्पकमपास्य प्रतिमाऽभ्युपगता, कष्टं तपः करोति, अत एतदीयं वचः सत्यमिति तदुक्तमुन्मार्गमाश्रितः, स च प्रवचनप्रतिकूलो नियमादनन्तसंसारकारणमिति लोकानामशुभकर्मोदय इति गाथार्थः ॥३॥ अथ लोकः किं कृतवानित्याह—

आयावणभूमीए आयावणपरायणं जणो दट्ठुं। तस्स समीवे भणणइ मग्गिज्जा जं वयं देमो ॥४॥

आतापनाभूमौ आतापनापरायणम् अर्थात् तं बीजं दृष्ट्वा जनो नाम्ना जैनोऽपि प्रवचनपरमार्थानभिज्ञस्तत्समीपे भणति-भो बीजर्षे! त्वं मार्गय यद्वयं दद्म इति जनः कृतवानिति गाथार्थः ॥४॥ अथैवमुक्ते बीजः किं कृतवानित्याह—

सो उवएसासत्तो भणेइ मुक्खोऽवि पुण्णिमापक्खं। पंचमिपज्जोसवणं कुणंतु अम्हाण निस्साए ॥५॥

स उपदेशाशक्तः-उपदेशदाने सामर्थ्यरहितः आतापनाकष्टेनैव जनं व्यामोहयन् मूर्खोऽपि सन् भणति-यदि समीहितं दत्थ तर्हि पूर्णिमापाक्षिकं पंचमीपयुषणां च अस्माकं निश्रया कुर्वन्त्विति बीजाख्यो भणितवानिति गाथार्थः ॥५॥ अथ पुनरपि लोकः किमुक्तवानित्याह—

लोओऽविय परमत्थं अमुणंतो भणइ होउ एवंपि। कालऽणुभावा वुड्ढं अवस्सभवियव्वयाजोगा ॥६॥

लोकोऽपि च परमार्थं-जिनवचनरहस्यमजानानो भणति-एवमपि भवतु, एवं मूर्खादपि प्रवृत्तमेतन्नाम्ना मतं कालानुभावात् अवश्यभवितव्यतायोगात् वृद्धम् ,अन्यथा मूर्खशेखरनिर्नामकादकिञ्चित्करमनुष्यमात्रादपि एतावद्विस्तारयापि कुमतं कथं प्रवर्त्तेतेति गाथार्थः ॥६॥ अथास्य स्वरूपमाह—

वेसो लुंपकसरिसो नवरं दंडेण होइ संजुत्तो। उवएसो पुण आगममयसरिसो होइ पाएणं ॥७॥

वेषः पुनरस्य लुम्पकसदृशः, ततो निर्गतत्वात् तदनुकारकृदेव, नवरं दण्डेन संयुक्तो भवति, लुम्पकस्य दण्डाभावः, अस्य च तद्ग्रहणमिति,उपदेशः पुनरागममतसदृशः,आगमशब्देनागमिकस्त्रिस्तुतिकस्तन्मतं पक्षं तत्सदृशः, प्रायेण–बाहुल्येन,न पुनः सर्वथाऽपीति गाथार्थः ॥७॥ अथास्योपसंहारमाह—

**सुयखित्तदेवयाईथुइदाणनिसेहगो जओ एसो। तम्हाऽऽगममयविस्सामुत्तं सव्वंपि इह नेयं ॥८॥**

श्रुतदेवतादिस्तुतिदानिनिषेधको यत एषोऽपि तस्मात् आगममतविश्रामोक्तं सर्वमपीह ज्ञेयमिति गाथार्थः ॥८॥ अथ शेषप्ररूपणामतिदिशन्नाह—

**पुण्णिमपक्खपमुहं पुण्णमिअपल्लविअणामविस्सामे। वित्थरओ जह ठाणा भणियं तं इहवि विन्नेयं ॥९॥**

पूर्णिमापाक्षिकप्रमुखं, आदिशब्दात् पंचमीपर्युषणानिरूपणं च क्रमेण पौर्णिमीयकस्तनिकनामविश्रामयोर्विस्तरतो यथा स्थाने भणितं तदिहापि विज्ञेयं, अयं भावः–पूर्णिमापाक्षिकोपधानमालारोपणनिषेधादिकं पौर्णिमीयकमतविश्रामे तदभिप्रायमुद्भाव्य दूषितं तत्तु तत्रोक्तमत्रापि वाच्यं, पंचमीपर्युषणाचर्चादिकं स्तनिकविश्रामे भणितमतस्ततो ज्ञेयमिति गाथार्थः ॥९॥

**एवं कुवक्खकोसिअ ९। णवमो भणिओ य बीजकुवो ॥१०॥ नवहत्थ० ॥११॥ इअ सा० ॥१२॥**

गाथात्रिकव्याख्यानं प्रथमविश्रामोक्तव्याख्यातो ज्ञेयमिति ॥१०-११-१२॥

**इअ कुवक्खकोसियसहस्सकिरणंमि पवयणपरिक्खावरणामंमि बीजाकुमतनिराकरणनामा**

**दसमो विस्सामो सम्मत्तो ॥**

इतिश्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणिकृते स्वोपज्ञकुपाक्षिक-
कौशिकसहस्रकिरणे श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि प्रकरणे बीजामतनिरूपणनामा
दशमो विश्रामः समाप्तः ॥

अथ दशमं पाशचन्द्रमतं निरूपयितुमाह—

अह पासचंदकुमयं दसमं वुच्छामि धुत्तधुत्तयरं। विक्कमओ बावत्तरिअहिए पन्नरससयवरिसे ॥१॥

अथेति नवमबीजामतनिरूपणानन्तरं क्रमप्राप्तं दशमं पाशचन्द्रकुमतं वक्ष्ये, कीदृशं तत् कुमतम्?—धूर्त्तधूर्त्ततरं—धूर्त्तानां मध्ये धूर्त्ततरं, अतिशयेन धूर्त्तमित्यर्थः, कालमाह—'विक्कमओ'त्ति विक्रमतो द्वासप्ततिसहिते पंचदशशतवर्षे जातमितिगाथार्थः॥१॥ अथ पाशचन्द्रः कुतः कीदृगासीदित्याह—

नागपुरीयतवगणे उज्झाओ पासचन्दनामेणं । नियगणसूरिविरोहा वुव्वयणो लुंपगुव्वासी ॥२॥

नागपुरीयतपागणे पाशचन्द्रनाम्नोपाध्यायः सन् निजगणसूरिविरोधात्—निजगच्छाचार्येण सह विग्रहात् लुंपकवद्दुर्वचन आसीत्, यथा लुम्पकलेखकेन भणितं—भो अहं जीवन् भवामि तर्हि भवदीयभिक्षोच्छेदं करोमि, एवं पाशचन्द्रेणाप्युक्तमिति बोध्यमिति गाथार्थः ॥२॥ अथ पाशचन्द्रस्य जात्यादिस्वरूपमाह—

जाईइ कणययारो लिंगहरो कहवि कम्मजोएणं। संजाओ धुत्तमई पावमयपरूवणारसिओ ॥३॥

जात्या स कनककारः–सुवर्णकारः, कथमपि कर्मयोगेन लिंगधरः संजातः, कीदृशः?–धूर्त्तमतिः–परवंचनाकुशलः पापमत-प्ररूपणारसिकः, यथा एते गच्छास्तथा मन्नाम्नाऽपि कोऽपि गच्छो भवत्वित्यभिप्रायकलित इति गाथार्थः॥३॥ अथ तेन किं कृतमित्याह–

बहु चिंतिऊण कुमयं परूवियं उभयपाससंकासं। पडिमाऽणुकूलपडिवक्खपक्खफासीचि दुक्खनिही ॥४॥

बहु–अतिशयेन चिन्तयित्वा कुमतं स्वनाम्ना प्ररूपितं,किंलक्षणम्?–उभयपाशकल्पं, तत्र हेतुमाह–'पडिमाणु'त्ति प्रतिमानुकूल-प्रतिकूलपक्षस्पर्शि, अपिरेवार्थे, दुःखनिधिरेव–अनन्तसंसारपरिभ्रमणदुःखनिधानमेव, अयं भावः–पाशचन्द्रेण धूर्त्तधिया विचारितं–अहं किंचित्तथाविधं प्ररूपयामि येन प्रतिमानुकूलास्तपाप्रभृतयः तत्प्रतिक्षा लुंपकाश्चेत्युभयेऽपि मदायत्ता भवन्तीति विचार्योभये-षामपि पाशकल्पं मतं प्ररूपितं, परं श्रीआणंदविमलसूरिश्रीविजयदानसूरिभिस्त्वरितमेव लोकानुकम्पया सारा चक्रे, तेन तच्छिष्योपाध्यायश्रीविद्यासागरप्रभृतिभिस्त्वरितमेवोभयपाशश्छिन्नः, तेन न वृद्धिमगात्, बहवस्ततो मोचिता इति गाथार्थः ॥४॥ अथैवं प्ररूपणारसिकः कथमासीदित्याह—

सद्दहणधम्मरहिओ जिणवयणविगोवणंमि नडचरिओ। निज्जुत्तिभासचुण्णीछेअउच्छेअछेअमई ॥५॥

यतः स श्रद्धानधर्मरहितः, आस्तां जैनधर्मे, शैवधर्मेऽपि तस्य श्रद्धानं नासीत्, नन्वेवं तस्य श्रद्धानं कथमवगतमिति चेदुच्यते, यतोऽन्ये कुपाक्षिकमताकर्पका नास्माकं प्रत्यक्षा अभूवन्, परमयं त्वध्यक्षसिद्ध एवासीत्, स चास्मत्पूज्यैरुदीरितः–ननु भो पाश-चन्द्र! किमिति नवीनमतव्यवस्थापनोद्यतः?, न हि गणनिश्रामन्तरा धर्मो भवति, यदागमः–"धम्मं चरमाणस्स पंच निस्साठाणा

पन्नत्ता, तं०—काया गणे राया गाहावती सरीरं" इतिश्रीस्थानांगपंचमस्थानके उ० ३, तद्वृत्त्येकदेशो यथा–गणो–गच्छः तस्य चोपग्राहिता 'इक्कस्स कओ धम्मो०' इत्यादिगाथापूगादवसेया, तथा 'गुरुपरिवारो गच्छो तत्थ वसंताण निज्जरा विउला। विणयाउ तहा सारणमाईहिं न दोसपडिवत्ती॥१॥ अन्नोन्नावेक्खाए जोगंमि तहिं तहिं पयट्टंतो। णियमेण गच्छवासी असंगपयसाहगो होइ॥२॥' इति स्था० वृत्तौ, तथा 'पंचहिं ठाणेहिं कप्पति णिग्गंथाण वा निग्गंथीण वा गामाणुगामं दूइज्जित्तए, तं०–णाणट्ठयाए दंसणट्ठाए चरित्तट्ठयाए आयरिउवज्झाए से वीसुंभेज्जा आयरिउवज्झाए बहिं वेयावच्चकरणयाए'त्ति श्रीस्थानांगे, अत्र चतुर्थ स्थाने आचार्योपाध्यायः शरीरात् पृथग् भवेत् तर्हि गच्छान्तराचार्यनिश्राकरणार्थं वर्षाकालेऽपि विहारानुज्ञा दत्ता, अतो गणनिश्रामन्तरेण धर्म एव न स्यात्, इत्युक्ते स उक्तवान्–यथा अन्ये गच्छास्तथाऽस्मद्व्यपस्थापितोऽपि समुदायो गच्छ एव, तन्निश्रयैव वयं धर्मं कुर्म इति को दोषः?, तदनु पूज्यैरुक्तं–अच्छिन्नपरंपरागतस्यैव गच्छस्य निश्रा संभवति, न पुनः स्वरुचिविकल्पितसमुदायस्यापि, एवमुक्ते स पाशः पूत्कृत्योक्तवान्–यथाऽतीतकालापेक्षयाऽधुनातनवर्त्तिनो गच्छाः पुरातना भण्यन्ते तथाऽनागतकालापेक्षया मदीयोऽपि समुदायः पुरातनो गच्छ एवेत्याद्युल्लंठवादेनाभिप्रायोऽस्यावगतो यथाऽयमभव्यसदृशः सर्वथा श्रद्धानशून्य इति, अत एव जिनवचनविगोपने नटचरितः, यथा नटोऽन्यदीयवेषादिचेष्टाकरणेनान्येषां विगोपको भवति तथाऽयमपि जिनवचनविगोपको, भांडचेष्टाकारीत्यर्थः, यत एवमत एव निर्युक्तिभाष्यचूर्णिच्छेदोच्छेदच्छेकमतिः निर्युक्तिभाष्यचूर्णयः प्रतीताः, छेयत्तिपदैकदेशे पदसमुदायोपचारात् छेदग्रन्थाः–निशीथमहानिशीथव्यवहारादयः तेषामुच्छेदः–तदनङ्गीकरणकारणादिलक्षणः तत्र छेका–निपुणा मतिर्यस्य स तथा, अयं भावः–निशीथादिच्छेदग्रन्थाङ्गीकारे सर्वेषामपि कुपाक्षिकाणामुच्छेदः स्याद्, अतस्तैस्ते ग्रन्था एवोपेक्षिताः, पाशचन्द्रेण

पुनः तद्वचस्तद्गतान्यपवादपदानि च जनेभ्य उद्भाव्य तद्धीलनाऽपि कृता, एतच्च महापातकं, यतो जैनप्रवचने यावन्ति उत्सर्गपदानि तावन्त्येवापवादपदानि, यदागमः-"जावइया उस्सग्गा तावइया चेव हुंति अववाया। जावइया अववाया तावइया चेव उस्सग्गा ॥१॥" इति, तत्र चापवादपदसेविनां प्रायश्चित्तान्युक्तानि, तच्च मूर्खलोकानां पुरस्तादसद्दूषणोद्भावनेन ब्रुवाणः प्रवचनोच्छेदपातकभाक् स्यात्, स च नियमादनन्तसंसारयेवेति पाशचन्द्रस्वरूपं दर्शितमितिगाथार्थः ॥५॥ अथ तस्योपदेशमाह—

तस्सुवएसो विहिचरिअजहट्ठियवायठाणपविभत्तो। मिअकप्पमाणुसाणं वागुरकप्पो दुहविगप्पो ॥६॥

तस्य-पाशस्य उपदेशो विधिचरितयथास्थितस्थानवादप्रविभक्तः-'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत' इति न्यायाद् वादशब्दः प्रत्येकं संबन्धनीयः, तथा च विधिवाद१ श्चरितानुवादो२ यथास्थितवादश्चेति३ त्रयो वादाः तद्रूपाणि यानि स्थानानि तैः प्रविभक्तः-विवेचितः, स च किंलक्षणः?-वागुराकल्पः-मृगजालिकासन्निभः, केषाम्?-मृगकल्पमनुष्याणां-मुग्धजनानां, अत एव स उपदेशो दुःखविकल्पः-स्वात्मनः परेषां च तद्वचनश्रोतॄणां दुःखहेतुविकल्पः, यदागमः-"चउहिं ठाणेहिं जीवा सम्मोहत्ताए कम्मं पकरेंति, तं०-उम्मग्गदेसणया मग्गणासणया कामासंसापओगेण भिज्जानियाणकरणेणं"ति श्रीस्थानांगे, अत्रोन्मार्गदेशनमार्गनाशाभ्यां दुर्लभबोधिता भणिता, सा च पाशस्योभयजन्याऽपीतिगाथार्थः ॥ अथविध्यादिवादत्रयं विवृणोति—

णिरवज्जमणुट्ठाणं विहिवाए चरियवाइ सावज्जं। उभयस्सहावरहियं जहट्ठिए होइ वायंमि ॥७॥
तेणं सुहज्झाणाई मुणिकिच्चं जं च निज्जराहेऊ। तं चिय जिणिंदवयणं विहिवाए नवमवि हुज्जा ॥८॥
जमणुट्ठिअणुट्ठाणं मुणीणमवि कम्मबंधकारणयं। जिणथुइविहारनिद्दप्पमुहं चरियाणुवायंमि ॥९॥

जं सावयाण धम्मे जिणभवणाईण कारणप्पमुहं। तंपि चरियाणुवाए जं तं सावज्जऽणुट्ठाणं ॥१०॥
आपरमाणु पयत्था पुढवीपमुहा य निरयपमुहाई। जहठिअवाए भणिया जिणेहिं जियरागदोसेहिं ॥११॥
जिणभवणबिंबपूआपमुहेसुं पुढविपमुहआरंभो। पावंति जाणिऊणं पडिकमियव्वो पुढो सोऽवि ॥१२॥
तेणं जिणिंदपूअं काऊण य कुणइ इरियपडिक्कमणं। अण्णह कूवाहरणं दव्वथए संगयं किमिव?॥१३॥
निद्दा पमाय भणिआ पमायकरणं च समयमित्तंपि। वीरेणं पडिसिद्धं गोअमनिस्साइ सव्वेसिं ॥१४॥
ता कह मुणीण निद्दाकरणुवएसो हविज्ज वीरस्स?। तेण चरिआणुवाया निद्दा मुणिणाऽवि कायव्वा॥१५॥
एवं अण्णाणंधो कुविगप्पविडंबिओ महापावो। परलोअवायदंसी नासी अहुणाऽवि पच्चक्खो ॥१६॥

विधिवादे निरवद्यं-निष्पापमनुष्ठानं, चरितानुवादे सावद्यं-सपापं, उभयस्वभावरहितं-न सावद्यं न वा निरवद्यं, किं त्वस्ति, तद् यथास्थितवादे इतिगाथार्थः ॥७॥ अथ यत एवं ततः किमित्याह-'तेणं०' येन कारणेन निरवद्यधर्मानुष्ठानं विधिवादे तेन कारणेन मुनिकृत्यं निर्जराहेतुः-केवलनिर्जराहेतुः, न मनागपि कर्मबन्धहेतुः, शुभध्यानादिकं 'तं चिय'त्ति तदेव जिनवचनं-तद्विषयकमेव जिनेन्द्रभाषितं विधिवादे, नान्यदपि भवेदितिगाथार्थः ॥८॥ अथ साधुकृत्यमपि यच्चरितानुवादे स्यात् तदाह-'जमणु०' यद् अनुष्ठानमनुष्ठितं मुनीनामपि कर्मबन्धकारणं, तद् किमित्याह-'जिणथुइ०' जिनस्तुतिः शक्रस्तवादिभिः विहारो-ग्रामानुग्राम-विचरणं निद्रा च आदिशब्दाद् दानादिकं चरितानुवादे स्यात्, यतः स्तुत्यादिना शुभकर्मबन्धः स्यात्, निद्रादिना चाशुभकर्म-बन्ध इति गाथार्थः ॥९॥ अथ श्रावककृत्यं कस्मिन् वादे इत्याह-'जं साव०' यच्च श्रावकाणां धर्मे जिनभवनादीनां कारणप्रमुखं-

नवीननिष्पादनतत्पालनादिकं तदपि चरितानुवादे, यद्-यस्मात् सावद्यमनुष्ठानं-सपापं धर्मकृत्यमितिगाथार्थः॥१०॥अथ यथास्थितवादे किमस्तीत्याह-'आपर०' आपरमाणु पदार्थाः-परमाणुमा-मर्यादीकृत्य यावन्ति द्रव्याणि पृथ्वीप्रमुखाः कायाः-पृथिव्याद्याश्रिताः स्थावरनामकर्मोदयवर्त्तिनो जीवाः नारकप्रमुखा गतयश्चेति यथास्थितवादे भणिताः, कैः ?-जितरागद्वेषैर्जिनैरितिगाथार्थः ॥११॥ इति वादत्रयमुद्भाव्य अथोभयपाशकल्पं स्वमतमाविष्कुर्वन्नाह-'जिणभ०' जिनभवनबिम्बपूजाप्रमुखेष्वपि पृथिवीप्रमुखारम्भः-पृथिव्यादिजन्तूनामारम्भः, सोऽपि सम्यग्दृष्टित्वात् पापमिति ज्ञात्वा पृथक् प्रतिक्रमितव्यः, जिनभवनादिकरणे यत् पुण्यं ततोऽपि पृथिव्याद्यारम्भजन्यं यत् पापं तत् पृथगेव प्रतिक्रमितव्यमितिगाथार्थः॥१२॥ यतः पृथक् प्रतिक्रमितव्यं ततः किमित्याह-'तेणं०' तेन कारणेन जिनेन्द्रपूजां कृत्वा ईर्याप्रतिक्रमणं करोति, अर्थात् श्रावक इति, अथ भ्रान्तः सन् व्यतिरेकेऽनुपपत्तिमाह-'अन्नह'त्ति, अन्यथा यदि पापं पृथक् न श्रद्धीयते तर्हि द्रव्यस्तवे कूपोदाहरणं किमिव संगतं-उपपत्तिमत् स्यात् ?, न कथमपीत्यर्थः, अयं भावः-कश्चित् पिपासुर्मलिनवस्त्रो जलनिमित्तं कूपखननं कुर्वाणो विशेषतस्तृपापीडितो मलिनशरीरवस्त्रश्च स्यात्, परं तेनैव जलेन तृडुपशान्तिः शरीरवस्त्रादिनैर्मल्यं च स्यात्, एवं द्रव्यस्तवे क्रियमाणे जलाद्यारम्भजन्यपातकभाक् स्यादेव, अन्यथा कूपोदाहरणमसंगतं स्यात्, परं पश्चादीर्याप्रतिक्रान्त्या पातकविलय इति स्वगलपादुकामजानान एवोक्तवानितिगाथार्थः ॥१३॥ अथ साधूनां निद्रास्वरूपमाह-'निद्दा०' निद्रा तावत् प्रमादो भणिता, यदुक्तं-"मज्जं विसय कसाया निद्दा विगहा य पंचमी भणिया। एए पंच पमाया जीवं पाडंति संसारे ॥१॥" इति, प्रमादकरणं च 'तिण्णोऽहिसि अण्णवं महं, किं पुण चिट्ठसि तीरमागओ ?। अभितुर पारं गमित्तए,समयं गोयम! मा पमायए ॥१॥' इत्यादिना समयमात्रमपि गौतमनिश्रया-गौतमस्वामिनं पुरस्कृत्य सर्वेषामपि श्री-

वीरेण प्रतिषिद्धमितिगाथार्थः ॥१४॥ यस्मादेवं तस्मात् किमित्याह–'तम्हा' तस्मात् मुनीनां निद्राकरणोपदेशो वीरस्य कथं भवेत्?, न कथमपीत्यर्थः, येन कारणेन विधिवादे निद्राकरणमसंगत अतो मुनिना निद्रा चरितानुवादात् कर्त्तव्या, अमुकेन साधुनेत्थं निद्रा कृतेति कस्यचित् साधोश्चरितस्वरूपमवगम्य तेन विधिना साधुनाऽपि विधेयेति गाथार्थः ॥१५॥ अथ पाशोपदेशस्योपसंहारमाह–'एवं०' एवं–प्रागुक्तप्रकारेण अज्ञानान्धः कुत्सितविकल्पविडम्बितो नेहलोकेऽपि समाधिभागभूत्, यतो नवीनसमुदायकरणेच्छया यत्र कुत्रापि परिभ्रमणं कुर्वाणश्चर्चादावुदीरितोऽवहीलनास्पदमेवाभूत्, महापापो–महापापात्मा परलोकापायदर्शी नासीत्–नरकाद्यनन्तदुःखभाजनमहं भविष्यामीति परलोकोपद्रवादत्तदृष्टिः अधुनाऽपि–संप्रतिकालेऽपीति, अनेन संप्रतिकालवर्त्तिनामस्माकं प्रत्यक्ष एवासीत्, न पुनरपरकुपाक्षिकवत् एतत्प्रकरणकर्तुर्ममाप्रत्यक्ष इति **पाशोपदेशो दर्शितः** इति गाथार्थः ॥१६॥ इति पाशोपदेशो दर्शितः, अथ पाशोपदेशं तिरस्कर्त्तुमुपक्रम्यते—

जं पासेण य भणियं वायतिगविभागकरणओ सव्वं। तं चेवाकिंचिकरं इमाहिं जुत्तीहिं विण्णेयं ॥१७॥

यत् पाशेन–पाशचन्द्रेण भणित वादत्रिकविभागकरणतः–विधिवादचरितानुवादयथास्थितवादविभजनेन सर्वं–अखिलं तं चेव–तदेव अकिंचित्करं–सर्वथाऽप्यसारं आभिर्वक्ष्यमाणाभिर्युक्तिभिर्विज्ञेयमिति गाथार्थः ॥१७॥ अथ चरितानुवादस्वरूपमाह—

चरियाणुवायकिच्चं सव्वं सममेव णेव जिणभणियं। धम्माधम्मविभत्तं निरवज्जावज्जवयणपयं ॥१८॥

चरितानुवादकृत्यं सर्वं जिनभणितं सममेव–समानमेव नैव भवत्येव, अयं भावः–पाशेन भणितं–विधिवादे जिनाज्ञा, न पुनश्चरितानुवादे, तत् पाशोक्तं सम्यक् तदा स्याद् यदि चरितानुवादकृत्यं सर्वमपि समानं भवेत्, तच्च नास्ति, कीदृगस्तीत्याह–

'धम्मे'ति धर्माधर्मविभक्तं-चरितानुवादकृत्यमपि धर्माधर्माभ्यां विभक्तं-किंचिद्धर्मात्मकं किंचिच्चाधर्मात्मकं, तदपि कीदृशं?-निरवद्यावद्यवचनपथं-निरवद्यं चावद्यं च निरवद्यावद्यं तद्विषयकं वचनं तस्य पन्था इव२पथं तत्, निरवद्यो धर्मः सावद्यो न धर्म इति वचनप्रवृत्तिः प्रवचने कर्त्तव्या, यद्यपि किंचिदारंभादिजन्यमवद्यं क्वापि धर्मकृत्येऽपि भवति तथापि 'सम्मद्दिट्ठी जीवो जइविहु पावं समायरइ किंची। अप्पो सि होइ बंधो जेण न निद्धंधसं कुणइ॥१॥" इति (श्राव० प्रति० ३६) वचनात् स्वल्पत्वात् तज्जन्यव्यक्तविपाकानुदयाद्योपेक्षणीयमेवेति नावद्यव्यवहारविषयः, यथा वातमंडलिकादिरजोमात्रपातेन तडाकादिगतं जलं किंचिदाविलं भवदपि निर्मलजलमिव पानधावनादिक्रियोपयोगितया समानमेवेतिकृत्वा तत्रापि जलव्यवहार एव, न पुनः पंकतया व्यवह्रियते, एवं कथंचित्किंचिदारंभाद्यध्यवसायकलुषितोऽपि श्रावकादिधर्मो धर्मतयैव व्यवहर्त्तव्यो, न पुनः सावद्यधर्मतयेति गाथार्थः ॥१८॥ अथैवं कुत इत्याह—

भम्मोऽवि य सावज्जो निरवज्जो वत्ति नेव पविभत्तो। धम्मावज्जविरोहो अणाइसिद्धो जओ लोए ॥१९॥

धर्मोऽपि सावद्यो निरवद्यो वेति नैव प्रविभक्तः-एवं विभागः कृतो नास्ति, कदाचिद् धर्महेतुभूतानां क्रियाणां मध्ये कस्याश्चित् क्रियाया कथंचिद् विवक्षया सावद्यव्यपदेशो भवेदपि, परं तज्जन्यधर्मस्य सावद्यव्यपदेशो न भवेत्, यथा जलकालुष्यहेतुर्वातमण्डलिकारजो रजस्त्वेन व्यपदिश्यमानमपि जलमध्ये पतितस्वस्वरूपव्यपदेशभाग् न भवति, किंतु जलस्यैव बलवत्त्वाद् जलस्यैव व्यपदेशो भवति, निश्चयतः पञ्चवर्णात्मके पटे श्वेतादिव्यवहारो बलवत्त्वेनैवेति प्रवचने प्रतीतमेव, एवं कुत इत्याह-'धम्मावज्जे'ति धर्मावद्ययोः-पुण्यपापयोर्विरोधः सहानवस्थानलक्षणोऽनादिसिद्धः, नहि यः स्वरूपेण धर्मः स पापरूपो भवितुमर्हति, नहि

यद्वस्तु यत्स्वरूपेण शीतव्यवहारभाक् तद्वस्तु तत्स्वरूपेणोष्णव्यवहारमप्यवाप्नुयात्, शीतोष्णस्पर्शयोर्विरोधस्यानादिसिद्धत्वादिति गाथार्थः ॥१९॥ यस्मादेवं ततः किमित्याह—

तम्हा धम्मो दुविहो अगारधम्मोऽणगारधम्मो य। आरंभकलुस पढमो बीओ आरंभरहिओ य ॥२०॥

तस्मात् धर्मो द्विविधः, द्वैविध्यं तावद् अगारधर्मोऽनगारधर्मश्चेति अर्थात् (अचारित्रलक्षणः) चारित्रलक्षणश्च, अनयोः को भेद इत्याह–'आरंभे'त्यादि, आरम्भकलुषः प्रथमः, आरम्भेण–आरम्भाध्यवसायेन 'कहसामइओऽवि उद्दिट्ठकडं सि भुंजे'त्ति *निशीथचूर्णिवचनात् कलुषः–आविलः प्राकृतत्वाद्विभक्तिलोपः आरम्भकलुषः प्रथमोऽगारधर्मः,च पुनरर्थे,यः पुनरारम्भरहितः–* सर्वथाऽऽरम्भाध्यवसायरहितः स साधुधर्म एव, यतस्तस्याजीविकाप्रकारोऽपि जिनैर्निरवद्य एवाभिहितः, यदागमः–"अहो जिणेहिं असावज्जा, वित्ती साहूण देसिया। मोक्खसाहणहेउस्स, साहुदेहस्स धारणा ॥१॥" श्रीदशवैका० इति गाथार्थः ॥२०॥ अथ पाशेन यदुक्तं–श्रावकधर्मश्चरितानुवादे, परं जिनाज्ञारूपे विधिवादे न भवति तद् दूषयितुमाह—

एवं धम्मे दुविहे जिणआणा अण्णहा न धम्मोऽवि। आणारहिओ धम्मो धम्मो जइ केरिसोऽहम्मो ॥२१॥

एवं प्रागुक्तस्वरूपे द्विविधे, अपिरध्याहार्यः, द्विविधेऽपि धर्मे साधुधर्मश्रावकधर्मलक्षणेऽपि जिनाज्ञा–तीर्थकृतामाज्ञैव,अन्यथा–आज्ञामन्तरेण धर्मोऽपि न भवेत्, तत्र हेतुमाह–यद्याज्ञारहितो धर्मो धर्मो भवेत् तर्हि अधर्मः कीदृशोऽपरः ?, अयमेवाधर्मः, तथा च धर्मस्तावदेकविध एव संपद्यते, तच्च न युक्तं, यदागमः–"दुविहे धम्मे पन्नत्ते तं०–सुयधम्मे चेव चरित्तधम्मे चेव, सुयधम्मे दुविहे पं०, तं०–सुत्तसुयधम्मे चेव अत्थसुयधम्मे चेव, चरित्तधम्मे दुविहे पं०, तं०–अगारचरित्तधम्मे चेव अणगारचरित्त-

धम्मे चेवेति श्रीस्थानाङ्गे (७२), एतद्वृत्तिर्यथा–'दुविहे'त्यादि, दुर्गतौ प्रपततो जीवान् सुगतौ च तान् धारयतीति धर्मः, श्रुतं–द्वादशांगं तदेव धर्मः श्रुतधर्मः, चर्यते–आसेव्यते तत् तेन वा चर्यते–गम्यते मोक्ष इति चरित्रं–मूलोत्तरगुणकलापः तदेव धर्मश्चरित्रधर्मः। 'सुयधम्मे'त्यादि, सूच्यंते सूत्र्यंते वा अनेनेति सूत्रं सुस्थितत्वेन व्यापित्वेन च सुष्ठूक्तत्वाद् वा सूक्तं सुप्तमिव वा सुप्तमव्याख्यानेनाप्रबुद्धावस्थत्वादिति, भाष्यवचनं त्वेवं–"सिंचइ खरइ जमत्थं तम्हा० सुत्तंपिव सुठिअवाविक्तओ सुवुत्तंति" अर्यते–अधिगम्यते अर्थ्यते–चाच्यते बुभुत्सुभिरित्यर्थः–व्याख्यानमिति,आह च–"जो सुत्ताभिप्पाओ सो अत्थो अज्जए य जम्हत्ति।" 'चरित्ते'त्यादि, अगारं–गृहं तद्योगादगाराः–गृहिणस्तेषां यश्चारित्रधर्मः सम्यक्त्वमूलाणुव्रतादिपालनरूपः स तथा, एवमितरोऽपि, नवरं अगारं नास्ति येषां तेऽनगाराः–साधव इति। अत्र साधुधर्मवत् श्रावकधर्मोऽप्यविशेषेणैव भणितः, तेन यदि यतिधर्मे जिनाज्ञा तर्हि गृहिधर्मेऽपि, तस्यापि प्रतिपत्तेः गौतमादेरिवानन्दश्रावकादेरपि श्रीमहावीरसमीप एव सद्भावात्,अथ गृहिधर्मे यदि नाज्ञा तर्हि साधुधर्मेऽपि समानं, इष्टापत्तौ चाज्ञारहितो धर्मो न फलवान्,यदुक्तम्–"आणाइ तवो आणाइ संजमो तह य दाणमाणाए। आणा-रहिओ धम्मो पलालपूलुव्व परिहाइ ॥१॥"त्ति, तथा 'आणानिद्देसकरे गुरूणमुववायकारए। इंगियागारसंपन्ने, से विणीएत्ति वुच्चइ ॥१॥' इतिश्रीउत्त०, विशिष्टकष्टस्य कर्मक्षयं प्रत्यकारणत्वात्, किंतु जिनाज्ञाया एव कर्मक्षय प्रति कारणत्वात्, किंच–यदि धर्मकृत्येऽपि जिनाज्ञा न स्यात् तर्हि पापकृत्ये वक्तव्या ?,अत्यर्थं स्वरूपेणैव तस्या असंभवः स्यात्,तद्विषयाभावात्,न चेष्टापत्तिः, अग्रे तस्यास्तद्विषयाणां च दर्शयिष्यमाणत्वादिति गाथार्थः ॥२१॥ अथ धर्ममात्रे जिनाज्ञैवेति व्यवस्थापनाय प्रथमं धर्मस्वरूप-मुक्त्वा विवेचयन्नाह—

धम्मो खलु मोक्खपहो सो तिविहो नाणदंसणचरित्तो। अहवा तिविहो साहू सड्ढो संविग्गपक्खपहो॥२२॥

धर्मः खलु मोक्षपथः-मोक्षमार्गः, स च त्रिविधः, त्रैविध्यमाह-'नाणे'त्यादि, ज्ञानं च दर्शनं च ज्ञानदर्शने ताभ्यां सहितं चारित्रं यत्र स ज्ञानदर्शनचरित्रः, यदुक्तं-"ज्ञानदर्शनचारित्राणि मोक्षमार्गः" इति, अथवेति प्रकारान्तरेण त्रिविधः-साधुः श्रावकः संविग्नपाक्षिकश्चेति, यदुक्तं-"सावज्जजोगपरिवज्जणाइ सव्वुत्तमो जईधम्मो। बीओ सावगधम्मो तइओ संविग्गपक्खपहो ॥१॥ सेसा मिच्छद्दिट्ठी गिहिलिंगकुलिंगदव्वलिंगेहिं। जह तिन्नि उ मुक्खपहा संसारपहा तहा तिण्णि॥२॥" त्ति श्रीउपदेशमालाया-मितिगाथार्थः ॥२२॥ अथ ज्ञानादयो हि सम्यगाराधिता मोक्षपथ इति तदाराधनं कथमित्याह—

तेसिं सव्वेसिं चिय आराहणमिह जिणिंदआणाए। आणा पुण उस्सग्गोवायपएहिं विणा न हवे॥२३॥

तेषां सर्वेषां 'चिय'त्ति अवधारणे अप्यर्थे वा सर्वेषामेव सर्वेषामपि आराधनं इह-जिनप्रवचने भणितं, यदागमः-"तिविहा आराहणा पं०, तं०-णाणआराहणा" इति श्रीस्थानांगे, एतद्वृत्त्येकदेशो यथा-ज्ञानस्य-श्रुतस्य आराधना कालाध्ययनादिष्वष्टस्वाचारेषु प्रवृत्त्या निरतिचारपरिपालना ज्ञानाराधना, एवं दर्शनस्य निश्शंकितादिषु चारित्रस्य समितिगुप्तिषु" इति श्रीस्थानांगवृत्तौ, अत्र ज्ञानादीनामाराधनं निरतिचारतया भणितं, तेन ज्ञानादिविषयातिक्रमादयोऽपि भवन्ति, यदागमः-एवमइक्कमेऽवि वइक्कमेऽवि अईआरेऽवि अणायारेऽवि" त्ति एतद्वृत्त्येकदेशो यथा-'एव'मिति ज्ञानादिविषया एवातिक्रमादयश्चत्वारः, तत्राऽऽधाकर्माश्रित्य चतुर्णामपि निदर्शनं 'आहाकम्मामंतण पडिसुणमाणे अइक्कमो होइ १। पयमेयाइ वइक्कम २ गहिए तइओ ३ अरो गिलिए ४ ॥१॥' त्ति, इत्थमेवोत्तरगुणरूपचारित्रस्य चत्वारोऽपि, एतदुद्देशेन ज्ञानदर्शनयोस्तदुपग्रहकारिद्रव्याणां च पुस्तकचैत्यादीनामुपघाताय

मिथ्यादृशामुपबृंहणार्थं वा निमन्त्रणप्रतिश्रवणादिभिर्ज्ञानदर्शनातिक्रमादयोऽप्यायोज्या इति इतिश्रीस्थानांगवृत्तौ, अत्र पुस्तकचैत्यादीनामुपघाताय निमन्त्रणप्रतिश्रवणेऽतिक्रमः १ पदभेदे च व्यतिक्रमः २ गृहीते पुनरतिचारः ३ विनाशिते च चानाचारो ४ भणितः, एवं मिथ्यादृशां उपबृंहणार्थं निमन्त्रणप्रतिश्रवणादिभिर्भाव्यं, एवं च सति कदाचित् प्रमादवशात् अतिचारादयः समुत्पन्नास्तदानीं तेन प्रायश्चित्तं प्रतिपत्तव्यं भवति, तच्च प्रायश्चित्तं प्रमादादिना पुस्तकचैत्यादीनां विनाशे नवीननिर्मापणमेव तस्य शुद्धिहेतुरिति जिनैरभिहितं, धर्मोपकरणस्य हान्या धर्मस्यैव हानिरिति तत्साधनमेव प्रगुणीकर्त्तव्यं, नन्वेवं कथमिति चेदुच्यते, यतो यथा प्राणातिपाताद्यन्यतराश्रवपरिसेवनाजन्यपापस्य प्रायश्चित्तं ज्ञानाद्याराधनमेवोक्तं तथा ज्ञानादिविराधनाजन्यस्यापि पातकस्य प्रायश्चित्तं तद् युक्तं, परं ज्ञानविराधनाजन्यस्य पातकस्य दर्शनाराधनापेक्षया ज्ञानाराधनमेव प्रायश्चित्तं श्रेयः, लोकेऽपि प्रतिकूलाचरणेन यो दूमितोऽनर्थहेतुः स एवानुकूलाचरणेनानुकूलयितव्यो, नान्यः, तज्जन्यानर्थस्य तेनानपायात्, तेन ज्ञानोपकरणस्य पुस्तकादेर्विनाशे पुस्तकाद्येव लेखनीयं, प्रतिमादिविनाशे च तदेव निर्मापणीयं, कर्मवशात् चारित्रोपघाते स्वयं चरित्रमेव पालनीयमित्युत्सर्गपदं, अपवादपदे च शक्त्यनुसारेण यथागममन्यथाऽपि, तच्चाराधनं जिनेन्द्राज्ञया, आज्ञा पुनरुत्सर्गापवादाभ्यां विना न भवेत्, यथा तीर्थकृतोत्सर्गापवादावुपदिष्टौ तथैव प्रवर्त्तने जिनाज्ञया ज्ञानाद्याराधनमितिभाव इति गाथार्थः ॥२३॥ अथ ज्ञानाद्याराधनं जिनाज्ञयैव भवति, परं पुस्तकप्रतिमादिनिर्म्मापणं तु न विधिवादरूपजिनाज्ञया,किंतु चरितानुवादेनेतिपाशस्याशां पराकर्तुमाह—

णाणस्सवि आराहणमुवगरणायारपालणेहिं भवे। एवं दंसणचरिआणमण्णह विराहणा भणिआ ॥२४॥

'णाणस्स'त्ति ज्ञानस्याप्याराधनं उपकरणाचारपालनाभ्यां भवेत्, तत्रोपकरणानि पुस्तकपुस्तकसाधनमषीलेखिन्यादीनि

द्रव्याणि तथा आचार्योपाध्यादयश्चाध्यापका नीरोगं शरीरं चेत्याद्यपि ज्ञानस्य साधनानि, अत एव सत्सु आचार्यादिषु ज्ञानमधीतं न स्यात् तदा ज्ञानस्यानाराधनया देवलोकेऽपि पश्चात्तापभाक् स्यात्, यदागमः–"तीहिं ठाणेहिं देवे परितप्पेज्जा, तंजहा–अहो मए संते बले संते वीरिए संते पुरिसकारपरक्कमे खेमंसि सुभिक्खंसि आयरियउवज्झाएहिं विज्जमाणेहिं कल्लसरीरेण णो बहुए सुए अहीए १ अहो णं मए इहलोगपडिबद्धेणं परलोगपरम्मुहेणं विसयतसिएणं णो दीहे सामण्णपरिआए अणुपालिए २ अहो णं मए इड्ढिरससायगुरुएणं लोगासंसगिद्धेणं णो विसुद्धे चरित्ते फासिए, इच्चेतेहिं तिहिं ३" एतद्वृत्त्येकदेशो यथा–'तप्पेज्ज'त्ति पश्चात्तापं करोति, अहो विसये सति–विद्यमाने बले शारीरे वीर्ये जीवाश्रिते पुरुषकारे अभिमानविशेषे पराक्रमे अभिमान एव च निष्पादित-विषये इत्यर्थः क्षेमे–उपद्रवाभावे सति सुभिक्षे–सुकाले सति कल्यशरीरेण–नीरोगदेहेनेति सामग्रीसद्भावेऽपि नो बहु श्रुतमधीत-मित्येवमित्यादि श्रीस्थानांगटीकायां। क्षेत्रं चाचार्यसमीपादि यद्वा यत्र क्षेत्रे श्रुताभ्यासः क्रियते कालः सुभिक्षादिः प्रागुक्त एव, अथवा विद्यासाधननक्षत्रावच्छिन्नो बोध्यः, तत्र दश नक्षत्राणि ज्ञानस्य वृद्धिकराणि भवन्ति, यदागमः–"दस नक्खत्ता णाणस्स वुड्ढिकरा पं०, तं०–मिगसिरअद्दापुस्सो तिन्नि अ पुव्वाइं मूलमस्सेसा। हत्थो चित्ता य तहा दस वुड्ढिकराइं नाणस्स ॥१॥" इतिश्री-स्थानांगे, एतद्वृत्तिर्यथा–'वुड्ढिकराइं'ति एतन्नक्षत्रयुक्ते चंद्रमसि सति ज्ञानस्योद्देशादिर्यदा क्रियते तदा ज्ञानं समृद्धिमुपयाति अविच्छेदेनाधीयते श्रूयते व्याख्यायते धार्यते वेति, भवति च कालविशेषस्तथाविधकार्येषु कारणं, क्षयोपशमादिहेतुत्वात् तस्य, यदाह–"उदयक्खयक्खओवसमोवसमाइ जं च कम्मुणो भणिआ। दव्वं खित्तं कालं भवं च भावं च संपप्प ॥१॥"त्ति, तद्यथा 'मगसिर' गाहा, इति स्थानांगवृत्तौ, अत्र पुस्तकवत् नक्षत्रावच्छिन्नः कालोऽपि ज्ञानस्य क्षयोपशमहेतुर्भणितः, भावोऽपि तथाविधज्ञानक्षयोप-

शमो वीर्यान्तरायक्षयोपशमो वेत्यादि,एवं दिशोऽपि ज्ञानादिकारणं,यदागमः-"दो दिसाओ अभिगिज्झ कप्पति णिग्गंथाणं णिग्गंथीणं वा पव्वावित्तए-पाईणं चेव उदीणं चेव, एवं मुंडावित्तए सिक्खावित्तए उवट्ठावित्तए संभुंजित्तए संवसित्तए सज्झायं उद्दिसित्तए सज्झायं समुद्दिसित्तए सज्झायमणुजाणित्तए आलोतित्तए पडिक्कमित्तए निंदित्तए गरिहित्तए विउट्टित्तए विसोहित्तए अकरणयाए अब्भुट्ठित्तए आहारिहं पायच्छित्तं तवोकम्मं पडिवज्जित्तए"त्ति श्रीस्थानांगे,एतट्टीका यथा 'दो दिसाउ'त्ति इत्यादि, द्वे दिशौ-काष्ठे अभिगृह्य-अंगीकृत्य, तदभिमुखीभूयेत्यर्थः, कल्पते-युज्यते निर्गता ग्रंथात् धनादेरिति निर्ग्रंथाः-साधवस्तेषां निर्ग्रन्थ्यः-साध्व्यस्तासां, प्रव्राजयितुं रजोहरणादिदानेन प्राचीनां-प्राचीं पूर्वामित्यर्थः उदीचीनां-उदाचीमुत्तरामित्यर्थः, उक्तं च-"पुव्वामुहो उ उत्तरमुहो य दिज्जाऽहवा पडिच्छिज्जा। जाए जिणादयो वा हवेज्ज जिणचेइआई व ॥१॥"त्ति,'एव'मिति यथा प्रव्राजनसूत्रं दिग्द्वयालिलापेन अधीतं एवं मुंडनादिसूत्राण्यपि षोडशाध्येतव्यानीति,तत्र मुंडयितुं शिरोलोचनतः १ शिक्षयितुं ग्रहणशिक्षापेक्षया सूत्रार्थौ ग्राहयितुं आसेवनाशिक्षापेक्षया तु प्रत्युप्रेक्षणादि शिक्षयितुमिति २ उत्थापयितुं-महाव्रतेषु व्यवस्थापयितुं ३ संभोजयितुं भोजनमंडल्यां निवेशयितुं ४ संवासयितुं-संस्तारकमंडल्यां निवेशयितुं ५ सुष्ठु आ-मर्यादयाऽधीयते इति स्वाध्यायः-अंगादिः तं उद्देष्टुं-योगविधिक्रमेण सम्यग्योगेनाधीष्वेदमित्येवमुपदेष्टुमिति ६ समुद्देष्टुं-योगसामाचार्यैव स्थिरपरिचितं कुर्विदमिति वक्तुमिति७ अनुज्ञातुं-तथैव सम्यग् एतद् धारय अन्येषां च प्रवेदय इत्येवं अभिधातुमिति ८ आलोचयितुं गुरवेऽपराधान् निवेदयितुमिति ९ प्रतिक्रमितुं-प्रतिक्रमणं कर्तुमिति १० निंदितुं अतिचारान् स्वसमक्षं जुगुप्सितुं, आह च "सचरित्तपच्छयावो निंद"त्ति ११ गर्हितुं गुरुसमक्षं तानेव जुगुप्सितुं, आह च-'गरहावि तहाजातीयमेव नवरं परप्पयासण'त्ति १२'विउट्टित्तए'त्ति व्यतिवर्त्तितुं वित्रोटयितुं

विकुट्टयितुं वा, आतिचारानुबन्धं विच्छेदितुमित्यर्थः १३ विशोधयितुमतिचारपंकापेक्षया आत्मानं विमलीकर्त्तुमिति १४ अकरण-तया-पुनर्न करिष्यमीत्येवं अभ्युत्थातुं-अभ्युपगन्तुमिति १५ यथार्हम्-अतिचाराद्यपेक्षया यथोचितं पापच्छेदकत्वात् प्रायश्चित्त-विशोधकत्वाद्वा प्रायश्चित्तं, उक्तं च-"पावं छिंदइ जम्हा पायच्छित्तं तु भण्णए तेण। पाएण वावि चित्तं विसोहए तेण पच्छित्तं ॥१॥"ति, तपःकर्म-निर्विकृतिकादिकं प्रतिपत्तुम्-अभ्युपगन्तुमिति १६ इत्यादि श्रीस्थानांगटीकायां, अत्र यद्यपि दो दिसाओ अभिगिज्झ कप्पति निग्गंथाण वा निग्गंथीण वा सज्झायं उद्दिसित्तए सज्झायं समुद्दिसित्तए सज्झायमणुजाणित्तएत्ति सूत्रमात्रस्यैव सम्मतितयोपयोगः तथाऽपि पाशचन्द्रमते एतत्सूत्रोक्तं किमपि न विद्यते इति प्रसंगतो ज्ञापनार्थं भणितं, तत्कथमिति चेत् उच्यते, पाशचन्द्रेणाच्छिन्नपरम्परां परित्यज्य लुम्पकवत् केवलपुस्तकलिखितसिद्धान्तमात्रानुसारेण निजमतिविकल्पितं सूत्रार्थं पुरस्कृत्य निजमतमाविष्कृतं, तत्र पाशचंद्रेण स्वशिष्येभ्यो दीयमाना दीक्षा न कस्यापि गुरोः पार्श्वे गृहीता, अतः स्वयमदीक्षितः परेभ्यो गृहस्थवत् दीक्षादानानर्हः कथं तच्छिष्याणां दीक्षादानं, एवं मुण्डापनमपि बोध्यं, उपस्थापना तु पाशमते मूलतोऽपि न सम्भवति, यथा कृतयोगानुष्ठानाः तत्पूर्वकाधीतषड्जीवनिकापर्यन्तसूत्रार्थाश्चोपस्थाप्यंते, पाशमतेन तु योगानां एव अभावात्, ननु तदीयाः अपि योगानुष्ठानं कुर्वन्ति इति श्रूयते इति चेत् मैवं, स्वमतिविकल्पितं हि योगानुष्ठानं न भवति, तन्मते तु स्वमतिविकल्पितं, यथा मर्कटानां गुंजासमुदाये अग्निविकल्पः शीतकाले जायते, परं न तेनाग्निनौदनपाकादिसम्भवः, किन्तु योगानुष्ठानं यदि गुरु-पारतन्त्र्याभावेनाप्यभविष्यत् तर्हि श्रीआषाढाचार्यो दिवं गतोऽपि आगत्य स्वशिष्यान् योगानुष्ठानं नाकारयिष्यत्, तथा च तृतीय-निह्नवोत्पत्तिरपि नाभविष्यदिति बोध्यं, योगाद्यनुष्ठानाभावाच्चांगादीनां नोद्देशसमुद्देशानुज्ञादयो भवंति, योगानुष्ठानं च योग-

सामाचारीग्रन्थोपलम्भ्यं परंपरागतं चेति। तथा मंडलीसंभोगः पाशस्य केनापि साधुगुरुणा सह नासीत् कथं स्वशिष्येभ्यो मंडली-संभोगकारकः सम्भवेत् ?, एवं ग्रहणासेवनाशिक्षाऽश्रुत्या स्वयं पाशः कथं परेभ्यः तच्छिक्षकः, ननु पाशचन्द्रस्य शालायां ग्रहणादि-शिक्षा जाता भविष्यतीति चेत् मैवं,स्वशिष्येभ्यो ग्राह्यमाणायाः शिक्षायाः क्वाप्यग्रहणात् ,न हि स्वमताभिमतशिक्षायाः उपदेशकः कोऽप्यासीत्, तथा प्रायश्चित्तदानमपि तन्मते मूलतोऽपि नास्ति, प्रायश्चित्तग्रन्थानामपि निशीथव्यवहारादीनामनंगीकारात् ,अंगीकारे वा स्वयमप्राप्तप्रायश्चित्तः कथं प्रायश्चित्तदानसमर्थ इत्याद्यनया दिशा पाशमतं न सूत्रादि स्पर्शत्यपि इति प्रसंगतो बोध्यं,अथ प्रकृत-मुच्यते–यथोपकरणानि ज्ञानस्य भणितानि तथा आचारोऽपि ज्ञानस्य कालाद्यष्टप्रकारः, यदागमः–"दुविहे आयारे पं०, तं०–णाणा-यारे चेव नोनाणायारे चेवे"ति श्रीस्थानांगसूत्रं, एतट्टीका यथा–'दुविहे आयारे' इत्यादि सूत्रचतुष्टयं कंठ्यं, नवरमाचरणं आचारो–व्यवहारो ज्ञानं–श्रुतज्ञानं तद्विषय आचारः कालादिरष्टविधो ज्ञानाचारः,आह च–"काले विणए बहुमाणे उवहाणे चेव तहय निण्हवणे। वंजणअत्थतदुभये अट्ठविहो नाणमायारो ॥१॥"त्ति श्रीस्थानांगटीकायां, अत्र काले विणएत्ति गाथानिर्युक्तिकृता श्रीभद्रबाहुस्वामिना श्रीदशवैकालिकनिर्युक्तावभिहिता, तद्व्याख्यानं यथा–"काले, यो यस्य श्रुतस्य काल उक्तः तस्य तस्मिन्नेव स्वाध्यायः कर्तव्यो, नान्यदा, श्रुतग्रहणं कुर्व्वता गुरोर्विनयः कार्यः, तथा श्रुतग्रहणोद्यतेन गुरोर्बहुमानः कार्यो, बहुमानः आन्तरः भावप्रतिबन्धः, श्रुतग्रहणमभीप्सता उपधानं कार्यम् ,उपधानं–तपः,तद्धि यद् यत्राध्यायने आगाढादियोगलक्षण-मुक्तं तत्तत्र कार्यं, तथा गृहीते आशातना अनिह्नवः कार्यः, यद्यस्य सकाशेऽधीतस्तत्र स एव कथनीयः, व्यंजनार्थतदुभयान्याश्रित्य भेदो न कार्यः, अष्टविधो ज्ञानाचारो–ज्ञानासेवनाप्रकार" इति, अत्र ज्ञानाचारे आगाढादियोगोद्वहनादिकं भणितं, एतच्च पाशप्रमुख

मतेषु न संभवत्येवेति प्रसंगतो बोध्यं, तथा दर्शनाचारोऽप्यष्टधैव, 'निस्संकिअ निक्कंखिअ निव्वितिगिच्छा अमूढदिट्ठी अ। उववूह थिरीकरणे वच्छल्ल पभावणे अठ्ठ ॥१॥' त्ति श्रीदशवैकालिकनिर्युक्तौ, एतद्व्याख्यानं–निःशंकितः–देशसर्वशंकारहितः, तत्र देशशंका समाने जीवत्वे कथमेको भव्यः? अपरस्त्वभव्य इति शंक्यते, सर्वशंका–सर्वमेवेदं परिकल्पितं भविष्यतीति, तथा निष्कांक्षितः–देशसर्वकांक्षारहितः, देशकांक्षा एकं दर्शनं कांक्षति, सर्वकांक्षा तु सर्वाण्येव, निर्विचिकित्सः–साध्वेव जिनदर्शनं, किन्तु प्रवृत्तस्यापि सतो ममास्मात् फलं भविष्यति न वा भविष्यतीति, क्रियायाः कृषिबलादिषूभयथोपलब्धेरितिविकल्परहितो निर्विचिकित्स उच्यते, यद्वा निर्जुगुप्सः–साधुजुगुप्सारहितः, अमूढदृष्टिः–बालतपस्वितपोविद्यातिशयदर्शनैर्न मूढा–स्वरूपात् न चलिता दृष्टिः–सम्यग्दर्शनरूपा यस्यासावमूढदृष्टिः, उपबृंहणं च स्थिरीकरणं च उपबृंहणस्थिरीकरणे, तत्रोपबृंहणं–समानधार्मिकाणां सद्गुणप्रशंसनेन तद्वृद्धिकरणं, स्थिरीकरणं–धर्म्माद्विषीदमानानां तत्रैव स्थापनं, वात्सल्यं च प्रभावना च वात्सल्यप्रभावने, वात्सल्यं–समानधार्मिकप्रीत्युपकारकरणं प्रभावना–धर्म्मकथनादिभिस्तीर्थख्यापना, अष्ट चेत्यष्टप्रकारो दर्शनाचारः इति दश० वृत्तौ, दर्शनोपकरणानि तु जिनभवनबिंबादीनि प्रतीतानि, तथा चारित्राचारोऽप्यष्टधा, यथा–"पणिहाणजोगजुत्तो पंचहिं समिईहिं तीहिं गुत्तीहिं। एस चरित्तायारो अट्ठविहो होइ नायव्वो' ॥१॥" इति दश० नि०, एतद्वृत्तिर्यथा प्रणिधानं–चेतःस्वास्थ्यं तत्प्रधाना योगाः प्रणिधानयोगास्तैर्युक्तः२ पंचभिः समितिभिः तिसृभिर्गुप्तिभिर्यः प्रणिधानयोगयुक्तः, पंचसु समितिषु तिसृषु गुप्तिषु वा, एष चारित्राचारोऽष्टविधः इति श्री दश० वृत्तौ, चारित्रोपकरणान्यपि रजोहरणादीनि साधूपकरणानि, एवं ज्ञानादीनामाराधनं यथोक्ताचारानुपालनेनैव स्यात्, अन्यथा तदाचाराणामपरिपालने ज्ञानादीनां विराधना भणिता, यदागमः–"तिविहे संकिलेसे पं०, तं०–नाण-

संकिलेसे दंसणसंकिलेसे चरित्तसंकिलेसे" इत्यादि, अत्र ज्ञानाद्याराधने जिनाज्ञा विराधने च नेति संपन्ने साधर्मिकवात्सल्यादिकमपि जिनाज्ञयैव सिद्धं तदा पाशस्य कदाशा दूरत एवापास्तेति गाथार्थः ॥२४॥ अथ ज्ञानादीनामुपकरणानि व्यक्त्या सूत्रत एवाह—

पोत्थाई उवगरणं णाणस्स तहा जिणिंदभवणाइं । दंसणउवगरणं खलु पुत्तिप्पमुहा य चरणस्स ॥२५॥

पुस्तकादि ज्ञानस्योपकरणं आदिशब्दात् नीरोगशरीरादिकं प्रागेवोक्तं बोध्यं, तथा जिनेन्द्रभवनादि दर्शनोपकरणं, आदिशब्दात् जिनप्रतिमादिग्रहः, खलु निश्चये, 'पुत्तिप्पमुह'त्ति मुखवस्त्रिकाप्रमुखं, आदिशब्दात् रजोहरणकल्पादिग्रहस्तच्चारित्रोपकरणमिति, ननु ज्ञानदर्शनाभ्यां विना चारित्रस्यैवासंभवात् यथा ज्ञानदर्शने साधूनां चारित्रहेतू एव भवतस्तथा तदुपकरणान्यपि चारित्रोपकरणान्येव साधूनां भवन्तु, चारित्रस्यैवोपष्टंभकत्वात् इति चेत्, सत्यं, ज्ञानदर्शनोपकरणानां साक्षात् ज्ञानदर्शनयोरेव हेतुत्वात्, चारित्रस्यापि परम्परया तथात्वेऽपि मुख्यवृत्तिमधिकृत्य तथैव व्यवहारस्य युक्तत्वात्, चारित्रव्यतिरिक्तयोरपि ज्ञानदर्शनयोरुपकर्तृत्वाच्च पृथगेव व्यपदेशो युक्त इति गाथार्थः ॥२५॥ अथ उत्सर्गापवादयोरुत्सर्गत एव यथासंभवं स्थानकान्याह—

उस्सग्गो मुणिधम्मे अववायपयंमि इअरमग्गो य । इक्किक्कोऽवि अ दुविहो एवं सिद्धंतसुपसिद्धो ॥२६॥

मुख्यवृत्त्या उत्सर्गो मुनिधर्म्मः—साधुमार्गो, यतः तीर्थकृतः प्रथममुत्सर्गतः पंचमहाव्रतात्मकं साधुमार्गमेवोपदिशंति, तत्राक्षमानुद्दिश्यापवादपदे श्रावकसंविग्नपाक्षिकमार्गद्विकमुपदिशंति, अतः साधुमार्गापेक्षया तावपवादरूपावेव, तेषु त्रिष्वप्युत्सर्गापवादसम्भवात् प्रत्येकमेकैकोऽपि च द्विविधः, एवम्—अमुना प्रकारेण सिद्धान्तसुप्रसिद्धः—जिनप्रवचनेऽतिशयेन प्रसिद्धः, अयं भावः—मुख्यवृत्त्योत्सर्गरूपोऽपि साधुमार्गोऽनेकापवादपदसंयुक्तः स्थविरकल्पः, स्थविरकल्पे ह्युत्सर्गापवादयोस्तौल्यात्, यदागमः 'जावइआ

उस्सग्गा तावइआ चेव हुंति अववाया। जावइआ अववाया उस्सग्गा तत्तिया चेव ॥१॥" त्ति व्यवहारभाष्ये, जिनकल्पस्तु केवलोत्सर्गरूप एव, तत्र द्वितीयपदाभावात्, तथा श्रावकमार्गस्तावच्चारित्रभारं वोढुमशक्तस्य संभवति, 'कारणिकोऽपवाद' इति वचनात्, तथाविधशक्त्यभाव एव कारणं, तथाविधशक्त्यभावोऽपि चारित्रावरणीयक्षयोपशमाभावजन्य एव, तत्रापि इत्थमेव कर्त्तव्यमिति जिनैर्नाभिहितं, किन्त्वास्तामन्यत्र, सम्यक्त्वप्रतिपत्तावपि 'नन्नत्थ रायाभियोगेण गणाभियोगेण बलाभियोगेण देवयाभियोगेण गुरुनिग्गहेण वित्तिकंतारेणे'त्याकारा भणिताः, एवं व्रतेऽपि, यथा उत्सर्गेण सम्यक्त्वमूलानि द्वादश व्रतान्येवाभ्युपगन्तव्यानि श्रावकैरित्युक्तत्वात्, शक्त्यभावे यावदेकमपि व्रतं प्रतिपन्नो देशविरतिर्भण्यते, तदभावे वाऽविरतसम्यग्दृष्टिरेव श्रावकः स्यादित्यादि, एवं संविग्नपाक्षिकोऽपि गृहीतचारित्रस्तथाविधचारित्रावरणीयकर्म्मोदयाच्चारित्रं विमुच्य देशविरतिः श्रावको भवति, एतच्च जिनाज्ञा, यदागमः—"जइ न तरसि धारेउं मूलगुणभरं सउत्तरगुणं च। मोत्तूण तिन्नि भूमिं सुसावगत्तं वरतरागं ॥१॥ अरहंतचेइआणं सुसाहुपूआरओ दढायारो। सुस्सावगो वरतर न साहुवेसेण चुअधम्मो ॥२॥" इति, एवमप्यशक्तो यदि गीतार्थस्तर्हि संविग्नपाक्षिको भवति, तत्रापि शक्त्यनुसारेण पुनः प्रतिज्ञातानां मूलोत्तरगुणानां परिपालनं भवतीति, एवमुत्सर्गापवादयोरुत्सर्गतोऽपवादतश्च स्थानानि दर्शितानीति गाथार्थः ॥२६॥ अथ कालानुभावात् कुपाक्षिकसंसर्गबाहुल्यात् सम्यग् उत्सर्गापवादस्वरूपमजानानो भूयान् जनोऽपवादहेलनापर एवेति तच्चालनां पराकरणायापवादस्वरूपमाह—

कारणिओ अववाओ उस्सग्गाओऽवि होइ बलवंतो। उस्सग्गपालणट्ठा निवइच्च जिणेहिं सो भणिओ ॥२७॥

कारणिकोऽपवादः उत्सर्गादपि बलवान् भवति, यदाहुः श्रीहेमाचार्यपादाः 'उत्सर्गादपवादो बलीयान्' इति न्यायसूत्रे,

बलवत्त्वे हेतुमाह—'उस्सग्ग'त्ति यतः सोऽपवादो नृपवदुत्सर्गपालनार्थं जिनैर्भणितः, यथा प्रजापालनार्थं प्रजयाऽभिषेच्यावस्थापितो राजा प्रजाभ्योऽपि बलवान् भवेत् तथाऽपवादोऽप्युत्सर्गेणैव व्यवस्थापितः उत्सर्गादपि बलवान्, तत्कथमिति चेत् शृणु, उत्सर्गो ब्रूते—ननु भो अपवाद! असच्छिष्यादिकं त्वदायत्तमेवेति त्वदाज्ञयैव वयं वर्त्तिष्यामहे, अपवादमंतरेणोत्सर्गः स्थातुं न शक्नोतीति भाव इति गाथार्थः ॥२७॥ अथोत्सर्गापवादयोर्बलस्थानकमाह—

उस्सग्गो खलु पगई अववाओ पुह(भू)वइत्ति सट्ठाणे। परठाणे असमत्था दोऽवि अ ते गरहणिज्जावि॥२८॥

उत्सर्गः खलुरवधारणे प्रकृतिः—प्रजालोक इत्यर्थः,अपवादः पृथिवीपतिः—राजेति, क्व?—'स्वस्थाने' उत्सर्गस्थाने—अपवादानवकाशे 'अभावोपाधिको ह्युत्सर्ग' इति वचनात्, यावदपवादप्रयोजनं न पतति तावदुत्सर्ग एव बलवान्, अपवादस्थाने चापवादः, अपवादस्थानं कारणं, उत्सर्गनिर्वाहकद्रव्याद्ययोगः, उत्सर्गसामर्थ्यनिरोधकद्रव्यादिसामग्रीत्यर्थः, तन्निराकरणार्थमपवादो राजस्थानीयः, यथा राजा प्रजापीडाकारिचौरादिजननिवारकस्तथा तथाविधद्रव्यादिसामग्र्या निवारकोऽपवादः, एतौ द्वावपि परस्थाने- अपवादस्थाने उत्सर्गः उत्सर्गस्थाने चापवाद इति स्थानकव्यत्यये असमर्थौ—न सामर्थ्यभाजौ भवतः,अपि—पुनर्गर्हणीयौ—जुगुप्सनीयौ अहो मर्यादारहितौ द्वावपि प्रवर्त्तेते द्वयोरप्याश्रय इत्यर्थ इति गाथार्थः ॥२८॥ अथ कीदृशी प्रकृतिः कीदृशश्च राजेति उत्सर्गापवादयोर्दृष्टान्तीकर्त्तुं दर्शयति—

पगई सहावसिद्धा कारणिओ होइ भूवई निअमा। पगईधणउवजीवो णाएणं तीइ रक्खट्ठा॥२९॥

प्रकृतिः स्वभावसिद्धा भवति, न पुनः केनापि स्थापिता, भूपती—राजा तुरध्याहार्यो, भूपतिस्तु नियमात् कारणिकः—कारण-

विशेषाज्जातो भवति, यथा परस्परं विवदमानैर्युगलिकै राजनिमित्तं श्रीनाभिकुलकरो याचितो, नाभिना च भवतां ऋषभदेवो राजा विवादादिनिवारणेन न्यायप्रवर्त्तको भविष्यतीति कारणवशात् राजा जातः,अत एव 'पढमराए'त्ति सिद्धान्तवचनं, न पुनरेवं पढमपयंत्ति वेत्यादि दृष्टं श्रुतं वा, तस्मात् कारणिको राजा,स च कीदृशः स्यादित्याह–प्रकृतिधनोपजीवकः–प्रकृतेः सकाशात् यद् धनं तदुपजीवी, तेनैव स्वनिर्वाहक इत्यर्थः, केन ?–न्यायेन–न्यायमार्गेण, लभ्यभागोपादानयथाऽपराधदंडादिनेत्यर्थः, अथ प्रकृतिधनोपजीवनेन न्यायभाग् कथमित्याह–'तीइ'त्ति तस्याः–प्रकृते रक्षणार्थं,प्रजापालनार्थमेव प्रजाधनोपजीवी न्यायवानेव, यथा भारमुद्वहन् वृषभस्तृणादिकं चरति, यदागमः–"जो वहइ सो तणं चरइ'त्ति निशीथचूर्णौ, यस्तु अन्यायधनोपजीवी स तु राजा न भण्यते, किन्तु नृपो लुंटाको भण्यते इति गाथार्थः ॥२९॥ अथ दार्ष्टान्तिकमाह—

एवं खलु अववाओ उस्सग्गुवजीवओऽवि णाएणं । उस्सग्गं पालिज्जा तेणं जहसंभवागारा ॥३०॥

एवं खलुः–निश्चये अपवाद उत्सर्गोपजीवकोऽपि न्यायेनोत्सर्गं पालयेत् ,ननु राजा तावत् प्रजाधनोपजीवको भवति,तदध्यक्षसिद्धमेव, परमपवादः कथमुत्सर्गधनोपजीवक इति चेत् शृणुत, यथा समुत्पन्नेऽपि रोगादौ साधुनोत्सर्गतो भैषजादिचिकित्सा न कार्या, यदागमः–"तेगिच्छं नाभिनंदिज्जा, संचिक्खत्तगवेसए। एअं खु तस्स सामण्णं, जं न कुज्जा न कारवे ॥१॥"इति श्रीउत्तराध्ययने २, तथा 'मोत्तूण जइ तिगिच्छं अहिआसेऊण जइ तरइ सम्मं । अहिआसिंतस्स पुणो जइ से जोगा न हाइंति ॥१॥"त्ति श्रीउपदेशमालायां, अत्र पूर्वार्द्धेनोत्सर्गः प्रतिपादितः, एवं च सति कोऽपि साधुरसमर्थश्चिकित्सादिकं विना ज्ञानादिहानिमवाप्नोति तदाऽपवादे चिकित्सादिकं कल्प्यं,तच्च उस्सग्गत्ति गाथोत्तरार्द्धेनोक्तं, यथा 'सव्वत्थ संजमं संजमाउ अप्पाणमेव रक्खेज्जा।

मुचइ अइवायाओ पुणोऽवि सोही न याविरई ॥१॥" त्ति बृहत्कल्पभाष्ये, अत्रोत्सर्गस्तावत् स्वभावसिद्धो यावज्जीवावसानः प्रभूतकालस्वामी, तस्मात् कालात् रोगोपशांतिर्मर्यादातिक्रांतं स्वनिर्वाहयोग्यं कालमादायापवादः प्रवर्त्तते, स च कालः स्वभावसिद्धस्योत्सर्गस्यैव धनरूपापवादोपजीवनहेतुः, स चापवादो यदि रोगोपशान्तिमर्यादामतिक्रम्यापरकालस्य भोक्ता स्याचदा तु नृपतिलुंटाकादिवदनाचारो, न पुनरपवादः, अत एव शैलकाचार्यो रोगोपशांतावपि तथैव प्रवर्त्तमानः पार्श्वस्थादिविशेषणान्वितो भणितः, एतच्च प्रायः प्रतीतमेवेति, किंच–उत्सर्गस्तावत् तावंतं कालं यद्यपवादाय न ददाति तदा राजाऽप्यपवादो निर्वाहसामग्रीरहितो नोत्सर्ग पालयति,ततश्च स साधुरुत्सर्गं सेवयितुमशक्तोऽपवादपराङ्मुखश्च पतितधर्म्मा दुर्गतिग्राम्युभयतोऽपि भ्रष्टः स्यादिति,तथाप्रकारान्तरेण दार्ष्टान्तिकयोजना, यथा–आस्तां छद्मस्थसाधूनां, केवलिनामपि स्त्रीणां करस्पर्शोऽपि निषिद्धः, यदागमः–'जत्थित्थीकरफरिसं, लिंगी अरिहावि सयमवि करेज्जा। तं निच्छयओ गोअम! जाणेज्जा मूलगुणभट्ठं ॥१॥" इति गच्छाचारप्रकीर्णके, एवमुत्सर्गे यावज्जीवकालाधिके विद्यमाने पशुजात्यादिना उपहन्यमानां जलादौ वा निमज्जन्तीं साध्वीं बाह्वादिनाऽवलंबमानो जिनाज्ञां नातिक्रामति, यदागमः–"पंचहिं ठाणेहिं समणे निग्गंथे निग्गंथिं गेण्हमाणे वा अवलंबमाणे वा नातिक्कमति, तं०–निग्गंथिं च णं अन्नयरे पसुजाइए वा पक्खिजाइए वा ओधाएज्जा, तत्थ निग्गंथे निग्गंथिं गिण्हमाणे अवलंबमाणे नातिक्कमति १ निग्गंथे निग्गंथिं दुग्गंसि वा विसमंसि वा पक्खलमाणिं वा पवडमाणिं वा गेण्हमाणे वा अवलंबमाणे वा नातिक्कमति २ निग्गंथे निग्गंथिं सेतंसि वा पंकंसि वा पणगंसि वा उदगंसि वा उक्कसमाणीं वा ओवुज्झमाणीं वा गेण्ह० अवलंब० णाति० ३ निग्गंथे निग्गंथिं णावं आरूहमाणे ओरुममाणे वा णातिक्कमति ४ खेचइत्तं दित्तइत्तं जक्खातिठं जाव भत्तपाणपडिआतिक्खितं निग्गंथे निग्गंथिं गेण्हमाणे वा अवलंबमाणे नाति-

क्रमति ५" इति श्रीस्थानांगे, एतद्वृत्त्येकदेशो यथा—अनंतरं द्रव्यप्रबुद्धः कारणतः उक्तः, अथ भावप्रबुद्धमनुष्ठानतः आज्ञानतिक्रमेण दर्शयितुमाह—'पंचही'त्यादि,सुगमं नवरं 'गिण्हमाणे'त्ति बाह्वादावंगे गृह्णन् ,अवलंबमानः पतन्तीं बाह्वादौ गृहीत्वा धारयन्, अथवा'सव्वंगिअं तु गहणं करेण अवलंबणं तु देसंमि'त्ति, नातिक्रामति स्वाचारमाज्ञां वा, गीतार्थस्थविरो निर्ग्रंथभावेन यथाकथंचित् पशुजातीयो वृषभगवादिः पक्षजातीयो गृध्रादिः 'ओहाएज्ज'त्ति उपहन्यात् , तत्रेति उपहनने गृह्णन् नातिक्रामति, कारणिकत्वात् ,निष्कारणत्वे तु दोषो, यदाह—"मिच्छत्तं उड्डाहो विराहणा फासभावसंबंधो। पडिगमणाई दोसा भुत्ताभुत्ते अ णायव्वा ॥१॥" इत्येकं, तथा दुःखेन गम्यते इति दुर्गः, स च त्रिधा—वृक्षदुर्गः श्वापददुर्गो म्लेच्छादिमनुष्यदुर्गश्च तत्र वा मार्गे, उक्तं च—"तिविहं च होइ दुग्गं रुक्खे सावय मणुस्सदुग्गं च"त्ति,तथा विषमे वा—गर्त्तपाषाणाद्याकुले पर्वते वा प्रस्खलितां वा गत्या प्रपतंतीं वा भुवि, अथवा "भूमीएँ असंपत्तं पत्तं वा हत्थजाणुगादीहिं। पक्खलणं णायव्वं पवडण भूमीए गत्तेहिं॥१॥"ति, गृह्णन् नातिक्रामतीति द्वितीयं, तथा पंकः पनको वा सजलो यत्र निमज्जते स सेक इत्यादि श्रीस्थानांगटीकायां, अत्र यावता कालेन साध्व्युपद्रवो निवार्यते तावंतं कालमुत्सर्गः स्वस्थितिहेतवे अपवादनिर्वाहार्थमपवादाय दत्ते, स चापवादस्तावंतं कालमुपजीव्य निस्तारितोपद्रवमुत्सर्गं प्रवर्त्तयति, ननु यदुक्तमपवादमंतरेणोत्सर्गो निर्वोढुमशक्तस्तदयुक्तं, यतोऽपवादपदमन्तरेणापि जिनकल्पिकादीनां निर्वाहस्यागमे प्रसिद्धत्वादिति चेत् मैवं, अभिप्रायापरिज्ञानात् , यत्र स्थविरकल्पादावपवादपदं जिनैरुपदिष्टं तत्रोत्सर्गोऽपवादमन्तरेण निर्वोढुमशक्यः, जिनकल्पिकानां तु गणनिर्गतत्वेनातुलसामर्थ्येन चापवादपदस्यावकाशस्यैवाभावात् कुतोऽपवादपदवार्त्ताऽपि?,यथा यौगलिकानां परस्परविवादाद्यभावेन राज्ञोऽवकाशाभावात् कुतो राजवार्त्ताऽपि ?,अत एव 'क्वचिदुत्सर्गोऽपी'ति श्रीहेमाचार्यवचनात् क्वाप्युत्सर्गोऽपि

बलवान् भवति, तेनैव कारणेन प्रवचने स्याद्वादोऽपि युक्तिक्षम एव, न ह्येकान्तेनोत्सर्गापवादाभ्यामेव प्रवृत्तिः, किन्तु क्वाप्युत्सर्गेणैवेति, कालपरिहान्या विवादादौ च जाते सति नियमात् राजानमंतरेण न प्रजानां निर्वाहः, आस्तामन्यत्, धर्म्मप्रवृत्तिरपि राजनिश्रयैव भणिता, यदागमः-"धम्मं चरमाणस्स पंच निस्साठाणा पं०, तं०-छक्काया १ गणो २ राया ३ गाहावती ४ सरीरं ५ चे"त्यादि, अत एवोत्सर्गापवादौ बहुश्रुतगम्यौ, नागीतार्थगम्यौ, यदागमः-"दव्वं खित्तं कालं भावं पुरिस पडिसेवणाओ अ। नवि जाणेइ अगीओ उस्सग्गववाइअं चेव ॥१॥"श्रीउपदेशमालायां, व्याख्यानं यथा-द्रव्यं क्षेत्रं कालं भावं पुरुषं प्रतिसेवनाश्च नापि-नैव जानात्यगीतार्थः, औत्सर्गिकापवादिकवादस्थानमिति गम्यते, तत्रोत्सर्गेण निर्वृत्तमौत्सर्गिकं-यन्निर्विशेषणं क्रियते, अपवादेन निर्वृत्तं आपवादिकं-यद् द्रव्यक्षेत्राद्यपेक्षमिति, एवकारात् तद्गुणदोषांश्चागीतार्थो न जानाति,अतो ज्ञानाभावात् वैपरीत्येन प्रवर्त्तते, तथा च कर्म्मबन्धः, ततोऽनंतः संसार इति द्वारगाथासमासार्थः, एवमुत्सर्गापवादयोर्व्यवस्थापने बह्वयो युक्तयोऽनया दिशाऽभ्युपगन्तव्याः, येन कारणेनोत्सर्गपालकोऽपवादस्तेन कारणेन यथासंभवं प्रतिव्रतं प्रतिप्रत्याख्यानं च यावंत आगमे भणितास्तेषामनतिक्रमेण यथासंभवं आगारा-अनाभोगादयो भणिताः,आस्तां महति कृत्ये,ईर्याप्रतिक्रांतावपि कायोत्सर्गस्योच्छ्वासनिःश्वासादयो भणिता इति गाथार्थः ॥३०॥ अथोत्सर्गापवादविषये दृष्टान्तान्तरमाह—

जह पहिओ वच्चंतो खिन्नो खण वीसमित्तु वच्चिज्जा। एवमववायसेवी खणेणमुस्सग्गमग्गरओ ॥३१॥

यथा पथिको व्रजन् खिन्नः-खेदमापन्नः, श्रांत इत्यर्थः, क्षणं-मुहूर्त्तमात्रं विश्रम्य-विश्रामं कृत्वा व्रजेत्, अपगतपथश्रमः पुनः सुखेन गन्तुं शक्नोतीत्यर्थः, एवमपवादसेवी धर्मानुष्ठाने प्रवर्त्तमानो ग्लानिमापन्नः क्षणेन-क्षणमात्रेणोत्सर्गमार्गरतो भवति,उत्सर्ग-

मार्गसेवी स्यादेवेत्यर्थः, अत्र क्षणशब्देन यावत्कालमपवादपदसेवनाप्रयोजनं तावत्कालो ग्राह्य इति गाथार्थः ॥३१॥ अथ कुपाक्षिकमात्रस्याप्यभिप्रायमाविष्कृत्य दूषयितुमाह—

जो भणई अम्हाणं केवलमुस्सग्गु होइ रुइविसओ। सो जिणसासणबज्झो तित्थयराईण पडिवक्खे ॥३२॥

यो भणति अस्माकमुत्सर्गः केवलमपवादनिरपेक्षो रुचिविषयो भवति स जिनशासनबाह्यः—प्रवचनाद् बाह्योऽवबोध्यः, तत्र हेतुमाह—'तित्थयराईण'त्ति यतः स तीर्थकरादीनां—तीर्थकराचार्यादीनां प्रतिपक्षो—वैरीति गाथार्थः ॥३२॥ अथ कथं स्थविरकल्पे उत्सर्गापवादौ जिनकल्पे नेति सार्द्धगाथया तात्पर्यं दर्शयन्नुत्तरार्द्धेन जिनाज्ञामधिकृत्य जिनकल्पस्थविरकल्पयोः साम्यं दिदर्शयिषुर्गाथायुग्ममाह—

जत्थ य सारणवारणचोअणपडिचोअणाइववहारो। दसविहसामायारी तम्मि अ उस्सग्गअववाया ॥३३॥
तयभावे जिणकप्पप्पमुहे पयमेगमेव जिणभणिअं। ते सव्वे जिणसमए जिणआणाराहगा भणिआ ॥३४॥

यत्र कल्पे सारणावारणाचोदनाप्रतिचोदनादिव्यवहारः दशविधसामाचारी,चेति गम्यं,'इच्छामिच्छातहक्कारो' इत्यादिदशविधसामाचारी स्यात् तत्रोत्सर्गापवादौ भवतः,एवंविधस्तावत् स्थविरकल्प एव,यदागमः—"गच्छो महाणुभावो तत्थ वसंताण निज्जरा विउला। सारणवारणचोअणमाईहिं न दोसपडिवित्ती ॥१॥" गच्छाचारप्रकीर्णके, जिनकल्पिकस्तु गच्छनिर्गतो भवति, अत आह—'तयभावे'त्ति तदभावे—सारणाद्यभावे सारणादीनामभावो यत्र स तथा तस्मिन् यद्वा सारणाद्यभावे सति, अपवादकारणाभावे सतीत्यर्थः, जिनकल्पप्रमुखे, आदिशब्दात् प्रतिमाप्रतिपन्नादयो ग्राह्याः, तत्रैकपदमेव—उत्सर्गरूपं जिनभणितं—जिनेनोपदिष्टं वर्त्तते, यत

एवं तस्मात् कारणात् ते सर्वे जिनकल्पिकस्थविरकल्पिकादयो जिनसमये-जैनशासने जिनाज्ञाराधका भणिताः, जिनाज्ञाराधनमधिकृत्योभयेऽपि तुल्याः, अत एव भाष्यकार आह-'न हु ते हीलिज्जंति सव्वेऽविअ ते जिणाणाए'त्ति गाथायुग्मार्थः ॥३४-३५॥ अथैवमुत्सर्गापवादात्मके स्थविरकल्पे सिद्धे पाशप्ररूपणा जलांजलिमापन्नेति दर्शयति—

तेणिव थेरा निद्दं विहिणा कुव्वंति पोरसिं मोत्तुं। तइआए पोरसीए जिणकप्पी एस उस्सग्गो ॥३५॥

येन कारणेन स्थविरकल्प उत्सर्गापवादात्मको जिनाज्ञैव तेनैव कारणेन स्थविराः-स्थविरकल्पिकाः 'पोरसिं'त्ति पौरुषीम्-अर्थाद् रात्रेः प्रथमप्रहरं मुक्त्वा-त्यक्त्वा 'विहिना'गुरूपदिष्टानुष्ठानविधिना निद्रां कुर्वन्ति, जिनकल्पी तु तृतीयायां पौरुष्यां निद्रां करोति, एष उक्तलक्षणो विधिरुत्सर्ग इत्यक्षरार्थः। भावार्थस्त्वेवं-स्थविरकल्पिकाः रात्रेः प्रथमे प्रहरे गते ईर्यापथिकीं प्रतिक्रम्य गुरोः सकाशे तदभावेऽक्षादिस्थापनाचार्यं पुरस्कृत्य इच्छाकारेण संदिसह भगवन्! बहुपडिपुण्णा पोरिसि राइअसंथारए ठाउं'इति(भणति)शिष्यवचः श्रुत्वा गुरुर्भणति-ठाएह, पश्चात् चउक्कसायेत्यादि नमस्कारपूर्वकं चैत्यवंदनं, तदनु मुखवस्त्रिकाप्रतिलेखनं संस्तारकोपकरणप्रतिलेखनं च कृत्वा संस्तारकं संस्तीर्य तत्रोपविश्य 'निसीही २ नमोखमासमणाण'मित्यादिविधिना रात्रेः प्रथमपौरुषीमधीत्य विधिना गुर्वाज्ञया निद्रां कुर्वन्ति, सा चाज्ञात्वान्न प्रमादः, यदागमः-"सुत्ता अमुणी, मुणिणो सययं जागरंति लोगंसि"त्ति श्रीआचाराङ्गसूत्रे शीतोष्णीयाध्ययनस्यादिसूत्रं, एतद्वृत्त्येकदेशो यथा 'सुत्ता' इत्यादि सूत्रं, अस्य चानंतरसूत्रेण सहेत्यादि- यावत् इह सुप्ता द्विविधाः-द्रव्यतो भावतश्च, तत्र निद्राप्रमादवन्तो द्रव्यसुप्ताः, भावसुप्तास्तु मिथ्यात्वाज्ञानमयमहानिद्राव्यामोहिताः, ततो ये अमुनयो-मिथ्यादृष्टयः सततं भावसुप्ताः सद्विज्ञानानुष्ठानरहितत्वात्, निद्रया भजनीयाः, मुनयस्तु सद्बोधोपेता मोक्ष-

मार्गादचलंतस्ते सततं-अनवरतं जाग्रति-हिताहितप्राप्तिपरिहारं कुर्व्वते, द्रव्यनिद्रोपगता अपि कचित् द्वितीयपौरुष्यादौ सततं जागरुका एवेति, एवमेव भावस्वापं जागरणं च विपर्यीकृत्य निर्युक्तिकारो गाथां जगाद–'सुत्ता अमुणी उ सया मुणीओ सुत्तावि जागरा हुंति। धम्मं पडुच एवं निद्दासुत्तेण भइयव्वं ॥१॥"ति, सुप्ता द्विधा–द्रव्यतो भावतश्च, तत्र निद्रया द्रव्यसुप्तान् गाथांते वक्ष्यति, भावसुप्तास्त्वमुनयो–गृहस्थाः मिथ्यात्वाज्ञानावृता हिंसाद्याश्रवद्वारेषु सदा प्रवृत्ताः, मुनयस्त्वपगतमिथ्यात्वनिद्रा अवाप्तसम्यक्त्वादिबोधा भावतो जागरुका एव, यद्यपि कचित् आचार्यानुज्ञाता द्वितीयपौरुष्यादौ दीर्घसंयमाचारशरीररक्षित्यर्थं निद्रावशोपगता भवंति तथापि सदा जागरा एव, एवं धर्म्मं प्रतीत्योक्ताः सुप्ता जाग्रदवस्थाश्च, द्रव्यनिद्रासुप्ते ननु जाड्यमेतत् धर्म्मः स्यात् न वा?, यद्यसौ भावतो जागर्त्ति तदा निद्रासुप्तस्यापि धर्म्मः स्यादेव, यदिवा भावतो जाग्रतो निद्राप्रमादावष्टब्धान्तःकरणस्य न स्यादपि, यस्तु द्रव्यभावसुप्तस्तस्य न स्यादेवेति भजनार्थः" इति श्रीआचारांगटीकायां, तथा "पढमे पोरसि सज्झायं, बिइए झाणं झिआयइ। तइआए निद्दमोक्खं च, चउत्थी भुज्जोऽऽवि सज्झायं ॥१॥"ति श्रीउत्तराध्ययने २६, एतद्वृत्त्येकदेशो यथा–स्पष्टमेव, नवरं रात्रिमपि, न केवलं दिनमित्यपिशब्दार्थः, द्वितीयायां ध्यानं, तृतीयायां निद्रामोक्षं च अयं कुर्यादिति सर्वत्र, प्रक्रमाद् वृषभापेक्षं चैतत्, सामस्त्येन तु प्रथमचरमप्रहरजागरणमेव, तथा चागमार्थः "सव्वेऽवि पढमजामे दोन्नि तु वसहाण आइमा जामा। तइओ होइ गुरूणं चउत्थओ होइ सव्वेसिं ॥१॥" इति सूत्रद्वयार्थः इति श्रीउत्तराध्ययनटीकायां, अत्र वृषभमाश्रोस्तृतीयप्रहरनिद्राऽनुज्ञा शेषसाधूनां तु प्रहरद्वयमिति, एतेन पाशेन यद् विकल्पितं मोक्षशब्देन निद्रामोचनं करोति, न पुनः स्वापं, तन्निरस्तं, यतो यदि स्वापं न करोति तर्हि किं करोतीति तृतीयप्रहरसंबंधि कृत्यं वक्तव्यं, यथा दिवा तृतीयप्रहरे भिक्षाचर्या भणिता, तच्च

क्कापि नोक्तं, ततः पात्रस्यैव पात्रकल्पं, जिनकल्पिकस्य तु वृषभयतितुल्यतापरमुत्सर्गत एवेति गाथार्थः ॥ अथ जिनाज्ञया निद्रा प्रमादो न भवतीति दर्शनाय दृष्टान्तदार्ष्टांतिकरचनामाह—

जह थेराण जिणाण य परिग्गहो नेव वत्थपत्ताई। तह निद्दाऽवि पमाओ नाणाए दोऽवि चरणट्ठा ॥३६॥

यथा स्थविराणां-स्थविरकल्पिकानां जिनानां-जिनकल्पिकानां वस्त्रपात्रादिः-स्थविरकल्पिकानां जघन्यतोऽपि चतुर्दशोपकरणानि जिनकल्पिकानां तु उत्कर्षतोऽपि द्वादशोपकरणानि परिग्रहो नैव स्यात्-न भवत्येव, तथा-तेन प्रकारेण निद्रा अपि आज्ञया-जिनाज्ञया प्रमादो न भवति, तत्र हेतुमाह-यतो द्वे अपि-उपकरणनिद्रे अपि चरणार्थे-चारित्राराधनार्थे,ननु निद्रायाः प्रमादत्वं तु भण्यते एव, तत्कथं निद्रा प्रमादो न भवतीति चेत् सत्यं, स्वरूपेण प्रमादत्वेऽपि स्थानकविशेषमासाद्य तथा व्यपदेशासंभवात्, अन्यथा शब्दादयो विषयाः क्रोधादयश्च कषायाः प्रमादत्वेन भणिताः तथा च तद्वतां प्रमादित्वभणने सप्तमादिदशमपर्यन्तगुणस्थानकवर्त्तिनां साधूनामप्रमत्तताव्यपदेशो व्यर्थ एवाऽऽपद्येत, दशमगुणस्थानकं यावत् कषायोदयात्, शब्दादीनां च विषयाणां कामभोगरूपतया प्रवचने प्रतीतत्वात्, प्रमत्तगुणस्थानकादारभ्य त्रयोदशगुणस्थानपर्यन्तं यथासंभवं कामित्वभोगित्वव्यपदेशापत्त्या महदसामंजस्यमापद्येत, केवलिनामपि रसादीनां भोगानामुदयात्, ननु तेषां रागद्वेषाभावात् सत्यपि रसादिभोगित्वं न भण्यते इति चेत् चिरं जीव, एवमप्रमत्तादिसाधूनामपि न भोगित्वं,न वा कामित्वं,कुतो निद्राप्रमादवत्त्वमपि?, अत एव आगमे 'जे आसवा ते परिस्सवे'त्यादि भणितं, तथा क्रोधादयोऽपि स्थानकविषयाश्रिता निर्जराहेतवोऽपि भणिताः, यदागमः-"अरिहंतेसु अ रागो रागो साहूसु बंभचारीसु। एस पसत्थो रागो अज्ज सरागाण साहूण ॥१॥"मित्यादि, एवं यथा विषयकषायाः सन्तोऽपि साधूनां न विव-

स्यन्ते तज्जन्यफलाभावात् एवं निद्राऽपि संयमपालनहेतुरुपकरणमिव न प्रमाद इति गाथार्थः॥३६॥ अथ प्रकारान्तरेणापि तथाऽऽह—

अहवा जह असणाई संजमहेउमुणिदेहरक्खट्ठा। भणिअं तहेव निद्दा अण्णह दोण्हंपि नो आणा ॥३७॥

अथवेति प्रकारांतरद्योतने, अशनादिः संयमहेतुमुनिदेहरक्षार्थं-संयमस्य हेतुर्यो मुनिदेहः-साधुशरीरं तस्य रक्षार्थं, भणितं जिनैरितिगम्यं, तथैव निद्रा अशनादिवत् साधूनां निद्रापि शरीररक्षार्थमेव, एवमपि यदि निद्रा आज्ञा न भवेत् तर्हि द्वयोरपि आज्ञा न भवेत्, न चेष्टापत्तिः, 'अहो जिणेहिं असावज्जा वित्ती साहूण देसिआ। मुक्खसाहणहेउस्स,साहुदेहस्स धारणे ॥१॥"त्ति प्रवचनबाधा स्यादिति गाथार्थः ॥३७॥ अथ साधूनां निद्रा प्रमादोऽपि भवति तथा दृष्टान्तयति—

जह आणाए रहिओ भुंजंतो असणपाणमाईणि। भणिओ मुणी पमाई तह निद्द पगामपडिसेवी ॥३८॥

यथा आज्ञया रहितोऽशनादीनि-अशनपानखादिमस्वादिमवस्त्रपात्रादीनि भुंजानो मुनिः प्रमादी-पापश्रमणो भण्यते तथा निद्रां प्रकामसेवी-दिवा रात्रौ वा यथासुखं स्वापशीलः प्रमादी स्यात्, यदागमः-'जे केई पव्वइए निद्दासीले पगामसो भुच्चा। पिच्चा सुहं सुअई,पावसमणुत्ति वुच्चति॥१॥त्ति श्रीउत्तरा० इति गाथार्थः॥३८॥अथोत्सर्गे निद्रास्वरूपे निरूपितेऽपवादेन निद्रा कथं भवतीत्याह—

अववाए पुण थेरा दिवावि कुव्वंति तित्थगरआणा। सा चेव य सुगुरूणं आणा खलु णाणमाईणि ॥३९॥

अपवादे पुनः स्थविरकल्पिकाः दिवाऽपि-दिवसेऽपि,न केवलं रात्रावेवेत्यपिशब्दार्थः,कुर्वन्ति साधव इति गम्यं,किंभूता सा निद्रा ?-तीर्थकराज्ञा, तीर्थकृदाज्ञारूपेत्यर्थः 'सा चेव य'त्ति सैव च निद्रा सुगुरूणां-सुधर्म्मादीनामपि आज्ञा खलुर्निश्चये आज्ञैव,ज्ञानादीनि, गुरुपारतन्त्र्यं हि ज्ञानदर्शनचारित्राणीति वचनादिति गाथार्थः ॥३९॥ अथ गाथाद्वयेन प्रमादाप्रमादयोः पारमार्थिकं स्वरूपमाह—

निद्दाविअ थीणद्धी तिगं कसाया य सव्वघायकरा। इंदिअअत्था रोगद्दोसविसया पमाउत्ति ॥४०॥
मिच्छादिट्ठीणं पुण सव्वेऽवि अ सव्वहा पमाउत्ति। सद्दिट्ठीणमणाणा जिणस्स एसो अ परमत्थो ॥४१॥

निद्राऽपि स्त्यानर्द्धित्रिकं, अपिशब्दस्य सर्वत्राभिसंबंधात् कषाया अपि सर्व्वघातकराः, ते चानंतानुबंध्यादयो द्वादश, यदुक्तं—"बारसाइमकसाया मिच्छंति सव्वघाई" इति, संज्वलनास्तु देशघातका इति, इन्द्रियार्था अपि शब्दादयो रागद्वेषविषयाः मकारोऽलाक्षणिकः, प्रमादो. न पुनर्ज्ञानादिहेतवोऽपीति, मिथ्यादृष्टीनां पुनः सर्व्वेऽपि च निद्रापंचकं षोडशापि कषायाः शब्दादयोऽर्थाश्च सर्वथा–सर्वप्रकारेण प्रमादो, नरकादिहेतुत्वात्, सद्दृष्टीनां–सम्यग्दृष्टीनां जिनस्यानाज्ञा–तीर्थकराज्ञाव्यतिरिक्तं सर्वमपि प्रमादः एष च परमार्थो–वस्तुगतिरिति गाथार्थः ॥४०–४१॥ अथ किं संपन्नमित्याह—

तेणं दव्वपवित्ती अपवित्ती वा पमाणमपमाणं। आरंभाईसु दिट्ठा दिट्ठिपहाणेहिं जिणसमए ॥४२॥

येन कारणेन प्रागुक्तः परमार्थस्तेन कारणेन द्रव्यतः प्रवृत्तिरप्रवृत्तिर्वा प्रमाणमप्रमाणं, वेत्यत्रापि संबध्यते, प्रमाणं वा अप्रमाणं वा, क्वचिदित्यध्याहार्यमधिकारविशेषे, जिनसमये–भगवत्यादिसिद्धांते दृष्टा, कैः?–दृष्टिप्रधानैः–सम्यग्दृष्टिभिरिति, अत एव 'एगं पायं जले किचा एगं पायं थले किचे'त्यागमोक्तविधिना नद्युत्तारः साधूनां जिनाज्ञैव, विहाराद्यवश्यकर्त्तव्येऽनन्यगत्या द्रव्यत आरंभस्यार्किंचित्करत्वात्, एतेन 'यत्र स्वल्पोऽप्यारंभस्तत्र तद्विषयकः साधूनामुपदेशादिर्न स्यादि'ति निरस्तं, आस्तामन्यत्, यदि शीतोपद्रवनिवारणार्थं साधुमुद्दिश्य कृतमप्यग्निप्रज्वालनमवगम्य स्वसाकल्पयतामुद्भाव्य तत्कर्तुर्धर्म्मश्रद्धावृद्ध्यर्थं साधुनाऽप्यनुमो-

निद्रायाः प्रमादा-प्रमादत्वे

दनाया विषयीकार्यं, यदागमः-'नो खलु मे कप्पे अगणिकायं उज्जालित्तए वेत्यादि यावत् तं च भिक्खू पडिलेहाए आगमित्ता आणविज्ञा अणासेवणाए'त्ति इति श्रीआचा० विमोक्षाध्ययने उ० ६, एतद्वृत्त्येकदेशो यथा 'तच ज्वालनातापनादिकं भिक्षुः प्रत्युपेक्ष्य-विचार्य स्वसंमत्या अपरन्याकरणेनान्येषां वाऽतिके श्रुत्वा-अवगम्य गृहपतिमाज्ञापयेत्-प्रतिबोधयेत्, कया?-अनासेवनया, यथा एतन्ममायुक्तमासेवितुं, भवता तु पुनः साधुभक्त्यनुकंपाभ्यां पुण्यप्राग्भारोपार्जनमकारी"ति श्रीआचारांगवृत्ताविति गाथार्थः ॥४२॥ अथ दृष्टान्तगाथामाह—

**अप्पचक्खाणकिरिआ वयभावेऽवि अ न देसविरईणं। नारंभकिरिआरंभे पवट्टमाणाण सुमुणीणं ॥४३॥**

देशविरतीनां-श्रावकाणां तदभावेऽपि-क्वचित् एकादशाविरतीरधिकृत्य प्रत्याख्यानाभावेऽपि चाप्रत्याख्यानक्रिया न भवति 'तत्थ णं जे ते संजयासंजया तेसि णं आदिमाउ तिन्नि किरिआउ कज्जंति' इति **श्रीभगवत्यां** श० १ उ० २, अत्र आरंभिकी पारिग्रहिकी मायाप्रत्ययिकी अप्रत्याख्यानिकी मिथ्यादर्शनप्रत्ययिकी चेति पंचक्रियाणां मध्ये आदिमास्तिस्रः क्रियाः आरंभिकी पारिग्रहिकी मायाप्रत्ययिकी चेति, तत्रैकादशानामविरतीनामप्रत्याख्यानेऽप्यप्रत्याख्यानकीक्रियायाः अनुदयो भणितः, तथा चः पुनरर्थे वा सुमुनीनां-शोभना मुनयः सुमुनयः-सुसाधवस्तेषां अप्रमत्तगुणस्थानकादारभ्य त्रयोदशगुणस्थानकं यावदारंभप्रवर्त्तमानानामप्यारंभिकी क्रिया न भवति, यदागमः-"तत्थ णं जे ते अप्पमत्तसंजया तेसि णं एगा मायावत्तिआ किरिआ कज्जति"त्ति श्रीभगवती श० १ उ० २, ते सर्वेऽप्यारंभे प्रवर्त्तते, यदागमः-"अत्थि णं भंते! समणाणं निग्गंथाणं किरिआ कज्जंति?, हंता" ये तु वीतरागसंयतास्तेषामेकाऽपि क्रिया न स्यात्, यदागमः-"तत्थ णं जे ते वीतरायसंयता ते णं अकिरिआ" इति श्री-

भगवतीशतक० १ उ० २ "कहण्णं भंते! समणाणं निग्गंथाणं किरिआ कज्जति?, मंडिअपुत्ता! पमायपच्चया जोगनिमित्तं च, एवं खलु समणाणं निग्गंथाणं किरिआ कज्जति, जीवे णं भंते! सया समितं एअति वेअति चलति फंदति घट्टति खुब्भति उदीरति तं तं भावं परिणमति, हंता मंडिअपुत्ता! जीवे णं सया समितं एजति जाव तं तं भावं परिणमति, जावं च णं से जीवे सया समितं जाव परिणमति तावं च णं तस्स जीवस्स अंते अंतकिरिआ भवति?, णो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ जावं च णं से जीवे सया समितं जाव अंते अंतकिरिआ न भवति?, मंडिअपुत्ता! जावं च णं से जीवे सता समितं जाव परिणमति तावं च णं से जीवे आरभति सारंभति समारभति आरंभे वट्टति सारंभे वट्टति समारंभे वट्टति आरंभमाणे सारंभमाणे समारंभमाणे आरंभे वट्टमाणे सारंभे वट्टमाणे समारंभे वट्टमाणे बहूणं पाणाणं भूआणं जीवाणं सत्ताणं दुक्खावणाए सोआवणाए जूरावणाए तिप्पावणयाए पिट्टावणाए परितावणाए वट्टति, से तेणट्ठेणं मंडिअपुत्ता! एवं वुच्चति जावं च णं से जीवे सता समितं एअति जाव परिणमति तावं च णं तस्स जीवस्स अंते अंतकिरिआ न भवति"त्ति श्रीभग० श० १ उ० २, एतद्वृत्त्येकदेशो–यथा 'अथ क्रियामेव स्वामिभावतो निरुपयन्नाह–'अत्थि णमित्यादि' अस्त्ययं पक्षो यदुत 'क्रियते' क्रिया भवति, प्रमादप्रत्ययात् यथा दुष्प्रयुक्तकाय-क्रियाजन्म कर्म्म, योगनिमित्तं च यथैर्यापथिकं कर्म्म, क्रियाधिकारादिदमाह–'जीवे ण'मित्यादि, इह जीवग्रहणेऽपि सयोग एवासौ ग्राह्यः, अयोगस्यैजनादेरसंभवात्, सदा–नित्यं 'समिअं'ति सप्रमाणं 'एअइ'त्ति एजति–कंपते 'एजृ कंपने' इति वचनात् 'वेअति'त्ति व्येजति–विविधं कंपते, 'चलइ'त्ति स्थानांतरं गच्छति, 'फंदइ'त्ति स्पंदते–किंचिच्चलति 'स्पदि किंचिच्चलने' इति वचनात्, अन्य-मवकाशं गत्वा पुनस्तत्रैवागच्छतीत्यन्ये 'घट्टइ'त्ति सर्व्वदिक्षु चलति, पदार्थान्तरं वा स्पृशति, 'खुब्भइ'त्ति क्षुभ्यति–पृथिवीं

निद्रायाः
प्रमादा·
प्रमादते

प्रविशति, क्षोभयति वा पृथिवीं, बिभेति वा, 'उदीरइ'त्ति प्राबल्येन प्रेरयति, पदार्थान्तरं प्रतिपादयति वा, शेषक्रियाभेदसंग्रहार्थमाह-'तं तं भावं परिणमति'त्ति उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणादिकं परिणामं यातीत्यर्थः, एषां चैजनादिभावानां क्रमभावित्वेन सामान्यतः तदेजनं मंतव्यं, नतु प्रत्येकापेक्षया, क्रमभाविनां युगपदसंभवादिति, 'तस्स जीवस्स अंते'त्ति मरणांते 'अंतकिरिआ'त्ति सकलकर्मक्षयरूपा, 'आरंभइ'त्ति पृथिव्यादीनुपद्रवति 'सारंभइ'त्ति संरभते-तेषु विनाशसंकल्पं करोति 'समारंभइ'त्ति समारभते-तानेव परितापयति 'संकप्पो संरंभो परितावकरो भवे समारंभो। आरंभो उद्दवओ सुद्धनयाणं विसुद्धाणं ॥१॥" इदं च क्रियाक्रियावतोः कथंचिदभेदः इत्यभिधानाय तयोः समानाधिकरणतः सूत्रमुक्तं, अथ तयोः कथंचिद्भेदोऽप्यस्तीति दर्शयितुं पूर्वोक्तमेवार्थं व्यधिकरणत आह-'आरंभे'त्यादि, आरंभे अधिकरणभूते वर्त्तते जीवः, एवं संरंभे समारंभे च, अनंतरोक्तवाक्यार्थद्वयानुवादेन प्रकृतयोजनामाह-आरभमाणे संरंभमाणे समारंभमाणे जीव'इत्यनेन प्रथमो वाक्यार्थोऽनुदितः, आरंभे वर्त्तमान इत्यादिना तु द्वितीयः, दुक्खावणयाए इत्यादौ ताशब्दस्य प्राकृतत्वात् दुःखापनायां-मरणलक्षणदुःखमापणायां अथवेष्टवियोगादिदुःखहेतुप्रापणायां वर्त्तते इति योगः, तथा शोकापनायां-दैन्यप्रापणायां,वर्त्तते इति योगः, 'जूरावणाए'त्ति शोकातिरेकात् शरीरजीर्णताप्रापणायां,परितापनायां-शरीरसंतापे वर्त्तते,क्वचित् पठ्यते 'दुक्खणयाए' इत्यादि,तच्च व्यक्तमेव, यच्च तत्र 'किलामणयाए उद्दावणाए' इत्यधिकमधीयते तत्र किलामणयाएत्ति ग्लानिं नयते, उद्दावणाएत्ति उत्रासते इति भग० श० ३ उ० ३, अत्रारंभे प्रवृत्तिरप्यारंभक्रियायां देशविरतौ प्रत्याख्याता, अप्रवृत्तिरप्यप्रत्याख्यानक्रियायामप्रमाणतया दर्शिता, मिथ्यादृशामारंभपरिग्रहादौ प्रवृत्तिरप्रवृत्तिर्वाऽविरतिं प्रतीत्याविशेषेण कर्मबंधनहेतुत्वात् प्रमाणमेव द्वे अपीति सम्यगधिया विचार्य प्रमाद-

त्वेनोक्ताऽपि निद्रा प्रमादो न भवति तीर्थकृदाज्ञावर्त्तिनामिति गाथार्थः ॥४३॥ अथ गाथात्रयेण पाशमते मूलोपदेशं दूषयितुं प्रथमगाथया तदभिप्रायमाह—

जं पूआइऽवसाणे आरंभालोअणं पुढो भणिअं। कूवाहरणासंगइमुब्भाविअ भंतचित्तेणं ॥४४॥

तं ता हविज्ज सम्मं ग्वाए कूवंमि अवरकूवजलं। तिण्हाइनासहेऊ वुत्तं जइ हुज्ज जिणसमए ॥४५॥

तह्यो कत्थवि भणिअं भणिअं पुण खणिअकूवसलिलेणं। सुह भागी सव्वजणो अप्पा अण्णोऽवि बहुजीवी ॥४६॥

यद्यारंभः पृथग् नालोच्यते तर्हि द्रव्यस्तवे कूपोदाहरणस्य संगतिर्न भवेदित्येवं भ्रांतचित्तेन पाशेन मूर्खजनेभ्यः कूपोदाहरणासंगतिमुद्भाव्य पूजाद्यवसाने आरंभालोचनं पृथक् भणितमिति पाशाशय इति गाथार्थः ॥४४॥ अथ पाशोक्तं यथालिंगितानिष्टापादनतर्केण दूषयितुं गाथामाह—तत् पाशोक्तं 'ता' तर्हि सम्यग् भवेत् यदि खाते कूपेऽपरकूपजलं तृष्णाविनाशहेतुतया जिनसमये भणितं भवेत्, तत् खनिकर्म्मकर्त्तुः पुंस इति अर्थात् बोध्यं, अयं भावः—स्वयं खातकूपजलेन निजतृष्णाद्युपशांतिर्न स्यात्, किंत्वपरकूपजलेनैवेति यद्युक्तं स्यात् तर्हि पूजाद्यवसाने पाशकल्पितेर्यापथिकी सम्यग् स्यादिति व्याख्ययाऽनिष्टाऽपादनं कृतमिति गाथार्थः ॥४५॥ अथ व्यतिरेकेण निगमनमाह—खनिकर्त्तुरपरकूपजलेन तृषाद्युपशान्तिर्नान्येन जलेनेत्यादि क्वापि शास्त्रे न भणितं, प्रत्यक्षेण दृष्टे वस्तुनि शास्त्रस्याप्यप्रवृत्तेः, प्रत्यक्षप्रमाणस्य बलवत्त्वात्, भणितं पुनः खातकूपसलिलेनात्मा—खनिकर्त्ताऽन्योऽपि—तद्व्यतिरिक्तोऽपि बहुजीवी—दीर्घायुः सर्व्वजनसुखभागीति, अयं भावः—पूजाकर्त्तुः कथंचित् कुसुमादिविराधना द्रव्यतो भवति तज्जन्यं कर्म्माप्यल्पस्थितिकमल्पं च स्यात्, परं तादृशं कर्म्म पूजां कुर्व्वत एव तद्ध्यानजलेन प्राचीनाशुभकर्मसंतत्या सममेव विलयं

याति, न पुनः पूजापर्यवसानं यावत्तिष्ठति, नागकेतुवत्पूजां कुर्व्वतामेव बहूनां केवलोत्पत्तेः श्रवणात्, अन्यथा तदसंभवात्, तथा च तत्रेर्या हि अजागलस्तनकल्पेति, ननु तर्हि कूपोदाहरणासंगतिः स्यात्, कूपे तु खाते सत्येव तज्जलेन तृषाद्युपशान्तिरिति चेत् मैवं, सर्वेषामपि वस्तूनां देशेनैवोदाहार्यात्, नहि महानसदृष्टान्तेन पर्व्वते साध्यमानो वह्निः स्त्रीभांडादिपाकसामग्रीमादायैव सिध्यति, किं तु वह्निमात्रसिद्धिः, तद्वदत्रापि, दृष्टान्तयोजना चैवं यथावत्-कूपजलेन पूर्वोत्पन्नतृषया सहैव सद्यःसमुत्पन्नाऽपि तृषोपशाम्यति, शरीरादिपावित्र्यं च, तथा पूजां कुर्व्वत एव पूर्व्वोपार्जिताशुभकर्म्मभिः सहैव -कुसुमादिजन्यकिंचिद्विराधनाजन्यं मालिन्यमपैति देवलोकगमनयोग्यशुभकर्म्मोपार्जनमपीति कुतः पाशकल्पना ज्यायसी ?, तस्मात् दृष्टांतासंगत्युद्भावनं स्वगलपादुकाकल्पं पाशस्यैव संपन्नमिति गाथार्थः ॥४६॥ अथ द्रव्यस्तवे तावदीर्यापथिकाया गन्धोऽपि न संभवतीति दर्शनायेर्यापथिक्याः स्थानकमाह—

इरिआवहिआठाणं सावयकिरिआवि साहुसमकिरिआ। तत्तो भिन्नसरूवो इरिआठाणं न दव्वथओ ॥४७॥

ईर्यापथिकायाः स्थानं श्रावकक्रियाऽपि साधुसमक्रिया भवति–साधुसदृशी क्रिया हि सामायिकादिरूपा भवति, यदागमः– "सामाइअंमि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइअं कुज्जा॥१॥"त्ति श्रीआवश्यकनिर्युक्तौ, तत्रेर्यापथिका संभवति, ततो भिन्नस्वरूपो द्रव्यस्तवो नेर्यास्थानं–ईर्यापथिकायाः स्थानं न स्यादेवेति गाथार्थः ॥४७॥ अथ विशेषत ईर्यायाः स्थानकमाह—

जीइ किरिआइ हेउत्ति जाणिउं जेण इरिअ पडिक्कंता। तेणं तीइ पच्छा पडिक्कमिअव्वा य जहठाणे ॥४८॥

यस्याः क्रियाया ईर्या हेतुरिति ज्ञात्वा येन श्रावकेण साधुना वा ईर्या प्रतिक्रांता, यां क्रियां सामायिकादिरूपां चिकीर्षता

स्वात्मन एव विडम्बनाहेतुः, तत्र हेतुमाह–'जं संवर'त्ति यत्–यस्मात् कारणात् सम्यक्त्वं संवरो भणितः, यदागमः–"पंच संवरदारा पं०, तं०–सम्मत्तं १ विरती २ अपमाओ ३ अकसातित्तं ४ अजोगित्तं ५" ति श्रीस्थानांगे, एतट्टीकादेशो यथा–तथा संवरणं–जीवतडागे कर्म्मजलस्य निरोधनं संवरः तस्य द्वाराणि–उपायाः संवरद्वाराणि, मिथ्यात्वादीनामाश्रवाणां क्रमेण विपर्ययाः सम्यक्त्व-विरत्यप्रमादाकषायित्वायोगित्वलक्षणाः प्रथमाध्ययनवत् व्याख्येया इति, न च सम्यक्त्वं संवरद्वारतयोक्तं, परं स्वयं संवरो न भविष्यतीति शंकनीयं, अकषायित्वायोगित्वयोरपि तथात्वापत्तेः, तस्मात् द्वारद्वारवतोरैक्यमेवात्र बोध्यमिति, अत्र सम्यक्त्वं संवरो भणितस्तदुपकरणव्यापारः–तस्य–सम्यक्त्वस्योपकरणानि–जिनभवनजिनबिंबानि, उपकरणानि हि व्यापारवंत्येव फलवंतीति तेषामुपकरणानां व्यापारो द्रव्यस्तवः, उपलक्षणात्तदनुकूलप्रवृत्त्यादिकं सर्व्वमपि बोध्यं, तथा साधुपूजादि सुगंधादिना पूजनं, यदागमः–"तित्थगराण भगवओ पवयण पावयण अईसइड्डीणं। अहिगमणनमणदरिसण कित्तणसंपूअणाथुणणा ॥१॥ जम्मा-भिसे अ निक्खमण चरणनाणुप्पयाण निव्वाणे। दिअलोयभवणमंदरनंदीसरभोमनगरेसु ॥२॥ अट्ठावयमुज्जंते गयग्गपयए अ धम्मचक्के अ। पासरहावत्तणयं चमरुप्पायं च वंदामि ॥३॥ इति श्रीआचारांगनिर्युक्तिः दर्शनभावनाध्ययने, एतद्वृत्तिर्यथा "दर्शनभावनार्थमाह–'तित्थयर'गाहा, तीर्थकृतां भगवतां प्रवचनस्य–द्वादशांगस्य गणिपिटकस्य तथा प्रावचनिनां–आचार्यादीनां युगप्रधानानां तथाऽतिशयिनां–ऋद्धिमतां केवलिमनःपर्यायावधिचतुर्दशपूर्वविदां तथाऽऽमर्षौषध्यादिप्राप्तर्द्धीनां यदभिगमनं गत्वा च नमनं नत्वा दर्शनं तथा गुणोत्कीर्त्तनं संपूजनं गंधादिना स्तोत्रं–स्तवनमित्यादिका दर्शनभावना, अनया हि दर्शनभावनया नवरं भाव्यमानया दर्शनशुद्धिर्भवतीति, 'किंचे'त्यादि प्रागुक्तं बोध्यं, अत्र साधूनां सुगंधादिना पूजनेन सम्यक्त्वनैर्मल्यमुक्तं,

सम्यक्त्वं च संवरतया भणितं कथं न पूजा सवरः ?,तस्मात् यदि तीर्थकृतां संवरविषयक उपदेशो जिनाज्ञा तर्हि पूजाऽपि जिनाज्ञयैव सिद्धेतिगाथार्थः ॥५४॥ अथ द्रव्यस्तवः कीदृशः ?, अन्यथा च किं स्यादिति दर्शयन्नाह—

तं नियमा जिणआणा अण्णह आणा न केवलीकिच्चं। एवं सिद्धंतोऽविअ सिद्धो आणाइ बाहिरिओ ॥५५॥

तत्–द्रव्यस्तवादिकं जिनाज्ञा, अन्यथा केवलिकृत्यं, अपि गम्यः, केवलिकृत्यमपि जिनाज्ञा न स्यात्, तस्यापि केवलसातावेदनीयकर्म्मबंधेनाश्रवत्वात्, एवमितीष्टापत्तौ सिद्धांतोऽपि आज्ञाबाह्यः सिद्धः, तस्य तु छाद्मस्थिककृत्यत्वादिति गाथार्थः ॥५५॥ अथ पाशचन्द्रमते सिद्धान्तो नाज्ञामूलक इति स्थिते किं संपन्नमित्याह—

तो आणानाणाईविआरणा भूमिविरहिआ जाया। तत्थवि अ पासचंदो रत्तो पत्तो अ पायालं ॥५६॥

'तो' तस्मात् पाशमते आज्ञानाज्ञाविचारणा–इयमाज्ञा इयं च नेत्यादिविवेचना भूमिविरहिता–स्थानकशून्या जाता, अयं भावः–आज्ञा नाज्ञा च सिद्धांतेनैव विचार्यते, सिद्धांतोऽप्याज्ञाशून्यस्तर्हि क्व तदनुसारेणाज्ञानाज्ञाविचारणा सम्यग् स्यात् ?, नहि केवलाकाशे नीलपीतादिवर्णोपेतानि देवदेव्यादिरूपाण्यालिखितुं शक्यंते, यद्यपि कुपाक्षिकमात्रस्यापि सिद्धान्ताभ्युपगमो नास्त्येव, किंचित्सूत्रमात्रस्य वचोमात्रेणाभ्युपगमेऽपि तदर्थस्य स्वमतानुसारेण विकल्पितत्वात्, तथाऽपि तदभ्युपगममंगीकृत्यापि पाशचंद्रमते जैनसिद्धांतोऽपि श्रीभारतरामायणादिवत् स्वमतिविकल्पितो जिनाज्ञाबहिर्भूतत्वात्, 'तत्थवि' त्ति तत्रापि तथाभूतेऽपि सिद्धान्ते पाशचन्द्रो रक्तः–जिनप्रतिमायां हरिहरादिबुद्ध्या सक्तः पातालं गतः, अनंतशो नरकादिगमनसद्भावात्, किंच–यत्रैकस्यापि कर्म्मणो बंधस्तत्र जिनाज्ञा न भवति तत्कुतो ज्ञातमित्यादिप्रश्नरचना चतुरैः स्वयमेव कार्येति गाथार्थः ॥५६॥ अथोक्तयुक्तिप्रकारेण श्रावकधर्म्मे

द्रव्यस्तवस्यैव मुख्यतां दर्शयन्नाह—

**तेणं सावयधम्मे पवरं जिणभवणपमुहनिम्मवणं। असदारंभपवत्ताण तत्तभव्वाण जलसाला ॥५७॥**

तेन—प्रागुक्तयुक्तिदर्शनेन श्रावकधर्म्मे जिनभवनप्रमुखनिर्मापणं—जिनभवनप्रतिमाप्रतिष्ठादिविधापनं प्रवरं—श्रेष्ठमुत्तमं सामायिकाद्यपेक्षया महाफलहेतुः, एतच्च राकामते विस्तरतः प्रपंचितं ततो बोध्यं, प्रासादादिनिर्म्मापणं असदारंभाः—गृहस्थत्वनिर्व्वाहहेतवो ये व्यापारास्तत्र ये आरंभास्तेऽसदारंभास्तेषु प्रवृत्तानां तप्तभव्यानां—सांसारिकव्यापारचित्तोत्पन्नतापानां जलशाला इव—पानीयशाला इव, यथा पानीयशाला प्रपा सूर्यातपतप्तानां पिपासूनां सुखहेतुस्तथा संसारकृत्यतप्तानां भव्यानां धर्म्मपिपासूनां जिनभवनादिकं पानीयशालाकल्पमिति गाथार्थः ॥५७॥ अथ पाशविकल्पिता वादाः कीदृशा इत्याह—

**एवं तिहावि वाया पासेण विगप्पिआ महापावा। जह ते सम्मावाया हवंति तह किंचि दंसेमि ॥५८॥**

एवं—प्रागुक्तप्रकारेण पाशेन विकल्पितास्त्रिधाऽपि वादा महापापा बोध्याः, अथ यथा ते सम्यग्वादा भवंति तथा किंचिल्लेशतो दर्शयामीति गाथार्थः ॥५८॥ अथाज्ञाविधिवादयोः पर्यायवाचित्वं नास्तीति दर्शयति—

**नाणा खलु विहिवाओ विहिवाओ नेव होइ आणत्ति। जइसद्दकज्जकारणपरूवणा होइ विहिवाए ॥५९॥**

आज्ञा खलु—निश्चये विधिवादो न भवति, विधिवादोऽपि नैवाज्ञा भवति, अथ विधिवादः क इत्याह—'जइ'त्ति यदिशब्दकार्यकारणभावप्ररूपणा विधिवादे भवति, वर्त्तमानकालप्रयोगे सप्तमी यात् यातां युस् यास् यातं यात यां याव याम ईत ईयातां ईरन् ईथास् ईयाथां ईध्वं ईय ईवहि ईमहीत्यादिविभक्तयो भवंति अतीतानागतकालापेक्षया, विधिवादे तु यथासंभवं ह्यस्तनीभवि-

ष्यत्यादयोऽपि स्युरिति गाथार्थः ॥५९॥ अथ वर्त्तमानकालापेक्षया विधिवादे उदाहरणमाह—

जइ सम्मं जिणधम्मं करिज्ज सो हुज्जऽवस्स वेमाणी । एवं पगोअवयणं असंभवपएऽवि संभवइ ॥६०॥

यदि जिनधर्म्मं सम्यग् कुर्यात् तर्हि अवश्यं विमानी–विमानानां समूहो विमानं तद् विद्यते यस्य स वैमानी, इंद्र इत्यर्थः, भवेत्, एवं यद्यालिंगितविधिवादप्रयोगवचनमसंभवपदेऽपि–असंभावितस्थानेऽभव्यादावपि संभवति, यद्यालिंगितवाक्ये आरोपस्यैव प्राधान्यात्, आरोपस्तु सर्वत्रापि समान एवेति गाथार्थः ॥६०॥ अथ कार्यकारणभावमूलकविधिवादोदाहरणमाह—

सुहकामो जिणपूअं करिज्ज विहिणेव विहीवि सुगिहीणं । भणिआ जिणेण न उणं मुणीण पुप्फाइहेऊहिं ॥६१॥

सुखकामो जिनपूजां विधिना कुर्यात्, अत्र सुखजिनपूजयोः कार्यकारणभावात् सप्तमीयात्प्रयोगः, तत्रापि विधिनैव कृता जिनपूजा सुखहेतुः,नान्यथेति,विधिरपि जिनेन सुगृहिणां–श्रावकाणां भणितः,द्रव्यस्तवकरणविधिः सुश्रावकाणामेव स्यात्,विधिरपि कैः कृत्वेत्याह–पुष्पादिहेतुभिः, शोभनपुष्पचंदनादिपूजाद्रव्यैरित्यर्थः, न पुनरयं विधिर्मुनीनां–साधूनांभणितः,मुनीनां तु श्रावकोक्तविधिना कृताऽपि पूजा–चातुर्गतिकसंसारपरिभ्रमणहेतुरेवेति न तत्र कार्यकारणभावः,सुगृहीति श्रावकग्रहणेनोत्सूत्रभापिकृताऽपि न सुखहेतुः, किन्त्वनंतसंसारहेतुरेवेति सूचितं, एतच्च प्रागुक्तमिति गाथार्थः ॥६१॥ अथ पुनरपि विधिवादे उदाहरणद्वयमाह—

हिंसाइपरो जीवो पाविज्जा निरयपमुहदुहजोणिं । पीएज्ज पुट्ठिकामो घयंपि नीरोअदढदेहो ॥६२॥

हिंसादिपरः–हिंसामृपादत्ताब्रह्मपरिग्रहेषु तत्परः–आसक्तो जीवः–प्राणी निरयप्रमुखदुःखयोनिं–नरकतिर्यगादिदुर्गतिं माप्नुयात्, अत्र नरकादिकुयोनेः कारणं हिंसाद्याश्रव एवेति कार्यकारणभावे सप्तमी विधिवादे, तथा नीरोगदृढशरीरः पुष्टिकामो घृतं

पिवेदिति नीरोगदृढशरीरस्य पुष्टिघृतयोः कार्यकारणभावो, न पुनरदृढशरीरस्य पुष्टिघृतयोः, कार्यकारणभावे वर्त्तमानाऽपि दृश्यते, यथा–'पडंति नरए घोरे, जे नरा पावकारिणो। दिव्वं च गइं गच्छंति, चरित्ता धम्ममारिअं ॥१॥"ति, तथाऽपि विधिमार्गे प्रायः सप्तम्येव त्यादिविभक्तिर्भवति, किंच–नात्र केवलकार्यकारणवावः सूचितः, किंतु संमति लोक एतादृशो वर्त्तते इति ज्ञापितं, तच्च वस्तुगत्या यथास्थितवाद एवेतिगाथार्थः ।।६२।। अथ विधिवादे तात्पर्यं दर्शयित्वोपसंहारमाह—

एवं विहिवाएऽविअ कत्थवि आणा कहिंचि पडिसेहो। कत्थवि उवेहवयणं एवं चरिआइवाएसु ॥६३॥

एवमुक्तोदाहरणप्रकारेण विधिवादेऽपि, चकारोऽग्रे समुच्चयार्थः, 'कत्थवि'त्ति कुत्रापि आज्ञा सम्यग्जिनधर्म्मकृतौ, क्वापि प्रतिषेधो हिंसाद्याश्रवे, क्वाप्युपेक्षावचनं नैकान्तेन प्रतिषेधो नैवाज्ञा घृतपानादौ,तथा च विधिवादोऽप्यनेकस्वरूप इति दर्शिते पाशचंद्रेण यदुक्तं विधिवादाज्ञयोरैक्यं तन्निरस्तं। अथातिदेशमाह–'एव'मित्यादि, एवं चरितानुवादयथास्थितवादयोरपि बोध्यं, अयं भावः–क्वचिच्चरितानुवादोऽप्याज्ञारूपः,यथा द्रौपदीश्राविकाविहितः पूजाविधिरन्येषामप्याज्ञारूपः,एवमन्यैरपि कर्त्तव्यमिति, कश्चिच्च निषेधरूपो यथा कोणिराजकृतः संग्रामविधिः, सर्व्वेषामपि निषेधरूप एव, नान्यैरित्थं कर्त्तव्यमिति, उपेक्षानुरूपश्चरितानुवादो धनाख्यसार्थवाहेन चिलातीपुत्रव्यापादितपुत्रीमांसभक्षणमित्यादि, एवं यथास्थितवादोऽपि त्रिधा, शाश्वतचैत्यादिवर्णनं यथास्थितवादे सदपि तदनुकूलप्रवृत्त्या जिनाज्ञाऽऽराधिता भवतीतिकृत्वा यथास्थितवादोऽप्याज्ञारूप एव, नरकादिस्वरूपवर्णनं तदनुकूलप्रवृत्त्या जिनाज्ञा नास्तीति प्रतिषेधरूपो यथास्थितवादः, मेर्वादिवस्तूनां वर्णनं नाज्ञा नवा प्रतिषेधस्तदनुकूलमतिकूलचेष्टयोरसंभवादित्यादिकं विधिवाद इव चरितानुवादयथास्थितवादावपि संपन्नाविति गाथार्थः ॥६३॥ अथाज्ञायाः स्वरूपमाह—

आणावि होइ दुविहा आएसुवएसपएहिं जिणसमए। मुणिधम्मे आएसो गिहीण जहसमयमुभयंपि ॥६४॥

आज्ञाऽपि-जिनाज्ञाऽपि द्विधा भवति, काभ्यां ?-आदेशोपदेशपदाभ्यां, क ?-जिनसमये-जिनसिद्धांते, क्वचिदादेशरूपा आज्ञा, त्वमित्थं कुर्व्वित्यादिरूपेण, क्वचिच्चोपदेशरूपा यथा सुश्रावको जिनेंद्रपूजां कुर्व्वाणः सुलभबोधिः स्यादित्यादि,अत एवाह-'मुणिधम्मे'त्यादि, मुनिधर्म्मे-साधुधर्म्मे आदेशः, सर्व्वेषामपि साधुधर्माणां निरारंभप्रवृत्तिरूपत्वात्, गृहिणां-श्रावकाणां धम्म यथासमयं-यथावसरमुभयमपि-आदेशोपदेशरूपं द्वयमपि, अत एव पौषधसामायिकक्रियायामादेशा दीयन्ते गुरुभिः, जिनप्रतिमापूजाक्रियासूपदेशो, न पुनरादेशोऽपीति संप्रत्यपि साधूनां प्रतीतत्वात्, आदेशोपदेशौ तु यथा जिनानां तथा तच्छिष्यानां गणधराणां, तद्वदद्यतनसाधूनामपि युक्तौ, तत्संतानीयत्वात्, एवं चाज्ञादिस्वरूपे विचार्यमाणे सर्व्वमपि सुस्थमेवेति गाथार्थः ॥६४॥ अथापरामपि पाशप्ररूपणामाह—

आवस्सयउवहाणं अट्ठदिणेहिंपि साहुजोगुव्व। वासनिसेहप्पमुहं मोहुदया भासए पासो ॥६५॥

आवश्यकोपधानमष्टभिर्दिनैः साधुयोगवत् वासनिषेधप्रमुखं च भाषते, आदिशब्दात् जिनबिंबप्रतिष्ठादयो ग्राह्याः, नामतोऽपि कुपाक्षिकाणां प्रतिष्ठाव्यवस्थितिरेवं, दिगंबरखरतरयोर्निजवेषधर एव प्रतिष्ठाता विधिना,पौर्णिमीयकांचलिकसार्धपौर्णिमीयकागमिककटुकानां तु गृहस्था एव प्रतिष्ठां कुर्व्वंति, न पुनः स्वाभिमता अपि वेषधराः, लुंपकस्य तु प्रतिमाया एवानंगीकारात् प्रतिष्ठावार्त्ताऽपि दुरापा, बीजापाशयोस्तु प्रतिमांगीकारेऽपि प्रतिष्ठा मूलतोऽपि नादृता, पाशेनाकृतिमात्रमेव पूज्यत्वेनाभिमतीकृता, एवं पाशस्य प्ररूपणा कुतो ?-मोहोदयात्-मिथ्यात्वमोहनीयकर्म्मोदयात्, प्रागुजन्मनि कुतोऽपि कारणात् तीर्थकरादीनामाशातकोऽभूत् तत्या-

पोदयेन पुनरप्यच्छिन्नतीर्थस्याशातको महापापभाग् संपन्न इति गाथार्थः ॥६५॥ अथोपधानादिप्ररूपणेऽतिदेशमाह—

तत्थुवहाणपइट्ठा परूविआ पुण्णिमीअवीसामे । वासस्सवि निक्खेवं कासी वीरो गणहराणं ॥६६॥

तत्रोपधानप्रतिष्ठे प्ररूपिते पौर्णिमीयकविश्रामेऽतस्ततो ज्ञेये, उपलक्षणात् पंचमीपर्युषणापूर्णिमाचतुर्मासकाद्यपि प्ररूपितं तु पौर्णिमीयकांचलीकमतविश्रामोक्तयुक्त्या तिरस्करणीयं, वासस्य निक्षेपं वीरः—श्रीमहावीर एव गणधराणां—गौतमादीनां मस्तकेषु अकार्षीत्, एतच्च श्रीआवश्यकनिर्युक्तिवृत्तिचूर्ण्योर्विशेषावश्यकवृत्तौ च स्फुटमेवेति गाथार्थः॥६६॥ अथाधिकारोपसंहारमाह—

एवं कुपक्खकोसिअसहस्सकिरणंमि उदयमावण्णे। चक्खुप्पहावरहिओ दसमुत्तो पासचंदुत्ति ॥६७॥

एवं—प्रागुक्तप्रकारेण कुपक्षकौशिकसहस्रकिरणे उदयं प्राप्ते 'चक्खु'त्ति चक्षुः—स्वकीयं लोचनं तस्य यः प्रभावो—महिमा नीलादिरूपग्रहणशक्तिस्तेन रहितो—विकलो दशमः—उद्दिष्टेषु दशसु कुपाक्षिकेषु अंत्य एषः संप्रत्यपि विद्यमानः पाशचन्द्रः—पाशचन्द्रनामा 'इती'ति ग्रंथसमाप्तौ कथित इति बोध्यं। अयं भावः—उदिते हि सहस्रकिरणे यथा कौशिको निजचक्षुःप्रभावरहितो भवति, अयं जगत्स्वभावो यत्तामसकुलस्य सूर्यकिरणा अतिश्यामतया भासंते, यदाह श्रीसिद्धसेनदिवाकरः—"सद्धर्म्मबीजवपनानघकौशलस्य, यल्लोकबांधव! तवापि खिलान्यभूवन्। तन्नाद्भुतं खगकुलेष्विह तामसेषु, सूर्यांशवो मधुकरीचरणावदाताः॥१॥" इति, तथा कुपक्षकौशिकसहस्रकिरणसंज्ञितेऽस्मिन् प्रकरणे कुपाक्षिकाणां पुरस्तादुद्भाविते कुपाक्षिकविशेषः पाशचन्द्रो निजचक्षुः—कुश्रद्धानरूपा कुदृष्टिस्तत्प्रभावरहितो भवति—तस्य स्वमतिविकल्पिताः कुयुक्तयो न स्फुरन्ति, अथवा कुदृष्टिरेव सुदृष्टिर्भवति, एवंविधः पाशचंद्रो दशम उक्तः—कथित इति गाथार्थः ॥६७॥ अथायं पाशचंद्रः कस्मिन् संवत्सरे कस्मिंश्च गुरौ विद्यमाने सति भणित इति

दर्शनाय गाथामाह—

नवहत्थकायरायंकियसममहिमंमि चित्तसिअपक्खे । गुरुदेवयपुण्णुदए सिरिहीरविजयसुगुरुवारे ॥६८॥

संवत्सरस्य पक्षे त्वेवं–नवहस्तशब्दौ क्रमेण नवद्विकसंख्याभिधायकौ कायाः–पृथिव्यादयः समयभाषया षट्, षट्संख्यावाची कायशब्दः, राजा–चंद्रः, स चैकत्वसंख्यावाची ज्योतिर्विदां प्रतीतः, एतैः शब्दैः 'अंकानां वामतो गति'रिति वचनात् क्रमेण येऽकाः ते जाता यासु ता नवहस्तकायराजांकिताः, एवंविधाः समाः,समाशब्दो बहुवचनांतः,ततः ते संवत्सरास्तासां महिमा–नाम-ग्रहणादिना ख्यातिर्यस्मिन्, एवंविधे संवत्सरे इत्यर्थः,मधुमासस्य शुक्लपक्षे तत्रापि 'श्रीहीरविजयगुरुवारे' श्रिया–शोभया हिनोति–वर्द्धते सुरगुरुत्वाद्यः स श्रीहित् रवेः–सूर्यस्य जयो यस्मात् स रविजयः, सूर्यबृहस्पत्योः परस्परं मैत्रीसद्भावात् 'रवेः शुक्रशनी शत्रू,ज्ञः समः सुहृदः परे'इति, तथा 'जीवस्यार्कात् त्रयो मित्राः'इति वचनात् बृहस्पतेः सकाशात् रवेर्जयो भवत्येव, ततश्च श्रीहिच्च रविजय-श्चेति विशेषणसमासः,एवंविधो यः सु–शोभनो गुरुः–बृहस्पतिः तन्नाम्ना वारस्तस्मिन् श्रीहिद्रविजयसुगुरुवारे,किंलक्षणे?–'गुरुदैव-तपूर्णोदये'–गुरुदैवतः–पुष्यः पूर्णा चार्थाद्दशमी, चैत्रशुक्लपक्षे पंचमीपंचदश्योः पूर्णातिथ्योः पुष्यनक्षत्रायोगात्, तयोरुदयो यत्र स गुरुदैवतपूर्णोदयस्तस्मिन् ,सं. १६२९ वर्षे चैत्रसितदशमीतिथौ बृहस्पतिवारे पुष्यनक्षत्रे चंद्रे चरति सति इति भावार्थः । गुरुपक्षे पुनर्व्याख्यानं यथा–श्रीहीरविजयसुगुरुवारे–सुविहितागणीश्रीहीरविजयसूरीश्वरराज्ये प्रवर्त्तमाने,किंलक्षणे ?,'नवहत्थे'त्यादि, नव हस्ताः प्रमाणं यस्य एवंविधः कायः–शरीरं यस्य स चासौ राजा च नवहस्तकायराजः–श्रीपार्श्वनाथस्तेनांकितः–अवच्छिन्नोऽर्थात् यः कालस्तेन समः–सदृशो महिमा यत्र स तथा तस्मिन्, अत्समासांतेन नवहस्तकायराजांकितसममहिमे, यद्वा नव हस्ताः प्रमाणं

यस्यैवंविधो राजते इत्येवंशीलो राजा–शोभनः एवंविधः कायः–शरीरं यस्य सः प्राकृतत्वात् विशेषणस्य परनिपातः, तथा च नवहस्तकायराजेतिसंपन्नं तेनांकितः चिह्नीकृतोऽर्थात् श्रीपार्श्वनाथस्तस्य महिम्नः समो महिमा यत्र स तथा तस्मिन्, श्रीपार्श्वनाथराजसदृशमहिम्नि श्रीहीरविजयसूरीश्वरराज्ये इत्यर्थः, अयं भावः–श्रीऋषभाद्यपेक्षया हीनकालसमुत्पन्नोऽपि श्रीपार्श्वनाथः सर्व्वजनेष्वादेयनामा यथाऽभूत् न तथा ऋषभादयः,एवं श्रीवज्रस्वाम्याद्यपेक्षया श्रीवीरजन्मनक्षत्रसंक्रान्तभसराशिमाहात्म्यात् कुनृपकुपाक्षिकबाहुल्येन तथाविधकालोत्पन्नोऽपि श्रीहीरविजयसूरिर्यथा माहात्म्यभाग् न तथा वज्रस्वाम्यादयः, न चैतत् वर्णनमात्रं, किंतु पारमार्थिकमिति प्रदर्शनाय विशेषणद्वारा हेतुमाह, किंलक्षणे श्रीहीरविजयसुगुरुवारे?–'चित्रसितपक्षे' चित्रं–आश्चर्यं यथा स्यात् तथा कुपाक्षिकमुख्यानामपि निजकुपक्षपरित्यागपुरस्सरं सितः श्वेतः शुद्ध इतियावत् पक्षः अंगीकारो यत्र वारके स तथा तस्मिन् ,अयं भावः–कुपाक्षिकमुख्यः सपरिकरः ऋषिमेघजीनामा लुंपकमतीयो नगरमुख्येऽहम्मदावादे सकलराजमुख्यमुद्गलाधिपतिपातशाहश्रीअकब्बरसाक्षिकं महामहःपुरस्सरं यथा प्रव्रज्यादिकं प्रतिपेदे न तथा प्राचीनाचार्यराज्येषु, यद्यपि कश्चित् कदाचित् प्रवज्यादिकं स्वीकुर्व्वाणो दृष्टः श्रुतश्च परं तन्मुख्यास्तु उक्तयुक्त्या श्रीहीरविजयसूरिराज्ये इति चित्रं, एवमपि कुत इति विशेषणद्वारा हेतुमाह, यतः किंलक्षणे श्रीपूज्यवारके?–'गुरुदैवकपूर्णोदये' गुरु–महत् तच्च तद्दैवं च गुरुदैवकं, स्वार्थे कः, तस्य पूर्णः–अन्यून उदयस्तीर्थकृन्नामकर्म्मोदयवत् प्राग्जन्मोपार्जितशुभमवृत्तिविपाकानुभवनं यत्र स तथा तस्मिन् गुरुदैवकपूर्णोदये तत्र, न केवलं गुरोरेव पुण्यप्रकृत्युदयः, किंतु तद्भक्तानामपि, तथा हि–गुरुपक्षे तावत् नहि गुरूणां तथाविधपुण्यप्रकृतिविपाकानुदये कुपाक्षिककुनृपव्याकुलेऽपि काले श्रीस्तंभतीर्थे प्रभावनामुखेनैव कोटिसंख्यो द्रव्यव्ययः संभवति, तद्भक्तपक्षे तु तथाविधेऽपि काले तद्भक्तानां विधात्रा ज्ञानदर्शनचारित्राणि

पिंडीकृत्य निर्मितैकमूर्त्तीनां श्रीगुरुणां ये भक्ताः श्रावकास्तेषां प्राग्जन्मोपार्जितशुभकर्म्मप्रेरणया भाविन्या च तथाविधभवितव्यतयैव तथाविधभक्त्युल्लासः संभवति, यदागमः—"पुण्णेहिं चोइआ पुरकडेहिं सिरिभायणं भविअसत्ता। गुरुमागमेसिभद्दा देवयमिव पज्जुवासंति ॥१॥" त्ति गाथार्थः ॥६८॥ अथैतत्प्रकरणकर्त्तृनामगर्भितामाशिरमिधायिकां गाथामाह—

इअ सासणउदयगिरिं जिणभासिअधम्मसायराणुगयं। पाविअ पभासयंतो सहस्सकिरणो जयउ एसो ॥६९॥

इय कुवक्खकोसियसहस्सकिरणंमि सिरिहीरविजयसूरिदत्तपवयणपरिक्खावरनामंमि पासचंदमय-
निराकरणनामा इक्कारसमो विस्सामो सम्मत्तो ॥ग्रन्थाग्रं १२०५॥

इति—अमुना प्रकारेण एषोऽध्यक्षसिद्धः सहस्रकिरणः, पदैकदेशे पदसमुदायोपचारात् कुपक्षकौशिकसहस्रकिरणो जयतु—जीयादित्याशीरुपदर्शितेति संबंधः, आशीरपि तत्कृत्योद्भावनपुरस्सरमेव भवति इत्याह, किं कुर्व्वन् जयतु ?—प्रभासयन्—प्रकाशं कुर्व्वन्, अर्थात् जीवलोकं, अन्योऽपि सूर्यो जीवलोकं प्रकाशयन्नेवाशीर्भाग् भवति, तथाऽयमपि, प्रकाशमपि किं कृत्वा करोतीत्याह—'सासणे'त्यादि, शासनं—जैनतीर्थं तद्रूपो य उदयगिरिः—उदयाचलो निषधवर्षधर इतियावत् तं प्राप्य—तच्छिखरमासाद्य, अन्योऽपि सूर्यो निषधशिखरमासाद्य प्रकाशं कुरुते तथाऽयमपि जैनतीर्थं प्राप्यैव प्रकाशयति, नान्यथा, किंलक्षणं शासनोदयगिरिं ?—'जिनभाषितधर्म्मसागरानुगतं' जिनेन—अर्हता भाषितो यो दानादिलक्षणो धर्म्मस्तद्रूपो यः सागरः—समुद्रस्तं प्रत्यनुगतः—प्राप्तः संबद्धोऽनुकारी चेत्यर्थः, निषधोऽपि समुद्रसंबद्धो भवति, उभयतोऽपि समुद्रस्पर्शीत्यर्थः, अथवा तदनुकारी समुद्रसदृशः, यथा सूर्यः समुद्रे मंडलानि कुरुते तथैव निषधेऽपि, यदुक्तं—"तेसट्ठी निसढंमि अ दुन्नि अबाहा दुजोअणंतरिआ। एगुणवीसं च सयं सूरस्स य मंडला

लवणे ॥१॥" इति, अथ निषधापेक्षया समुद्रे सूर्यस्य मंडलानि भूयांसतः समुद्रोपमयोपमितो निषधः, अत्र धर्मसागर इति प्रकरणकर्तुर्नामापि सूचितं बोध्यमिति गाथार्थः ॥६२॥

इतिश्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्म्मसागरगणिविरचिते स्वोपज्ञकुपक्षकौशिकसहस्रकिरणे श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि प्रकरणे पाशचंद्रमतनिराकरणनामैकादशो विश्रामः समाप्तः । समाप्ता च प्रवचनपरीक्षा

मंगलं लेखकानां च, पाठकानां च मंगलम् । मंगलं सर्व्वजन्तूनां, भूमिभूपतिमंगलम् ॥१॥ अनर्थभावान्मतिविभ्रमेण, यदर्थहीन लिखितं मयाऽत्र । तत्सर्व्वमार्यैः परिशोधनीयं, कोपो न कुर्यात् खलु लेखकस्य ॥१॥ परमजैनशासनप्रदीपकश्रीमत्तपागणकुलप्रदीपकश्रीसरस्वतीकंठाभरणश्रीविद्वज्जनरंजनपरमधर्म्मवृक्षसहकारवादिमानमर्द्दनश्रीजैनशासनउद्योतकारकसकलवाचकशिरोमणिमहोपाध्यायश्रीश्रीश्रीश्रीश्रीश्रीश्रीनेमिसागरलिखापितं, सौम्यद्रहीचातुर्मासस्थिते सति क्षीरपुरे लिखितं, संवत् १६७२ वर्षे कार्त्तिकवदि ७ सोमे लिखितं नाथाकेन, द्रव्यार्थं पुस्तकं लिखितं, परमचातुरीपित्रा गणेशश्रीभाग्यसागरेण, महतापि आदरेण लिखापितं । कस्मिन् कस्मिन् दिवसे लिखितं, पत्रसामान्योऽयं श्रीः ।

ग्रंथमलीलिखदुच्चैः श्रेयोऽर्थं चारु प्रवचनपरीक्षाम् । अवजीश्रेष्ठिवधूः कृतपुण्या नवरंगदेनाम्नी ॥१॥

श्रीगुरुभ्यो नमः ॥

## ॥ प्रवचनपरीक्षाया बीजकं लिख्यते ॥

६ पणमिअ इत्यादिगाथाषट्केन देवगुरुनमस्कारलक्षणं मंगलाचरणं, एतद्वृत्तौ च प्रसंगतो वक्ष्यमाणकुपाक्षिकाणां सामान्यतः स्वरूपेणैतेषां तीर्थबाह्यतापरिज्ञापनम्।

७ 'वीरजिण'त्ति गाथया कुपाक्षिका अभिधेयं, तदुत्पत्तिनिदानादिकं च।

८ 'खवण'त्ति गाथया दशानामप्युत्पत्तिक्रमेण नामानि।

९ 'पढमिल्लुआण'त्ति गाथया कुपाक्षिकाणां तीर्थात्पृथग्भवनं कः कुतो निर्गतः १।

१० 'तित्थं चाउ'त्ति गाथया तीर्थलक्षणम्।

१२ तित्थयरो इत्यादिगाथाद्विकेन तीर्थकरस्वरूपम्।

१३ 'सुच'त्ति गाथया श्रुत्वाकेवली धर्म्मं कथयति नाश्रुत्वा- केवल्यपि, ततस्तीर्थकृदपि श्रवणपरंपरयैव धर्म्मं कथयति इति व्यवस्थापनम्।

१५ 'गब्भे'त्यादि गाथाद्विकेन श्रुत्वा धर्म्मकथनेऽन्वयव्यतिरेकाभ्यां दृष्टांतदर्शनम्।

१६ 'सिद्धंतावि'त्ति गाथया सिद्धांताभ्युपगमेऽवश्यं परंपराऽभ्युपगम्यैव।

१७ एवंविहत्ति गाथया तीर्थकृदपि क्षायिकभावे प्रवर्त्तमानस्तीर्थव्यवस्थापको, नापरोऽपीति।

१८ 'तित्थं खलु'त्ति गाथया तीर्थपूजनेन न किमप्यपूजितमित्यभिप्रायेण तीर्थपूजाप्रवृत्तिस्वरूपम्।

२४ तं चिअ इत्यादिगाथाषट्केन तीर्थकृत्प्रवर्त्तितमपि तीर्थं

कस्मायत्तं कथं च प्रवृत्तिरस्य को वा तत्र दृष्टान्तः?।

२९ 'बहुआयरिअ'इत्यादिगाथापंचकेन कुलानां शाखानां न बाहुल्येऽप्यविवादनिदानं संभोगादिनिदानं च।

३४ 'मंजरिदुवाले'त्यादिगाथापंचकेन कल्पद्रुमोपमयोत्पत्तिः स्थितिश्च तीर्थस्य, तत्र दृष्टांतश्च।

३५ 'एवं ज'मितिगाथया अनाद्यनंतजगत्स्थित्या तीर्थस्य किं कारणमिति विचारः।

३६ जम्हा इति गाथया तीर्थस्य चिह्नं।

३७ 'जं पुण' इति गाथया तीर्थलक्षणशून्याः कुपाक्षिकसमुदायास्तीर्थं न भवंतीत्यर्थे सिद्धे दिगंबरस्य तद्वैलक्षण्ये युक्तिमाह।

३८ 'ग ग' इतिगाथया दिगंबरव्यतिरिक्तानां नवानां वृद्धौ निमित्तमाह।

३९ 'ते पुण'त्ति गाथया नवापि कुपक्षिकास्तपागणाद्विभ्यतस्तीर्थं तपागण एवेति निगमनम्।

४० एवमिति गाथया कुपाक्षिकाणां दुष्टाध्यवसाये हेतुमाह।

४१ तेणंति गाथया प्रतिसमयं कुपाक्षिकाणां कीदृशः कर्म्मबन्धः?।

४२ णणु तु इति गाथया कुपाक्षिकोच्छेदकाभिप्रायवतस्तीर्थस्याप्यशुभध्यानं कथं नेति पूर्वपक्षाशंकोद्भावनम्।

४३ नेवं वोत्तुमिति गाथया तीर्थकुपाक्षिकयोरन्योऽन्यसमुच्छेदाभिप्रायवतोरपि तीर्थस्याध्यवसायः शुभोऽशुभश्च कुपाक्षिकस्येति।

४४ किं विज्जा इति गाथया दृष्टान्तः।

४५ एवमिति गाथया उपसंहारः,इत्यष्टत्रिंशता गाथाभिः कुपाक्षिकास्तीर्थबाह्या इति परिज्ञापनाय तीर्थस्वरूपं निरूपितं।

४८ इदमाहेत्यादि गाथात्रिकेण वक्ष्यमाणतीर्थस्वरूपस्योक्ततीर्थस्वरूपेण सह पुनरुक्त्याशंकानिरासः।

४९ पायं कुवक्कुत्तिगाथया कुपाक्षिकालापस्य साधारणस्वरूपं, तत्स्वरूपं दूषयितुं भवतां पुस्तकं सिद्धांत उत परंपरा सिद्धांत इति कुपाक्षिकान् प्रति विकल्पद्वयोद्भावनम्।
५१ पुत्थयेत्यादिगाथाद्विकेन पुस्तकसिद्धांते वज्रदृष्टान्तः।
५३ 'धेणू वावि'त्ति गाथया पाठरूप एकोऽपि सिद्धांतो धेनुदृष्टान्तेन भविष्यतां तीर्थाभासस्य च क्रमेण शुभमशुभं च फलं विधत्ते।
५४ धेणू सुत्तमितिगाथया दृष्टांतदार्ष्टांतिकयोजना।
५५ एवमितिगाथया प्रथमविकल्पदूषणोपसंहारः।
५६ तेणं परंपरत्तिगाथया कुपाक्षिकानिष्टस्य परंपरागमस्य समर्थनं च।
५७ छिन्ने जाविअत्तिगाथया तीर्थाभासस्य मूलं न ऋषभादयः, किन्तु तदादिकर्त्तारः सहस्रमल्लादयः।
५८ तेसुविचिगाथया राकादिनवकस्य प्रासंगिकभणनम्।
५९ सोहम्मत्तिगाथया राकादयः सुधर्म्मापत्यानि न स्युः।
६१ पंचपरमेट्ठि इत्यादिगाथार्धकेन पुस्तकसिद्धांतवादिनां यन्न संभवति तदाह।
६२ ववहारिअसत्तिगाथया परंपराशून्यपुस्तकसिद्धांतेन साध्वाद्याचारप्रवृत्तिर्न भवत्येव।
६३ अत्तागमेत्तिगाथया आत्मागमादीनां स्वरूपम्।
६५ सूरिपरंपरेत्यादिगाथाद्विकेन आत्मागमादीनां मध्ये भवतां किं नामागम इति प्रश्ने कुपाक्षिकोऽव्यक्तमेव सिद्धांतं ब्रूत इति विचारः।
६६ जइ आगमोत्तिगाथया कुपाक्षिकाणां सिद्धांतवचनकृत्तीर्थकरादयोऽप्यव्यक्ता एव।
६८ उसभाइ इत्यादिगाथाद्विकेन ऋषभादयोऽपि तन्मते कीदृशा इत्यादि।
७६ सव्वेहिं सद्देहिं इत्यादिगाथाऽष्टकेन कुपाक्षिकमार्गप्ररू-

पक्षाः कथं क्षमादिशब्दवाच्याः कथं वा तीर्थामिम-
तेभ्यो भिन्ना इति विचारः।

७७ सिद्धाविअत्तिगाथया सिद्धादयोऽपि तेषां भिन्ना एवेति
विचारः।

८१ भिन्नभिन्न इत्यादिगाथाषट्केन कुपाक्षिकाणां सिद्धांतो
भिन्नभिन्न एव, तत्र युक्तिश्च।

८७ णणु तेसिमित्यादिगाथाचतुष्केण तेषामाचार्यादयो भिन्नाः
प्रत्यक्षाः, परं कथमर्हत्सिद्धा अपीति पूर्वपक्षरचना।

८८ तेसुविति गाथया लुंपकनराणां कुश्रद्धानरूपश्चक्षूरो-
गोऽसाध्यः।

८९ लुंपकेति गाथया लुंपकस्य तथा रोगो द्विविधः-साध्यो-
ऽसाध्यश्च।

९४ समुसरणे इत्यादिगाथापंचकेन साध्यस्य लुंपकचक्षूरो-
गस्यांजनम्।

९५ तेसिमितिगाथयाऽञ्जनक्षेपे शलाका।

९६ एएणत्तिगाथया उक्तांजनप्रक्षेपेऽपि रोगसद्भावेऽपर-
प्रकारोऽसाध्य एव।

९७ एवं सुत्तित्तिगाथया तीर्थस्य तीर्थाभासस्य च विचारा-
भ्यासः कर्त्तव्य इत्युपसंहारः।

९८ एवं तित्थत्तिगाथया उक्ताभ्यासस्य फलमाह।

१०१ एवं कुपक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः।
इति १ तीर्थव्यवस्थापनाविश्रामबीजकम्



अथ दिगंबरमतनिराकारणविश्रामबीजकम्

२ अह पगयमित्यादिगाथाद्विकेन सर्वकुपाक्षिकसाधारण-
लक्षणम्।

३ तत्थ येतिगाथया दिगंबरमतमूलप्ररूपणाया उद्देशः।

४ तस्सुप्पत्तित्ति गाथया तस्योत्पत्तिकालो बहिर्निर्गमन-

निमित्तं च।

५ तम्मयेतिगाथया वस्त्राभावप्ररूपणायां तस्याकूतम्।

६ देहाहारेतिगाथया दिगम्बराकूतस्य तिरस्कारः,एतदुद्धृत्तौ च जिनानुपदिष्टत्वमित्यादिविकल्पनवकोद्भावनादिना पूर्व्वपक्षसिद्धांतरचनाविचारः।

७ सीसो गुरुत्ति गाथया तीर्थकृत्शिष्यस्तीर्थकरानुकारी भवतीति दिगम्बराकूताविष्करणं।

९ 'नेवं जुत्त'मित्यादिगाथाद्विकेन दिगंबराभिप्रायनिराकरणयुक्तिः।

१० अरिहंतेत्यादिगाथया गुरुशिष्ययोः सादृश्ये सादृश्याभावे च हेतुमाह.।

११ तेणमितिगाथया तीर्थकृतः साधोश्च स्वरूपम्।

१२ जइ जिणेतिगाथया तीर्थकृदनुकरणे छद्मस्थेन धर्म्मोपदेशादि परिहरणीयं स्यादिति।

१३ जइ जिणेतिगाथया महतामुपदेश एव श्रेयान्, न पुनरुपदेशबाह्यं तदनुकरणमपि।

१५ उवएसोत्ति इत्यादिगाथाद्विकेन जिनोपदेशः।

१६ विज्जुवएमत्तिगाथया उपदेशे दृष्टान्तः।

१७ एवमितिगाथया दार्ष्टांतिकयोजना।

१८ उवगरणेतिगाथया वस्त्राद्यभावे दोषमाह।

४२ इत्थीमुत्तिअभावे इत्यादिगाथानां चतुर्विंशत्या दिगंबराशयोद्भावनपुरस्सरं स्त्रीमुक्तिव्यवस्थापना।

५३ जं केवली न भुंजइ इत्यादिगाथैकादशकेन केवलिभुक्तिव्यवस्थापना।

५४ सिवभूइत्तिगाथया दिगंबरमतवृद्धिनिदानम्।

६३ तं मिच्छा जं पच्छा इत्यादिगाथानवकेन दिगंबरेभ्यः श्वेताम्बरा निर्गता उत श्वेताम्बरेभ्यो दिगंबरा इति संशये निर्णयकरणविचारः।

पक्षाः कथं क्रमादिशब्दवाच्याः कथं वा तीर्थाभिम-
तेभ्यो भिन्ना इति विचारः ।

७१ सिद्धाविअत्तिगाथया सिद्धादयोऽपि तेषां भिन्ना एवेति
विचारः ।

८१ भिन्नभिन्न इत्यादिगाथाषट्केन कुपाक्षिकाणां सिद्धांतो
भिन्नभिन्न एव, तत्र युक्तिश्च ।

८७ ननु तेसिमित्यादिगाथाचतुष्केण तेषामाचार्यादयो भिन्नाः
प्रत्यक्षाः, परं कथमर्हत्सिद्धा अपीति पूर्वपक्षरचना ।

८८ तेसुविणि गाथया ढुंढकादीनां कुश्रद्धानरूपस्य रो-
गोऽसाध्यः ।

८९ ढुंढकेति गाथया ढुंढकस्य तथा रोगो द्विविधः—साध्यो-
ऽसाध्यश्च ।

९४ मणुनरणे इत्यादिगाथापंचकेन साध्यस्य ढुंढकस्य रो-
गस्यांजनम् ।

९५ तेसिमितिगाथयाऽञ्जनक्षेपे शलाका ।

९६ एएणत्तिगाथया उक्तांजनप्रक्षेपेऽपि रोगसद्भावेऽपर-
प्रकारोऽसाध्य एव ।

९७ एवं सुत्तित्तिगाथया तीर्थस्य तीर्थाभासस्य च विचारा-
भ्यासः कर्त्तव्य इत्युपसंहारः ।

९८ एवं तित्थत्तिगाथया उक्ताभ्यासस्य फलमाह ।

१०१ एवं कुपक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

इति १ तीर्थव्यवस्थापनाविश्रामबीजकम्



अथ दिगंबरमतनिराकारणविश्रामबीजकम्

२ अह पगयमित्यादिगाथाद्विकेन सर्वकुपाक्षिकसाधारण-
लक्षणम् ।

३ तत्थ येतिगाथया दिगंबरमतमूलप्ररूपणाया उद्देशः ।

४ तस्सुप्पत्तित्ति गाथया तस्योत्पत्तिकालो बहिर्निर्गमेन-

निमित्तं च।

५ तम्मयेतिगाथया वस्त्राभावप्ररूपणायां तस्याकृत्वम्।

६ देहाहारेतिगाथया दिगम्बराकृतस्य तिरस्कारः,एतद्वृत्तौ च जिनानुपदिष्टत्वमित्यादिविकल्पनतर्कोद्भावनादिना पूर्वपक्षसिद्धांतरचनाविचारः।

७ सीसो गुरुत्ति गाथया तीर्थकृत्शिष्यस्तीर्थकरानुकारी भवतीति दिगम्बराकूताविष्करणं।

९ 'नेवं जुत्त'मित्यादिगाथाद्विकेन दिगंबराभिप्रायनिराकरणयुक्तिः।

१० अरिहंतेत्यादिगाथया गुरुशिष्ययोः सादृश्ये सादृश्याभावे च हेतुमाह।

११ तेणमितिगाथया तीर्थकृतः साधोश्च स्वरूपम्।

१२ जइ जिणेतिगाथया तीर्थकृदनुकरणे छद्मस्थेन धर्मोपदेशादि परिहरणीयं स्यादिति।

१३ जइ जिणेतिगाथया महतामुपदेश एव श्रेयान्, न पुनरुपदेशवाह्यं तदनुकरणमपि।

१५ उवएसोत्ति इत्यादिगाथाद्विकेन जिनोपदेशः।

१६ विज्जुनएमत्तिगाथया उपदेशे दृष्टान्तः।

१७ एवमितिगाथया दार्ष्टांतिकयोजना।

१८ उवगरणेतिगाथया वस्त्राद्यभावे दोषमाह।

४२ इत्थीमुत्तिअभावे इत्यादिगाथानां चतुर्विंशत्या दिगंबराशयोद्भावनपुरस्सरं स्त्रीमुक्तिव्यवस्थापना।

५३ जं केवली न भुंजइ इत्यादिगाथैकादशकेन केवलिभुक्तिव्यवस्थापना।

५४ सिवभूइत्तिगाथया दिगंबरमतवृद्धिनिदानम्।

६३ तं मिच्छा जं पच्छा इत्यादिगाथानवकेन दिगंबरेभ्यः श्वेताम्बरा निर्गता उत श्वेताम्बरेभ्यो दिगंबरा इति संशये निर्णयकरणविचारः।

६४ अहवा सव्वपसिद्धमिति गाथया प्रकारांतरेण दिगंबरस्य तीर्थबाह्यतापरिज्ञाने युक्तिः ।

७० उज्जिंतगिरिइत्यादिगाथाषट्केन दिगंबरेण प्रतिमा नग्ना कारिता तन्निदानं दृष्टान्तश्च ।

७२ एवं बोहिय इत्यादिगाथाद्विकेनान्यतीर्थिकृत्तीर्थाद् दूरवर्त्तित्वेनोपेक्षार्होऽपि यदत्र भणितस्तन्निदानम् ।

७८ एवं कुमइहरेत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

इति २ दिगंबरमतनिराकरणविश्रामबीजकम्



अथ पौर्णिमीयकमतविश्रामबीजकं लिख्यते

१ अह चंदप्पहेति गाथात्रिकेण राकामतोत्पत्तिः प्रवचनबाह्यभवननिदानं मताकर्षकाभिधानं च ।

९ जिणपडिमाण पइट्ठा इत्यादिगाथाषट्केन श्रावकप्रतिष्ठास्थापनाय चन्द्रप्रभाचार्योद्भाविताऽनुमानरचनापुरस्सरं तन्निराकरणप्रकारः ।

१४ दव्वत्थयहेतु इत्यादिगाथापंचकेन साधूनां द्रव्यस्तवोऽनुचित इति भ्रांत्यां परोद्भावितेष्टापत्त्या दूषणमाह ।

१६ दव्वत्थउत्ति काउमित्यादिगाथाद्विकेन प्रतिष्ठाकृत्यं द्रव्यस्तवः, स च साधूनां सर्व्वथा नोचित इति भ्रांतस्याशंकामुद्भाव्येष्टापत्त्यैव दूषयति ।

१८ किंचेति गाथाद्विकेन तीर्थकृतः साधूनां च कथंचिद्द्रव्यस्तवोऽप्युचित एव ।

१९ अण्णुण्णमितिगाथया द्रव्यभावस्तवयोरन्योऽन्यं सापेक्षता, तथाऽपि साधूनां भावस्तवः श्रावकस्य द्रव्यः इति व्यवहारे हेतुमाह ।

२२ जह भावयाणेत्यादिगाथात्रिकेण श्रावकाणां द्रव्यस्तव इति युक्तिपूर्व्वकं दृष्टान्तमाह ।

२५ कंचणमणिमो इत्यादिगाथाद्विकेन श्रावकधर्म्मे द्रव्य-

स्तवो गरीयान् स्वरूपकांतोऽपि भावस्तवोऽल्पीयान् ।
२५ जं सावयेत्यादिगाथया प्रागुक्तसमर्थनं ।
२६ तेणं सह इतिगाथया सामायिकाद्यपेक्षया चैत्यादि-
कृत्यं महदिति ।
२७ भावथया इतिगाथया साधुमार्गे द्रव्यस्तवभावस्तवयोः
स्वरूपं दृष्टान्तश्च ।
२९ सचित्तेत्यादिगाथाद्विकेन श्रावकधर्म्मे कथं द्रव्यस्तवो
महान् कथं वा साधुधर्म्मेऽल्पः इति शंकानिराकरणम्।
३२ णणु निरवज्जो इत्यादिगाथाद्विकेन निरवद्यवासेन साधूनां
द्रव्यस्तवः कथं नोचित इति पराभिप्रायनिराकरणम् ।
५३ इय चंदप्पहेत्यादिगाथानां द्वाविंशत्या चन्द्रप्रभाचार्यो-
क्तमुपसंहृत्य तिलकाचार्यकृतप्रतिष्ठाकल्पाभासनिराक-
रणपूर्व्वकं साधुप्रतिष्ठान्यस्थापना ।
५८ एवं आगमेत्यादिगाथाद्विकेन श्रावकप्रतिष्ठाप्ररूपणा-
नंतरं पूर्णिमापाक्षिकप्ररूपणे किं निमित्तं कथं वा
संघोक्तिरासीदिति ।
७८ पक्खस्स मज्झे इत्यादित्रयोविंशतिगाथाभिः सिद्धांत-
सम्मत्या चतुर्दशीपाक्षिकव्यवस्थापना ।
८५ जोइसकरंडेत्यादिगाथासप्तकेन ज्योतिष्करंडादिवचोजा-
ताया भ्रांतेरतिप्रसंगेन निरासः ।
८६ चउदसी पक्खी इतिगाथया चतुर्दशीपाक्षिकभीतेन
महानिशीथसूत्रत्यागात् उपधानमपि त्यक्तमिति विचारः।
८९ णणु उवहाणा इत्यादिगाथात्रिकेण परप्रश्नविकल्पद्वारा
सिद्धांतसम्मत्या उपधानव्यवस्थापना ।
९३ अह महनिसीहेत्यादिगाथाचतुष्केण हरिभद्रसूरिवचसा
महानिशीथस्याप्रामाण्यं वदतो हरिभद्रसूरिवचसैव प्रामा-
ण्यव्यवस्थापनेन तिरस्कारप्रकारः ।
९४ निच्चं हरीतिगाथया हरिभद्रसूरिवचःपुरस्कारेण महा-

निशीथत्यजने आश्चर्यम् ।
९५ जइ खलुत्तिगाथया गणधरवचने कुपाक्षिकाणां नास्थेति ।
९६ हरिभदेणवित्तिगाथया यदि गणधरवचस्यास्था तर्हि कुपाक्षिकेण यदु त्यक्तव्यं तदुल्लेखमाह ।
९८ हरिभद्दसवीत्यादिगाथाद्विकेन हितोपदेशः ।
९९ हरिभद्दंपीतिगाथया हरिभद्रवचसः प्रामाण्ये महानिशीथमप्रमाणमिति वक्तुमशक्यम् ।
१०२ नणु उवहाणा इत्यादिगाथात्रिकेण पूर्व्वपक्षाशंका ।
१०५ जमिणमित्यादिगाथात्रिकेणेष्टापत्त्याऽतिप्रसंगाभावः ।
१०८ उवहाणेत्यादिगाथात्रिकेण उपधानवहनमंतरेणापि श्रावककुले बालकादीनामपि कथं नमस्काराध्ययनं युक्तमितिपराशंकानिराकरणम् ।
१०८ जं आवस्सयेतिगाथया आचारांगादावतिप्रसंगनिराकरणम् ।
११२ सुत्तोवयारेत्यादिगाथात्रिकेणोपधानवहनादिनियमः श्रुतव्यवहारकालापेक्षो,न पुनरागमव्यवहारकालापेक्षोऽपि ।
११३ नणु जहेतिगाथया पूर्व्वपक्षी महानिशीथाप्रामाण्ये हेतुमाह ।
११४ जइ एवमितिगाथयाऽतिप्रसंगेन निवारणम् ।
११५ तम्हा इतिगाथया तात्पर्यम् ।
११६ आयारो उवेत्यादिगाथया उपधानं महानिशीथ एवास्ति नान्यत्रेति पराकूतनिराकरणम् ।
११७ जोगे आसाढेत्यादिगाथया योगे उपधाने उदाहरणानि ।
११८ सुअक्खंधे इतिगाथया सामायिकाध्ययनैकदेशो नमस्कारः श्रुतस्कंधो न भवति महानिशीथे च तथोक्तोऽतस्तत्सूत्रं नास्माकं सम्मतमिति पराशंका ।
११९ इअ चे इतिगाथया तन्निराकरणयुक्तिः ।
१२० सव्वमंतरेतिगाथया नमस्कारस्य महाश्रुतस्कंधत्वस्थापना

१२१ पचनाहे इतिगाथया दृष्टांतः ।

१२२ एवमितिगाथया दार्ष्टांतिकयोजना ।

१२३ सव्वस्सवितिगाथया श्रुतस्योपधानं विना श्रुतस्याभणनं निर्दोषं कथं नराणां सदोषमिति पराशंका ।

१२६ उद्देसेत्यादिगाथाद्विकेन कस्य श्रुतस्योपधानं कस्य वा नेति कस्मै केन विधिना दातव्यमिति विचारः ।

१२७ जं पुणेत्यादिगाथया कदाचित् श्रावकेणापि दानेऽनुज्ञाया अभावे नमस्कारादि मगुणादयः पाठ्यंते तत्र गतिमाह ।

१२८ वहतिहेतिगाथया कथंचिदुपधानवहनाभावेऽपि शुद्धिप्रकारमाह ।

१२९ सामन्नेणंतिगाथया नमस्कारपाठने सामान्यतोऽयोग्यस्य लक्षणम् ।

१२९ जुग्गाजुग्गत्तिगाथया नमस्कारदाने पात्रापात्रविचारणा कर्त्तव्या ।

१३० सामाण्णेणंतिगाथया सामान्यतो योग्यस्य लक्षणं ।

१३१ जुग्गाहिओत्तिगाथया नमस्कारश्रावणेऽप्ययोग्यस्य लक्षणम् ।

१३२ जंणमित्यादिगाथाद्विकेनायोग्यस्य नमस्कारश्रावणे प्रतिसमयमनंतसंसारवृद्धिः शृण्वतोऽपीति तत्र युक्तिश्च ।

१३४ परमेसरुत्ति गाथया दृष्टांतः ।

१३५ पुच्छिअंतोत्ति गाथया नमस्कारश्रावणेऽपि दुष्पर्णाविष्करणे अपायमाह ।

१३८ एवं छन हलवग्गोत्तिगाथात्रिकेण कुपाक्षिकस्य नमस्कारश्रावणे महाकर्म्मबंध इति दर्शनम् ।

१३९ इअ पुण्णिमेतिगाथया राकामते मूलसुत्रत्रिकं दर्शितमित्युपसंहारः ।

१४१ सेसमितिगाथाद्विकेनातिदेशः खरतरेण सह शेपोत्सूत्रेषु ।

इति २ पौर्णिमीयकमतनिराकरणविश्रामबीजकम्



अथ खरतरमतविश्रामबीजकं लिख्यते

१ अह खरयरत्ति प्रथमगाथया सामान्यतोऽभिधेयम् ।

२ कुच्चयरत्तिगाथया जिनवल्लभचरित्रं, एतद्वृत्तौ च प्रसंगतो गणधरसार्द्धशतकवृत्तिगतमेव लिखितम् ।

४ सो चइउमितिगाथाद्विकेनोक्तव्यतिकरो जिनवल्लभः किं कृत्वा किं कृतवानित्याह ।

५ तेसिं पुरओत्तिगाथया जिनवल्लभेन षष्ठं कल्याणकं प्ररूपितम् ।

६ एवं वुग्गाहिंतोत्तिगाथया कतिवर्षाणि मुग्धजनान् व्युद्ग्राह्य निजपदशिष्यरहित एव परलोकं प्राप्तः ।

७ इअ जिणेतिगाथया भाविखरतरमतबीजभूतो विधिसंघनाम्ना कतिचिज्जनसमुदायो जिनवल्लभाज्जात इति दर्शितम्

८ कुच्चयरा इतिगाथया जिनदत्तात् विधिसंघस्य एव खरतरनाम्ना कुमतं प्रवर्त्तितम् ।

९ निस्सामिअत्तिगाथया विधिसंघस्य स्वामी जिनदत्तः कथं जात इति व्यतिकरः, एतद्वृत्तौ च जिनवल्लभस्येवास्यापि संबंधो गणधरसार्द्धशतकबृहद्वृत्तिगत एव लिखितः, एतद्व्यतिकरविचारणाऽभिनवनाटककल्पा स्वत एव विचारणीया ।

१० गणहरसड्ढत्तिगाथया वर्ण्णकवर्जं जिनदत्तस्य स्वरूपं सम्यगिति ज्ञापितम् ।

१७ वण्णयवयणमित्यादिगाथासप्तकेन कुपाक्षिकैर्निजनिजगुरवो वर्णितास्ते कथं श्रद्धेयाः ? को वा तत्र दृष्टान्तः ?

१९ तेणेव इतिगाथाद्विकेन जिनवल्लभस्थापितो विधिसंघो जिनदत्तेन कथं गृहीत इति विचारः ।

२२ जिणवल्लभेत्यादिगाथात्रिकेण जिनवल्लभजिनदत्तयोरन्योऽन्यं कीदृशः संबंध ? कथं वा अनयोराचार्यपदावाप्तिः ।

२४ 'मिन्नदिसाबंधेणं'ति मिन्नमिन्नदिग्बंधेन जिनवल्लभ-जिनदत्तयोरन्योऽन्यं विसंभोगिकत्वं तत्र सम्मतिश्च।
२६ जिणदत्तदिसेत्यादिगाथाद्विकेन श्रीअभयदेवसूरिजिनवल्लभजिनदत्तानां परस्परं गुरुशिष्यसंबंधाभावादिनिर्णयः
२९ निरवज्जमयस्सावीत्यादिगाथात्रिकेण जिनवल्लभजिनदत्तनामानावनुत्तरसौभाग्यभाजावित्युपहासे हेतुमाह।
३० सप्पाकरिसणत्तिगाथया जिनवल्लभेन जिनदत्तेन च निजनिजचेष्टयैव भाव्यात्मस्वरूपं ज्ञापितम्।
३१ इच्चेवं जिणेत्यादिगाथया उक्तव्यतिकरस्य ग्रन्थसम्मतिः
३२ जिणदत्ता इतिगाथया खरतरमते चतुर्वर्ण्णः संघो जिनदत्तादेव जात इति दर्शितम्।
३९ अह चामुंडिअ इत्यादिगाथासप्तकेन खरतरादिनाम्नामुत्पत्तिनिदानकालादिविचारः,एतद्वृत्तौ च बहूपयोगित्वात्प्रसंगतः प्रभावकचरित्रगतं श्रीअभयदेवसूरिचरित्रम्।
४५ जं पुण जिणेसरेणेत्यादिगाथापद्केन श्रीजिनेश्वरसूरेः खरतरविरुद्धं खरतरा वदंति तत्सत्यमुतासत्यमिति विचारः
४८ जेणं जिणदत्तेति गाथात्रिकेण प्रायः खरतरमते प्राचीनपाठपरावृत्तिकरणमर्थान्यथाकरणमसम्मत्यादिविधानप्रभृतिकं स्वमतानुसारेण क्रियमाणं दृश्यते तद्विचारः।
५० किंच विवाउ इत्यादिगाथाद्विकेन खरतरनाम्ना विरुद्धमेव न संभवतीति विचारः।
५५ जइ जयवाए इत्यादिगाथापंचकेन श्रीजिनेश्वरसूरेः खरतरविरुदं न जातमिति निर्णयः।
५८ एगारससयेत्यादिगाथात्रिकेण जिनवल्लभवचनं खरतराभिप्रायेण गणधरसार्द्धशतकविरुद्धम्।
५९ एवं जिणवल्लहउत्तिगाथया खरतरपट्टावली विचार्यमाणा अभिनवनाटककल्पा स्थूलमतीनामपि।
६० पायं जिणदत्तेत्यादिगाथया प्रायः खरतरमतस्यालीक-

कल्पनाखभावदर्शनम् ।

६६ ननु जिणवल्लहेत्यादिगाथाषट्केन पूर्व्वाचार्यैः प्रशंसितोऽपि जिनवल्लभः कथमिह दूषित इति पराशंकानिराकरणम् ।

६७ खरयरेत्यादिगाथया खरतराभिमतस्य जिनवल्लभस्य संतानं जिनदत्तो न भवति, किन्तु रौद्रपल्लीय एवेति विचारः ।

६९ जिणवइइत्यादिगाथाद्विकेन खरतरमतमर्यादाकारको जिनपतिसूरिरेव ।

७० तीए पमाणेत्यादिगाथया खरतरमतस्य प्रमाणतया स्वीकारे जैनप्रवचनमप्रमाणीकर्त्तव्यं भवेत् ।

७२ ननु वद्धमाण इत्यादिगाथाद्विकेन प्रद्योतनसूरिवर्धमानाचार्ययोरिव श्रीअभयदेवसूरिजिनवल्लभयोरपि अभूतोऽपि संभवन्निव संबंधोऽन्यथाकल्पनेन कलङ्कितः ।

७३ ननु बहु खायमित्यादिगाथया संबंधादिना सर्व्वथाऽलीकमपि बहु ख्यातं कथं जातमित्यादिविचारः ।

७४ सम्मद्दिट्ठीत्यादिगाथया सम्यग्दृशामप्यनाभोगात् परानुवादो भवत्येव ।

७५ बहुकालेतिगाथया सत्यासत्यानुवादे निदानमाह ।

८५ कहमण्णहेत्यादिगाथादशकेन उपदेशसप्ततिकादिकारकाणामनाभोगस्य स्पष्टीकरणम् ।

८८ अह पायमित्यादिगाथात्रिकेण नवांगीवृत्तिकारकोऽभयदेवसूरिः खरतर इति खरतरमुखानुवादोऽलीक इति पृथक् ज्ञापनम् ।

८९ एएण कोइ इत्यादिगाथाद्विकेन नाममात्रेण तीर्थांतर्वर्त्ती तत्पक्षपाती कदाचिद् वाचालोऽन्यथा जल्पन् तिरस्कृतो भवति ।

९१ जं पुणमितिगाथया श्रीअभयदेवसूरिजिनवल्लभजिन-

दत्तानां परस्परं प्ररूपणाभेदोऽपि, स चानंतरं वक्ष्यमाणो सूत्रविचारणातोऽवसातव्यः ।

९३ अह उस्सुत्तमित्यादिगाथाद्विकेन उत्सूत्रोद्देशः ।

९६ गब्भावहारेत्यादिगाथात्रिकेण क्रियाविषयकाधिकोत्सूत्रोद्देशः ।

१०३ भण्णइ भणिअमित्यादिगाथासप्तकेन गर्भापहारः कल्याणकं न भवति ।

१०८ रयणिपोसेत्यादिगाथापंचकेन रात्रिपौषधिकानां रात्रिचरमयामे सामायिककरणमधिकम् ।

११० सामाइअ इत्यादिगाथाद्विकेन श्रावकाणां सामायिकादेः साधोरिव निरुचारोऽधिकः ।

१११ अण्णहच्चिगाथयाऽतिप्रसंगेन निरासः ।

११२ पोसहविहिंमित्तिगाथया एकवारोचारे जिनवल्लभवचनसम्मतिः ।

११३ साहूणमितिगाथया श्रावकवत्साधूनामप्युपधानवहनमधिकम् ।

११४ उस्सग्गेणमितिगाथया साधूनामुत्सर्गेण कसेल्लकजलग्रहणमधिकं, तद्वृत्तौ च तन्निराकरणसम्मतिः ।

११५ तसजयणेतिगाथया कसेल्लकजलग्राहिणः साधोस्त्रसानुकंपा न स्यादिति ।

११७ सावयकुलेत्यादिगाथाद्विकेन पर्युषितद्विदलग्रहणमधिकं, तद्वृत्तौ च तन्निषेधसम्मतिः ।

१२० नणु पज्जुसिअ इत्यादिगाथात्रिकेण पर्युषितद्विदलग्रहणे पूर्व्वपक्षाशंका तन्निराकरणं च ।

१२४ पज्जुसिअ इत्यादिगाथाचतुष्केण द्विदलौदनयोः स्वरूपभणनेन ग्राह्याग्राह्यविचारणा ।

१२६ जं जं बहुलेत्यादिगाथाद्विकेन बहुलप्रवृत्तेः प्रवचनमर्यादा तत्रोदाहरणं च ।

१३७ जइविअ इत्यादिगाथैकादशकेन कदाचिदविनष्टमपि पर्युषितद्विदलं न ग्राह्यं, तत्रानेके दृष्टान्ताः ।

१३९ पज्जूसिअसद्दत्थो इत्यादिगाथाद्विकेन पर्युषितशब्दस्य कोऽर्थ इति विचारणाप्रकारः ।

१४० जंमि उत्तिगाथया द्विदलाद्विदलयोर्लक्षणम् ।

१४२ एवं विदलेत्यादिगाथाद्विकेन द्विदललक्षणरहितमपि ...दिकं द्विदलमिति भणनमधिकं तन्निरासश्च ...नेन ।

...चीए इत्यादिगाथाद्विकेन संदेहदोलावली-प्रवचनसारोद्धारसम्मत्या संगरिकादिद्विदलभणनं ...चिह्नम् ।

...गाथया प्रवचनसारोद्धारवृत्तेः समर्थनम् ।

...तिगाथया खरतराभिप्रायस्य दूषणम् ।

संगरिचिगाथया इष्टापत्त्या दूषणदानम् ।

१४८ जं जं विगइत्तिगाथया यावन्निर्विकृतिकं तावत् कृतप्रत्याख्यानवतां कल्प्यमेवेति नियमाभावमाह ।

१४९ ता कहमित्यादिगाथया खरतरेणाणंदसूरिसम्मतिर्दर्शिता साऽपि दूषिता ।

१५० एवमितिगाथया यत् षड्विधं क्रियाविषयमधिकमुत्सूत्रं दर्शितं तद् बहु ख्यातं,एवमन्यदपि तन्मते भूयोऽस्तीति ।

इत्यधिकोत्सूत्रबीजकम्



अथैवमूनोत्सूत्रबीजकं लिख्यते

१५३ अह ऊणमित्यादिगाथात्रिकेण ऊनोत्सूत्रोद्देशः ।

१५४ इत्थीणमितिगाथया स्त्रीजनपूजानिषेधनिदानम् ।

१६१ एगावराहेतिगाथासप्तकेन एकस्यापराधे तज्जातीयमात्रस्य प्रायश्चित्तदाने जिनदत्तस्य महामूर्खत्वं ज्ञापितम् ।

१६३ परमण्णामित्यादिगाथाद्विकेन लौकिकदृष्टांतेन तथाऽभि-

ग्रायनिराकरणम् ।

१६६ जिनदत्तो इत्यादिगाथात्रिकेण जिनदत्तादप्युपदेशमधिकृत्य दिगंबरो दक्षस्तत्र हेतुश्च ।

१६७ पुव्विं विराहिओ इत्यादिगाथया स्त्रीजिनपूजानिषेधे मूलहेतुमाह ।

१६८ नणु तित्थयरेणत्तिगाथया तीर्थकरकल्पेन जिनदत्तेन प्रकाशितं कथं दूषयितुं शक्यमिति पराशंका ।

१६९ एवं चे इत्यादिगाथया सूरिप्रवर्त्तने उत्सूत्राभावे उत्सूत्रं खपुष्पकल्पं संपद्येतेति विचारः ।

१७० तम्हा इतिगाथया तीर्थकरसमानसूरिलक्षणमाह ।

१७१ सूरिकयोऽविचित्तिगाथया सूरिकृतं यद्यादृशं प्रमाणं तदाह ।

१७२ जिणपूआ इत्यादिगाथया जिनपूजानिषेधे वैपरीत्यमेवेत्याह ।

१७३ एएणमितिगाथया सूरिप्रवर्त्तने तात्पर्यमाह ।

१७४ इह सुत्तेत्तिगाथया अमुकग्रंथे स्त्रीणां जिनपूजा भणिता स्त्रीत्वादिरूपेण सूत्रसम्मतेः प्रयोजनं नास्ति, यतो मूर्खजनप्रत्यायनार्थमस्माकं सामाचारीति वदति ।

१७५ पागयेत्यादिगाथया स्त्रीजिनपूजानिषेधकतिरस्कारे वचनोल्लेखमाह ।

१७६ तित्थासम्मयेतिगाथया तीर्थस्यासम्मतं भाषमाणो नियमेनानंतसंसारीति ।

१७७ एएणमितिगाथया मग्गंतरेहिन्ति सूत्रवचसा ममापि मार्ग एवेति मतश्रितोऽपि तिरस्कृतः ।

१७८ अट्ठमिचउद्दसिइतिगाथया चतुष्पर्वीव्यतिरिक्ततिथिषु पौषधनिषेधो जिनदत्तस्य महामोहः ।

१७९ अट्ठमिपमुहेतिगाथया प्रागुक्तस्य प्रतीकारः तत्त्वार्थसम्मतिश्च ।

१८० तत्तत्थविचिइतिगाथया कुपाक्षिकभ्रान्तिजनकपदस्य

तात्पर्यं तत्त्वार्थवृत्तावुक्तम् ।

१८१ सिक्खा पुणेतिगाथया शेषतिथिषु पौषधाकरणे विरोधमाह ।

१८२ सिक्खावएसुत्तिगाथया प्रतिबंधाऽतिप्रसंगोद्भावनम् ।

१८३ न मुणइत्तिगाथया साक्षादतिप्रसंगाज्ञानमाह ।

१८५ पडिक्कमणमितिगाथाद्विकेन प्रतिक्रमणदृष्टांतेन पौषधनियमं प्ररूपयन् प्रायश्चित्तसंवराभ्यां तिरस्कृतः ।

१८९ अहवा सिक्खेत्यादिगाथाचतुष्केन चतुष्पर्व्यतिरिक्तास्वपि तिथिषु पौषधव्यवस्थापनम् ।

१९० किंच मुणि इतिगाथया दूषणांतरमाह ।

१९१ जं भोअणेत्यादिगाथया पौषधिकानां भोजननिषेधः ऊनमुत्सूत्रम् ।

१९३ चउद्दसट्ठइत्यादिगाथाद्विकेन पौषधिकानां भोजनव्यवस्थापनम् ।

१९५ सावयपडिमेत्यादिगाथाद्विकेन श्रावकप्रतिमाधर्मव्युच्छेदं वदन् तिरस्कृतः ।

१९७ समणाणं समणीहिन्ति गाथाद्विकेन साधुभिः सह साध्वी विहारो, नान्यथेति, एतद्वृत्तौ चानेकग्रंथसम्मतयश्च ।

२०२ अहुणा मासेत्यादिगाथापंचकेनाधुना मासकल्पो व्युच्छिन्न इति वदतस्तिरस्कारप्रकारः ।

२०३ गृहस्थानां प्रत्याख्याने पानकस्याकारव्यवस्थापनं तत्र सम्मतिश्च ।

इत्येवमूनोत्सूत्रबीजकम्



अथायथास्थानोत्सूत्रबीजकम्

२०४ अजहेत्तिगाथया अयथास्थानोत्सूत्रस्य लक्षणं लक्ष्यं च, अभिवर्धितवर्षे श्रावणेऽपि पर्युषणा ।

२०५ जण्णमितिगाथया सिद्धांतसम्मत्या भाद्रपद एवामि-

वर्द्धितेऽपि मासे पर्युषणा।

२०६ जइ चाउत्तिगाथया चातुर्मासकत्वपर्युषणाऽपि मासनियतेति।

२०७ मासाइअत्तिगाथया मासवृद्धौ प्रथमोऽवयवः प्रमाणमेवेति वदतो जिनदत्तस्यायथास्थानमुत्सूत्रं।

२०८ वुड्ढीपढमो इतिगाथया वृद्धौ प्रथमोऽवयवो नपुंसकोऽतो द्वितीय एव श्रेयानिति।

२१० एएणऽहिए इति गाथाद्विकेन परोपहास्यं तन्निराकरणं च।

२११ णणु चीएविंत्तिगाथया पराशंकोद्भावनम्।

२१२ जं रवीतिगाथया अभिवर्धितमासादौ यस्य प्रामाण्यं तदाह।

२१३ तेणं तिहिच्चिगाथया तिथिपाते पूर्वैव ग्राह्येति विचारः।

२१४ वुड्ढीइ पुणेत्तिगाथया वृद्धौ प्रथमा तिथिः पूर्णेत्यादि परवचनमश्राव्यम्।

२२२ जम्हा तीए इत्यादिगाथाष्टकेन तिथिमासादिवृद्धौ हानौ च प्रामाण्याप्रामाण्यनिर्णयो दृष्टान्ताश्च।

२२३ इरिअत्तिगाथया ईर्यां विना सामायिककरणमयुक्तम्।

२२४ चित्तविसोहीतिगाथया प्रथमेर्यायाः प्रयोजनं श्रीमहानिशीथोक्तम्।

२२५ अहावस्सयेतिगाथया भ्रांत्या ग्रन्थसम्मतिमादाय पूर्व्वपक्षी शंकते।

२२६ इअ चेइतिगाथया पूर्व्वपक्षाशंकाया निरासः, तद्वृत्तौ युक्तिपूर्वकग्रंथसम्मतयश्च।

२२७ तम्हा पढमेतिगाथया ईर्यायां तात्पर्यमाह।

२२८ जइवि सुपासे इतिगाथया पार्श्वसुपार्श्वयोः फणानां न्यूनाधिककरणेनारोपोऽयथास्थानम्।

२२९ एवं अजहट्ठाणमितिगाथया क्रियाविषयकोत्सूत्रोपसंहारः।

इत्ययथास्थानोत्सूत्रबीजकम्



अथोपदेशविषयकोत्सूत्रबीजकम्

२३० अह पुणेतिगाथया उपदेशविषयं द्वितीयमुत्सूत्रं प्रागुद्दिष्टं यत्तद् द्विप्रकारमितिविभागः ।

२३१ अहिअमितिगाथया उपदेशविषयं द्विविधमप्युत्सूत्रं क्रियोत्सूत्रादनंतगुणम् ।

२३३ अहवेत्यादिगाथाद्विकेन प्रकारांतरेण नामग्राहं द्वैविध्यमाह

२३४ लोइअत्तिगाथया लौकिकमिथ्यात्वादनंतगुणपापहेतुरुपदेशविषयं द्विविधमपि उत्सूत्रम् ।

२३५ जम्हा उ संकिलिट्ठो इतिगाथयाऽनंतगुणपापहेतुत्वे हेतुमाह ।

२३६ तेणंति गाथया प्रागुक्तस्वभावादेवान्यतीर्थिकस्तद्भवमोक्षगामी स्यान्न पुनरुत्सूत्रीति ।

२३९ एवं कुवक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

इति ४ खरतरमतनिराकरणविश्रामबीजकम्

अथांचलिकमतनिराकरणविश्रामबीजकं लिख्यते

५ अह अंचलिअमितिगाथापंचकेनांचलिकमतोत्पत्तिनिदानकालादिविचारः ।

६ तीए सूरिपयत्थमितिगाथयांचलिकमताकर्षकस्याचार्यपदवीव्यतिकरः ।

८ नियमयेत्यादिगाथाद्विकेन नरसिंहेन कालिकादेवी कथमाराधितेति विचारः ।

० उस्सुत्तमितिगाथया प्रथमोत्सूत्रस्वरूपं तत्र कुयुक्तिश्च ।

१२ णो पुत्तिअत्तिगाथात्रिकेणांचलिकाभिप्रायनिराकरणं ।

१३ धम्मोवगरणेतिगाथया धर्म्मोपकरणरहितः कृतसामायिकोऽपि व्यवहारनयबाह्यः ।

१४ उवगरणमितिगाथया आवश्यकक्रियायामनुयोगद्वारादिषु साध्वादीनां चतुर्णामपि रजोहरणादि क्रियासाधनं भणितम् ।

१६ तह पण्हाइतिगाथया उपकरणप्रतिषेधानंतरं कारणाभावे कार्यस्याप्यभाव इति कार्यभूतं प्रतिक्रमणं निषिद्धम् ।
१७ पज्जोसवणेतिगाथया शतपदीवचनेन स्तनिकस्य पर्युषणा चतुर्थ्यामेवाऽऽसीत् ।
१८ एगुणवण्णेतिगाथयाऽभिवर्द्धितेऽपि श्रावणभाद्रपदवृद्धौ स्तनिकमते पूर्व्वमेकाधिकेन पंचाशता दिनैः पर्युषणाऽऽसीत्, इदानीं तु अन्यथाऽपि ।
१९ चित्ताइअंमित्तिगाथया चैत्रादिवृद्धौ विंशत्या दिनैः पर्युषणा तन्मते ।
२० जं पुणेतिगाथया अर्धजरतीयन्यायेन संप्रतिप्रवृत्तिर्दूषिता
२१ जंणं चुण्णीतिगाथयाऽर्द्धजरतीयव्यक्तीकरणं, एतद्वृत्तौ शतपदीसम्मतयश्च ।
२५ तित्था चुअस्सतिगाथाचतुष्टयेन तीर्थात् भ्रष्टस्यागमः शरणं न भवति, तत्रागमानुसारेण शुद्धिरपि ।
२६ संपइत्तिगाथया सांप्रतीनतीर्थं चतुर्थ्याश्रितमशुद्धचारीति पराशंका ।
२७ आगमविरुद्धेतिगाथया आगमविरुद्धचारि तीर्थं न भवेदिति ।
२८ तित्थपडीतिगाथया तीर्थप्रतिपक्षोऽर्हदादीनामपि प्रतिपक्ष एवेति ।
३० तित्थपडिइत्यादिगाथाद्विकेन स्तनिकः प्रतिसमयमनंतभवहेतुं कर्म्मार्जयति ।
३१ तेणेवत्तिगाथया लौकिकमिथ्यादृष्ट्यपेक्षया प्रतिसमयमनंतगुणक्लिष्टपरिणामः स्तनिकेत्यादि ।
३४ जो पुणेत्यादिगाथात्रिकेण पुस्तकाचीर्थमुद्धृतमित्यादि परवचनं तन्निराकरणं च ।
३५ तम्हा तित्थेतिगाथया तीर्थे सति तीर्थादन्यत्र धर्म्मो न भवतीति तीर्थं च चतुर्थ्यामेव ।

३६ तव्वसउत्तिगाथया चतुर्मासकमपि चतुर्दश्यां पर्युषणा-
नुरोधात्तथाऽऽद्दतमिति ।

३८ देसिअइत्यादिगाथाद्विकेन जैनप्रवचने पंच प्रतिक्रम-
णानि, तेपु द्वे प्रतिक्रमणे रात्रिकदैवसिकलक्षणे, भाति
तीर्थेऽनुकरणं तु पाक्षिकमात्रस्य, अंतिमप्रतिक्रमण-
त्रिकं तीर्थवाह्यताचिह्नं, तीर्थानुकृतेरप्यभावात् ।

४० जेहिं चलिओ इत्यादिगाथाद्विकेन क्षपणकवत् तीर्थ-
वाह्यताऽवसातव्या ।

४१ तेण मुहेतिगाथया येन कारणेन महता चिह्नेन तीर्थवाह्यः
स्तनिकस्तेन कारणेन राकामतीयेनापि वर्द्धमानाऽऽचा-
र्येण मुखवस्त्रिकाव्यवस्थापनकुलकसंज्ञं प्रकरणं कृतं,
तत्रान्येषां का वार्त्तेति, एतद्वृत्तौ च अन्याचार्यकृतानां
ढुंढिकादीनां लेशो लिखितोऽस्तीति ।

४३ सच्छंदमईत्तिगाथाद्विकेन शास्त्रोक्तमेकमपि वचनं संद-
र्श्यमानं चेतसि नाभाति तस्य संपूर्णेनाप्यागमेन न
काचिदप्यर्थसिद्धिः, तत्र दृष्टान्तश्च ।

४४ एवमणुइतिगाथया स्तनिकमतोच्छेदकमनुयोगद्वारगतं
वाक्यं प्रदीपकल्पं चक्षुष्मत एव प्रकाशकृत् ।

४७ जं पुण वीसेत्यादिगाथात्रिकेण विंशेत्यादिभिर्या पर्युषणा
तस्याः स्वरूपनिदर्शनम् ।

४८ जं पुणेत्यादिगाथया सर्व्वजनप्रसिद्धा पर्युषणा सा च
भाद्रपद एवेति समर्थनम् ।

४९ संपइत्तिगाथया पंचकहान्यादिकमपि व्युच्छिन्नं,सर्वमपि
संप्रति चरमपंचक एवेति तात्पर्यम् ।

५० किंचागम इत्यादिगाथया स्तनिकस्य ग्राथिल्यसूचकमाह ।

५२ जं जेणमितिगाथाद्विकेन केन स्वरूपेण तीर्थांतर्वर्त्ती
स्यादितिविचारः ।

५२ तित्थं तुत्तिगाथया केन तीर्थवाह्यः स्यात् तत्स्वरूप-

भणनम्।

५३ तम्हा इतिगाथया तीर्थाहितोत्सूत्रमार्गाश्रयणापेक्षयाऽन्यतीर्थिकमार्गाश्रयणं श्रेय इति समर्थनम्।

५४ जह नामेतिगाथयाऽन्यतीर्थिकमार्गाश्रयणे दृष्टान्तः।

५५ तेणेवत्तिगाथया सिद्धांतसम्मतिः।

५६ पुण्णिमेत्यादिगाथया उक्तशेषोत्सूत्राण्यधिकृत्य तृतीयविश्रामोऽवलोकनीय इत्यतिदेशः।

५९ एवं कुवक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः।

५ इत्यांचलिकमतनिराकरणविश्रामबीजकम्

अथ सार्द्धपौर्णिमीयकमतनिराकरणविश्रामबीजकं लिख्यते

१ अह सड्ढपुण्णिमीउत्तिगाथानवकेन सार्धपूर्णिमोत्पत्तिकालनामादिव्यतिकरः।

१० कप्पवासेतिगाथया प्ररूपणोद्भावनं शेषप्ररूपणातिदेशश्च

१३ एवं कुवक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः।

इति ६ सार्धपूर्णिमामतविश्रामबीजकम्



अथागमिकमतनिराकरणविश्रामबीजकं

४ अह आगमिअइत्यादिगाथाचतुष्केण आगमिकमतोत्पत्तिकालमताकर्षकनामादिविचारः।

५ तित्थयरोत्तिगाथया श्रुतदेवताविषयकपराशंका।

८ इच्चाइत्तिगाथात्रिकेण पूर्व्वपक्षिणोक्तस्य निरासः।

९ नणु सुअइतिगाथया श्रुतदेवता भवविरहादिकमसदेव कथं दास्यतीति पराशंका।

१० नेवं निअमोत्तिगाथया स्वसत्तायां सदेव दीयते इत्येवं-नियमाभावस्तत्र दृष्टान्तश्च।

११ जो पुणत्तिगाथया यत्तु क्वापि नियमो दृश्यते तद् द्रव्यविषयो, न पुनर्भावविषयोऽपि।

१४ दव्वाउ दव्वत्तिगाथात्रिकेण जगत्स्थित्या कार्यकारण-
निगमनम् ।

१५ अण्णहत्तिगाथया यद्येकेनापि महता सर्व्वकार्य्यसिद्धिः
स्यात्तर्हि अर्हन्नमस्कार एव कर्त्तव्यो, न पुनः सिद्धादी-
नामपि ।

१८ तेणिव दीसेत्यादिगाथात्रिकेण श्रुतदेवताराधनं फलवत्,
तत्र दृष्टांतश्च ।

१९ नणु साहूणमितिगाथया त्रिस्तुतिकस्याशंका ।

२० इअ चेइतिगाथया त्रिस्तुतिकस्य सिद्धांतानभिज्ञता ।

२१ जाइसहावेतिगाथया श्रुतदेवतापेक्षापरायणस्त्रिस्तुतिको
वराकः ।

२६ जं जरुक्खाइत्ति गाथापंचकेन पक्षादिनिश्रया निषेधेऽपि
समर्थनप्रकारः, सिद्धांतसम्मतिश्च ।

२९ सुअरिसिणेत्यादिगाथात्रिकेण पक्षादिनिश्रानिषेधेऽपि न
श्रुतदेवताक्षेत्रदेवतानिषेधः, किंतु तदाराधने जिनाज्ञा
इत्यादिविचारः ।

३१ न य किंचिविइत्यादिगाथाद्विकेन प्रवचनमर्यादास्वरूपं ।

३२ तेण भगवइत्तिगाथया प्रवचनविरोधभावेन त्रिस्तुतिकः
कीदृश इत्याह ।

३३ एवं खलु तित्थुअईतिगाथया त्रिस्तुतिकमतस्य पूर्णिमा-
सदृश इत्यतिदेशः ।

३६ एवं कुवक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

७ इत्यागमिकमतनिराकरणविश्रामबीजकम्

अथ लुंपकमतविश्रामबीजकं लिख्यते

१२ अह पडिमेत्यादिगाथाद्वादशकेन लुंपकमते उपदेशवे-
षयोरुत्पत्तिस्वरूपम् ।

१६ एवं खलु अच्छेरमितिगाथाचतुष्टयेन लुंपकमतोत्पत्ता-

२३ आगमओ बलवंतेत्यादिगाथासप्तकेन आगमतोऽप्याग-
मव्यवहारिणामुपदेशो बलवान्, ततोऽपि कथंचिज्जिन-
प्रतिमाऽपि बलवतीति समर्थनम्।

२४ अह लुंपगस्सरूवमितिगाथया लुंपकमतविचारणाय
चत्वारि द्वाराणि।

२९ णणु पुच्छामोत्तिगाथापंचकेन लुंपकस्वरूपविचारणम्।

३४ णणु तुम्हाणं धम्मेत्तिगाथापंचकेन लुंपकधर्म्मस्वरूप-
विचारणम्।

३८ गब्भयहत्थीइत्यादिगाथाचतुष्टयेन जगत्स्थितिमर्यादा-
दृष्टान्तः।

४० तत्थवि किंचिइत्यादिगाथाद्वयेन यथा तीर्थेन भ्रष्टव्यं
तदाह।

४४ दोण्हंपि दो विगप्पाइत्यादिगाथाचतुष्टयेन विकल्पोद्भा-
वनपुरस्सरं जगत्स्थितिविलोपप्रसंगः, पुरुषपरंपरा च
श्रुतधर्म्महेतुः।

६० एअं उभयमणिट्ठमित्यादिगाथाषोडशकेन सिद्धांतेऽपि
प्रतिमातो जिनधर्म्मप्राप्तिः, न पुनः क्वापि पुस्तकादपि
धर्म्मप्राप्तिरिति विचारः।

६२ मोअणेत्यादिगाथाद्विकेन लिखितमात्रेण समीहितार्थ-
सिद्धिर्न भवति, तेन लुंपकमते किं संपन्नम्?।

६४ तस्सुवएसोइतिगाथाद्विकेन निष्ठुरभाषात्मको लुंपको-
पदेशस्तद्विकल्पितसिद्धांतसम्मतिः सव्वे पाणा० भूआ
इत्यादि, तद्वृत्तौ च तदुद्भावितसम्मतेः सम्यग्विचारः

६८ एवं निट्ठुरवयणमित्यादिगाथाचतुष्केण लुंपकोक्तनिष्ठुर-
भाषाया निराकरणम्।

७२ अह बहुवित्तेत्यादिगाथाचतुष्टयेन लुंपकमेव प्रश्नविष-
यीकृत्य लुंपकनिराकरणम्।

७८ से बेमि जे अतीआइत्यादिगाथाषट्केन से बेमि अतीया

पडुप्पण्णा अणागया इत्यादिसम्यक्त्वपराक्रमाध्ययनोद्देशकस्य पारमार्थिककार्यकथनम्।

९१ नणु नइउत्तार इत्यादिगाथात्रयोदशकेन नद्युत्तारे संख्यानियमादेस्तात्पर्यभणनेन लुंपकमतनिराकरणम्।

९६ जिणकप्पेइत्यादिगाथापंचकेन यद्यत् प्रतिषिद्धं तत्तद्धर्म एवेति पराकूतमूढनियमं निराकरोति।

९७ नणु उवगरणा इत्यादिगाथया प्रतिवंद्या लुंपकं दूषयति।

९८ णणु उवगरणमितिगाथया ज्ञानादीनां मूलोपकरणानि।

९९ नियनियकज्जेतिगाथया उपकरणमपि कथंचिदधिकरणं स्यात्।

१०० एएणं जिणपडिमेतिगाथया सिद्धांतजिनप्रतिमयोर्युगपदुत्पत्तौ लुंपकमतं निरस्तं स्यात्।

१०३ जिणपडिमेत्यादिगाथात्रिकेण जिनप्रतिमासिद्धांतयोर्युगपदुत्पत्तौ परस्परं सापेक्षताभणनम्।

१०७ असुद्दा अह्रो इत्यादिगाथाचतुष्टयेन साधुश्रावकयोरन्योऽन्यसापेक्षता।

१०८ सिद्धांता इतिगाथया प्रतिमाविचारे क्रियमाणे सिद्धांतप्रतिमातीर्थानां क्रमेण बलवत्त्वम्।

११६ सव्वं खलु इत्यादिगाथाष्टकेन सापेक्षतायां स्याद्वादरचनाप्रकारः।

११९ एवं घय२ इत्यादिगाथात्रिकेण लुंपकमतं युक्त्या दूषयति।

१२१ नणु जिणेत्यादिगाथाद्विकेन श्रावकधर्म्मेण कुपाक्षिकधर्म्मस्तुल्य इति परः शंकते।

१३३ जीवो अणाइइत्यादिगाथाद्वादशकेन श्रावककुपाक्षिकयोर्भूयोऽतरं दृष्टान्तपुरस्सरमाह।

१३९ अह लुंपगेतिगाथापट्केन लुंपकमतसिद्धांतस्वरूपं निरूप्य तन्निराकरणम्।

१४३ तित्थं खलु इत्यादिगाथाचतुष्टयेन जैनसिद्धांतव्यवस्था-

पनाय प्रसंगतस्तीर्थस्वरूपस्यातिदेशमाह ।

१४५ एवं तित्थेत्यादिगाथाद्विकेन तीर्थसिद्धांतयोरन्योऽन्यं संगतिः ।

१४८ तेणेवेगंपि पयमितिगाथात्रिकेण प्रागुक्तस्य तात्पर्यं दर्शयन् जिनप्रवचने पदमात्रस्यापि व्याख्याने जिनप्रतिमाप्रासादप्रतिष्ठादिसिद्धिः, एतद्वृत्तौ च तद्रचनादिग्दर्शनम् ।

१५० अह भरहेत्यादिगाथाद्विकेन केन श्रावकेण प्रतिमा कारिता केन च साधुना प्रतिष्ठितेत्यादिविचारः ।

१५२ कज्ज कारणेतिगाथया कार्यं कारणजन्यमितिकृत्वा प्रतिमायाः सम्यक्त्वकारणत्वं दर्शयति ।

१५४ चेइअसद्दत्थेत्यादिगाथात्रिकेण सिंहावलोकनन्यायेन पुनरपि द्वाररचना ।

१५५ भगवइइतिगाथया चैत्यशब्देन प्रकृते जिनप्रतिमैव, न साधुर्नवाऽर्हन् इति सूत्रपाठत एवाह, एतद्वृत्तौ च सूत्रपाठेनापि ।

१५७ चेइअवंदणेत्यादिगाथाद्विकेन जिनप्रतिमानामुपयोगो नियतक्रियासु साधूनां श्रावकाणाञ्च ।

१५९ नाणानाणप्पमुहाइत्यादिगाथाद्विकेन आनंदादिश्रावकाणामुपधानवहनं, तद्वृत्तौ च सूत्रपाठोऽपि ।

१६१ संखेवेत्यादिगाथाद्विकेन सिद्धांते क्वचित् संक्षेपः क्वचिद् विस्तरः, तत्र विरोधो न भवतीति विचारः ।

१६२ अण्णहत्तिगाथया अन्यथाऽतिप्रसंग इति विचारः ।

१६३ सव्वकुवक्खुइतिगाथया श्रीमहानिशीथसूत्रं सर्व्वकुपाक्षिकोच्छेदकं,अत एव तपागणस्यैव प्रामाण्यं, नेतरेषाम् ।

१७० लुंपगमितुइत्यादिगाथासप्तकेन लुंपकस्य हितोपदेशः ।

१७२ विश्रामोपसंहारः ।

इति ८ लुंपकमतनिराकरणविश्रामबीजकम्



अथ कटुकमतबीजकं लिख्यते

२ अह कडुअत्तिगाथाद्विकेन कटुकमतोत्पत्तिकालादिनिदर्शनम्।

८ अव्वत्तेत्यादिगाथाषट्केन कटुकोपदेशः।

१८ पयडक्खरत्तरहुइत्यादिगाथादशकेन कटुकमतनिराकरणयुक्तयः।

२१ जं पुण तत्थत्तीत्यादिगाथात्रिकेण साधूनामभावे किं स्यादित्याह।

२२ जह बालिशा इत्यादिगाथया दृष्टान्तः।

२३ जं पुण जहुत्तकिरिअत्ति संप्रति यथोक्तक्रियाकारिणः साधवो न संतीति दुर्व्वचनेन किं स्यादिति विचारः।

२५ जेणं जहुत्तेत्यादिगाथाद्विकेन यथोक्तक्रियाकारिणः साधवः संप्रत्यपि संति, तत्र दृष्टान्तश्च।

२८ एवमहेत्यादिगाथाद्विकेन कालानुभावेन साधुस्वरूपमाह

३४ सव्वेऽवि मुत्तिइत्यादिगाथासप्तकेन उत्तरपथसाधुनिश्रया धर्म्मः कुर्म्म इति कदाशानिराकरणयुक्तयः।

३८ संपुण्णमेसेत्यादिगाथाचतुष्टयेन कटुकमते देवगुरुधर्माणां परमाशातनैव, स्वरूपमाह।

३९ *गिहिजिणेत्यादिगाथया कटुकमते शेषोत्सूत्राणामतिदेशमाह।*

४२ एवं कुवक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः।

इति ९ कटुकमतनिराकरणविश्रामबीजकम्



अथ बीजामतबीजकं लिख्यते

२ अह बीजमएत्तिगाथाद्विकेन बीजोत्पत्तिकालादि।

७ सोऽवि गओत्तिगाथापंचकेन तन्मतवृद्धिहेतुः।

९ सुअरित्तेत्यादिगाथाद्विकेन तदुपदेशनिराकरणम्।

१२ एवमित्यादिगाथात्रिकेण विश्रामोपसंहारः ।

इति १० बीजामतनिराकरणविश्रामबीजकम्



अथ पाशमतनिराकरणबीजकं लिख्यते

४ अह पासेत्यादिगाथाचतुष्टयेन उत्पत्तिकालनिमित्तादिविचारः ।

५ सद्दहणेतिगाथया मताकर्षकस्य स्वरूपम् ।

१६ तस्सुवएसोइत्यादिगाथादशकेन पाशस्योपदेशस्वरूपम् ।

१७ जं पासेण येतिगाथया पाशोक्तमतं विचित्रं दर्शितम् ।

१८ चरिआणुवाएत्तिगाथया चरितानुवादस्वरूपमाह ।

२० धम्मोऽविअत्तिगाथाद्विकेन प्रागुक्तसमर्थनाय धर्मस्वरूपमाह ।

२१ एवं धम्मे इतिगाथया जिनाज्ञयैव धर्मो नान्यथेति समर्थनम् ।

२३ धम्मो खलु इत्यादिगाथाद्विकेन धर्ममात्रे जिनाज्ञैवेति व्यवस्थापना ।

२४ णाणस्सत्तिगाथया पाशोक्तमतविनाशाय ज्ञानादीनामाराधनास्वरूपं ।

२५ पोत्थाईतिगाथया ज्ञानाद्युपकरणानि ।

२६ उस्सग्गो इतिगाथया साधुश्रावकमार्गौ उत्सर्गापवादौ ।

३१ उस्सग्गो इत्यादिगाथापंचकेनोत्सर्गापवादयोर्नृपतिप्रजाज्ञातं, पथि विश्रामवदपवादः ।

४४ जो भणईत्यादिगाथात्रयोदशकेन जिनकल्पे उत्सर्गः जिनस्थविराणामाहारवन्निद्रावस्त्रादि चरणार्थमाज्ञया, न प्रमादता, सम्यग्दृष्टेरप्रमादः,देशविरतेरनारंभवच्च मुनेः प्रमादः ।

५३ जं पुणेत्यादिगाथानवकेन पूजावसानेर्यानिरासः ।

इति प्रवचनपरीक्षाबीजकम् ।

## उत्तरार्ध साक्षिविशेषनामानि

## साक्षिग्रन्थनामानि



## साक्षिग्रन्थपाठादि

रचन
प धा
||३४५||

साक्षिपाठ-सूचा

## उत्तरार्धानुक्रमः

३४-५२ सूरिपरंपराऽभावान्न जैनाः इत्यादिमन्त्रभाषाभा-
न्ते पुस्तकगर्भताभावः (पुस्तकोत्थी) गर्भ-
ग्रहीरदृष्टान्तः तुम्बकानामप्रकृता पुस्तकधर्मणो
नोपदेशकृता भावमानगाथाव्याख्या केवलसूत्रा-
पगणा उभयभ्रष्टता देवलिखनं(इति पथप्राप्तिः)५३

५१-१३३ सूत्रपदेशे मूर्तिपूजादिनिषेधः सच्चे पाणेत्यादि-
सूत्रार्थः सत्ये पूजापोषणयोः पूजायां प्रासादे अर्ह-
च्चन्द्रार्थे निर्युक्तौ च विचारः, मूर्तेर्निर्मापकः
संघपतिः भक्तप्रकीर्णे गाथा से चेमित्यालापक-
परमार्थः नपुंसकत्वं ईर्याभ्यानं सामायिके न पूजा
गेहे उत्सर्गः पूजायां नेयां नदीसंख्याकल्पा
प्रतिक्रमणसंख्या उत्सर्गापवादयोगाभ्यां न प्रति-
षेधोऽभर्मः जिनकल्पादौ वैयावृत्त्यादिनिषेधः न
सापविषयपदमकल्प्यं उपकरणार्थं नपुंसकः पुस्तक-
प्रतिमाद्युपकरणं; नृजलेन मषी, प्रतिमाशास्त्रयोः
महोत्पत्तिः भरतसंप्रतिद्रौपद्यः साधुश्रावकधर्मौ
सापेक्षौ आगमाद् बलवती मूर्त्तिः सापेक्षतायां नृप-
पुत्रमित्रशीर्षशेषाङ्गदृष्टान्ताः नामादिजिना अव-
यवाः(मरीचिः)मूर्त्तित्रयं रथचक्रवद् द्रव्यभावस्तवौ
श्रावक आराधकः राजभक्तनरत्रिकम् । १३०

१३४-१५१ केवलसूत्रं शुकपाठः पुस्तकसिद्धान्तनिरासः
दीक्षादिप्रवृत्तिः किं न पुस्तकात् ? जिनाद् गणधरः
जिनादेव तीर्थं एकपदमपि सर्वापेक्षं प्रतिपदं मूर्त्तिः
उपक्रमादयः प्रतिमापूजादिसाक्षिणः, भरतादिः
कर्ता श्रीनागादिः प्रतिष्ठाता गौतमादिः स्तोता
मूर्तेः, प्रतिमादिसाधनं ज्ञानादेः । १०८

१५२-१५४ चैत्यस्य न साधुरर्थः (जीवाभिगमादि) न
पृथग्विमानानि सामानिकानां (दोलागंडनं) न

विमानेशो मिथ्यादृष्टिः मिथ्यादृशां नानुमोदना, चैत्यस्य न ज्ञानार्थता साध्वर्थता अर्हदर्थता वा २१३

१६६-१६४ क्रियासु प्रतिमोपयोगः नन्दीविधौ च, श्रावकोपधाने महानिशीथोक्तविधिः संक्षेपविस्तारयोरविरोधः अनुपलंभस्याविरोधिता, अन्यथाऽतिप्रसंगः महानिशीथप्रामाण्ये हेतुः । २२३

१६५-१७३ लुंपकस्योपदेशः,विद्युत्पाताभावः पापात्, नीचस्पर्शभयाद्देवचपेटाऽभावः, उभयकर्मणः शिक्षाऽसामर्थ्यं अवर्णवादिहंतृता उपसंहारः । २२८

९ कटुकमतनिराकरणविश्रामः

१-३४ तदुत्पत्तिवर्षादि उपदेशश्चास्य (साध्वनंगीकारः) गुर्जरत्रादौ साध्वनध्यक्षता युगप्रधानाविरहः तन्नामाचार्याभावः समाधाने श्रावकपार्श्वस्थाद्यभावापत्तिः युगपद् युगप्रधानाः गूर्जरत्रायां साध्वभावे तीर्थाभावः अनुहरणाभावः केवलमिथ्यादृष्टिर्न पूजकः न च श्रावकः श्रद्धाने यथोक्ताः क्रियायां वैचित्र्यं ऋजुजडादयो मुक्तिपथिकाः उत्तरापथसाधुकथने कटत्कारदृष्टान्तः देवर्धिप्रमुखा भाष्यचूर्ण्यादयश्च गूर्जरत्रायामेव वर्षास्वपि विहारानुज्ञानान्न क्षेत्रान्तरनिश्रा, देवाशातना (क्राव्यानि) न पादघटिकोत्तारणं गुरुलोप आशातना देशकत्वाद् धर्मलोपी ।

१० बीजामतनिराकरणो दशमो विश्रामः

१-१२ तदुत्पत्तिवर्षादि भूनडशिष्यो बीजा प्रतिमामान्यता दंडकयुक्तो लुंपकवेषः आगमिकसमः उपसंहारः २५५

११ पाशचन्द्रमतनिराकरणो विश्रामः ।

१-४३ तदुत्पत्तिवर्षादि नागपुरीय उपाध्यायः छेदोच्छेदमतिः विजयदानसूर्युक्तिप्रयुक्ती विधिचरित-

यथास्थितवादचर्चा तत्तिरस्कारः यथार्थाख्यानानि धर्मस्वरूपतदाराधना ज्ञानाद्युपकरणानि उत्सर्गापवादस्वरूपं प्रकृतिनृपचत्तौ उत्सर्गोपजीवकोऽपवादः विश्रामवदपवादः न केवलोत्सर्गः आज्ञामयौ कल्पौ न निद्रा प्रमादः अवज्ञा प्रमादः देशविरतेरप्रत्याख्यानक्रियाऽभावः। २९२

४४–५६ पूजान्ते नेर्या सम्यक्त्वसंवरे द्रव्यस्तवः तदीय आज्ञानाज्ञाविचारोऽनर्थकः ।

५७–६४ श्रावकाणां जिनभवनादि प्रपावत् आज्ञाविधिवादयोनैक्यं दृष्टान्ताश्चात्र विधिवादतात्पर्यं चरितानुवादादावतिदेशः आज्ञास्वरूपं

६५–६९ आवश्यकोपधानादौ तन्मतं निरासश्चास्य उपधानाद्यतिदेशः उपसंहारः ।

इति पाशचन्द्रमतनिराकरणविश्राम एकादशः



## इति प्रवचनपरीक्षायां उत्तरार्धानुक्रमः

इति मोक्षमार्गाराधनाकल्पनाकल्पद्रुमोपमश्रीमत्तपागच्छातुच्छानुपमसौधासाधारणाधाध्यस्तम्भायमानमहोपाध्यायश्रीधर्मसागरोपाध्याय प्रणीता स्वोपज्ञा

श्रीप्रवचनपरीक्षा समाप्ता ।